उच्चतरमाध्यमिककक्षायाः पाठ्यक्रमः

# भारतीयदर्शनम् - ३४७

# पुस्तकम् - २




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# उच्चतरमाध्यमिककक्षा - भारतीयदर्शनम् (३४७)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**स्वामी आत्मप्रियानन्दः (समितेः अध्यक्षः)**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. नागराजभट्टः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः, (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः
कोलकाता - ७००००६ (प.वङ्गम्)

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्, नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-४, १५, १६, २७)**
**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**(पाठः ५-८,२१-२३)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ९-१०)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ११-१४, २४-२६)**
**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः, कोलकाता - ७००००६ (प.वङ्गम्)

**(पाठः १७-१८)**
**डॉ. श्रीजित् टी.जि**
साहाय्यकप्राध्यापकः (संस्कृतविभागः)
के.एस.डी.बी. महाविद्यालयः, पत्रालयः - शास्तांकोट्टा
मण्डलम् - कोल्लम् - ६९०५२० (केरलम्)

**(पाठः १९-२०)**
**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**संगणकीयविन्यासः**
**श्रीमान् राहुल-कुलकर्णी**
आचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्ग्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं भारतीयदर्शनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

भारतीयदर्शनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति। भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

भारतीयदर्शनस्य प्रपञ्चः अति महान्। बहूनि दर्शनानि च सन्ति। मुख्यानां दर्शनानां संक्षेपेण परिचयः माध्यमिककक्षायाः पाठ्यक्रमे प्रदत्तः। तेषु कस्यापि एकस्य दर्शनं प्रक्रियापुरःसरम् अध्ययनं क्रमशः कर्तव्यम्। ततः अन्येषु अपि व्युत्पत्तिमान् भवति छात्रः इति विषयं मनसि निधाय अद्वैतवेदान्तदर्शनस्य विशिष्य परिचयः अस्मिन् पाठ्यविषये वर्तते। अद्वैतवेदान्तस्य ज्ञानं सांख्यदर्शनज्ञानेन सुलभं भवति इति धिया सोऽपि विषयः अत्र अन्तर्भावितः अस्ति। एवञ्च प्रमाणानि इति ईषत् क्लिष्टः परन्तु गुरुत्वपूर्णो विषयः अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः भारतीयदर्शनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। सति समये छात्रः तस्य अध्ययनेन ज्ञानपीनः भवितुमर्हति। उच्चतरमाध्यमिककक्षाया भारतीयदर्शनम् इति विषयस्य अध्ययनेन अद्वैतवेदान्ते प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री अद्वैतवेदान्तस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति। अस्य अध्ययनेन अद्वैतवेदान्तस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। प्रमाणानि च स जानीयात्।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥**

**ॐ शान्ति: शान्ति: शान्ति:॥**

भवत्कल्याणकामी

डॉ. राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# पुस्तकम्- १



# पुस्तकम्- २

# भारतीयदर्शनम्

# उच्चतरमाध्यमिककक्षा

## द्वितीयं स्वाध्यायसोपानम्

## ११

# ब्रह्म

## प्रस्तावना

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इति अद्वैतवेदान्तसिद्धान्तानां सारः। इदं परिदृश्यमानं नामरूपाभ्यां व्याकृतं जगत् ब्रह्मणि आरोपितम्। सृष्टेः पूर्वं केवलं ब्रह्म एव आसीत् इति "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतयः असकृत् निर्दिशन्ति। जीवश्च स्वरूपतो ब्रह्म एव। अज्ञानकारणात् स्वस्वरूपम् अजानन् जीवः आत्मानं बद्धं मन्यते, सुखदुःखादिकं चानुभवति। श्रवणमनननिदिध्यासनैः अखण्डाकारचित्तवृत्तेरुदयात् अज्ञाननाशो भवति, जीवश्च स्वस्वरूपं प्राप्नोति इव। इवपदोपादानं च प्राप्तस्य एव प्राप्तिवशात्। यथा कण्ठगतचामीकरः अज्ञानवशात् नष्टः इति विजानन् जनः केनचित् विज्ञापितः सन् प्राप्नोति इव तथैव अज्ञानकारणात् स्वस्वरूपम् अजानन् जीवः अखण्डाकारचित्तवृत्तेरुदयेन अज्ञाननाशात् स्वस्वरूपं प्राप्नोति इव। परन्तु यद् ब्रह्मतत्त्वं केन्द्रीकृत्य आवर्तमानं वेदान्तशास्त्रं, किं तस्य ब्रह्मणः स्वरूपमिति सुतरां विज्ञेयम्। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति सिद्धवचनमनुसृत्य ब्रह्मप्रतिपादनाय तल्लक्षणं विचारणीयम्। अतः अस्मिन् पाठे ब्रह्मणः लक्षणमस्माभिः आलोच्यते।

लक्षणं हि द्विविधं भवति स्वरूपलक्षणं तटस्थलक्षणं च। श्रुतौ ब्रह्मण उभयविधमेव लक्षणं प्रतिपादितम्। अस्मिन् पाठे ब्रह्मणो द्विविधमेव लक्षणम् आलोचयिष्यते। द्विविधं च ब्रह्म श्रुतिषु आलोच्यते – सगुणं निर्गुणं च। अस्मिन् पाठे सगुणब्रह्मविषये निर्गुणब्रह्मविषये च आलोचनं विधास्यते।



## पाठस्य उद्देश्यानि

पाठमेतम् अधीत्य छात्राः अधोलिखितान् विषयान् ज्ञास्यन्ति –

- ब्रह्मपदस्य अर्थः
- लक्षणद्वैविध्यम्
- ब्रह्मणः स्वरूपलक्षणम्
- ब्रह्मणः तटस्थलक्षणम्
- निर्गुणब्रह्मस्वरूपम्
- सगुणब्रह्मस्वरूपम्



## ११.१) ब्रह्मपदार्थः

'बृहि वृद्धौ' इति वृद्ध्यर्थकाद् बृह्धातोः 'बृंहेर्नोऽच्च' इति सूत्रेण कर्तरि मनिन्-प्रत्यये ब्रह्मशब्दो निष्पद्यते। बृंहते वर्धते इति ब्रह्म, बृंहति वर्धयति प्रजाः इति वा ब्रह्म। निरतिशयमहत्त्वलक्षणवृद्धिमत्त्वाद् सर्वव्यापकत्वाद् ब्रह्मेति अन्वर्थम् अभिधानम्। उद्धृतं च तस्माद् भामतीकृता – बृहत्त्वाद् बृंहणत्वाद्वात्मैव ब्रह्मेति गीयते इति। महाभारते शान्तिपर्वणि अपि उच्यते – "बृहद् ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः" इति। अतो यस्माद् बृहद् नास्ति किञ्चिद्, यच्च देहादीनां परिणमयितृ तद् ब्रह्मेति सिध्यति। देशकालवस्तुभिः अपरिच्छिन्नत्वात् च तस्य सर्वव्यापकता। सर्वत्र विद्यमानत्वात् कालत्रयेऽपि सत्त्वात् सर्ववस्तुषु अनुस्यूतत्वात् ब्रह्मणः देशतः कालतः वस्तुतश्च परिच्छेदो न सम्भवति।

ब्रह्म एव आत्मा। 'अत सातत्यगमने' इति सातत्यगमनार्थकाद् अत्-धातोः 'सातिभ्यां मनिन्मनिणौ' इति सूत्रेण कर्तरि मनिन्-प्रत्यये आत्मन् इति शब्दो निष्पद्यते। अतति सन्ततभावेन जाग्रदादिसर्वावस्थासु अनुवर्तते इत्यात्मा। एतद्विहायापि आप्-धातोः आपूर्वकाद्-दाधातोः अद्-धातोश्च आत्मशब्दनिष्पत्तिः प्रतिपाद्यते। सुरेश्वराचार्येण बृहदारण्यकभाष्यवार्त्तिके उक्तं –

**यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।**

**यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते॥ इति।**

अतः यो हि सर्वं प्राप्नोति, यः सर्वम् गृह्णाति, यः सर्वं भक्षयति, यश्च सततं विराजमानः सः आत्मा इत्यर्थः सिध्यति। अनेन आत्मनः सर्वव्यापकत्वं सर्वग्राहकत्वं सर्वनाशकत्वं सततविद्यमानत्वञ्च ज्ञायन्ते।

## ११.२) लक्षणस्वरूपम्

'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः, न तु उद्देशमात्रेण' इति हि लोकस्थितिः। अतः किं तावद् ब्रह्मणो लक्षणमिति विचार्यम्। लक्षणं नाम लक्ष्यमात्रे विद्यमानः असाधारणो धर्मः। यथा सास्नावत्त्वं गोर्लक्षणम्। तच्च लक्षणं द्विविधं भवति स्वरूपलक्षणं तटस्थलक्षणं च। किं तावत् स्वरूपलक्षणमिति चेदुच्यते वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण – "स्वरूपमेव लक्षणं स्वरूपलक्षणम्" इति। स्वरूपत्वे सति यद् व्यावर्तकं तत् स्वरूपलक्षणमिति तात्पर्यम्। यथा मधुरत्वं हि स्वरूपं शर्करायाः, मधुरत्वं च शर्करां तद्भिन्नेभ्यो लवणादिभ्यो व्यावर्तयति। अतो मधुरत्वं शर्करायाः स्वरूपलक्षणम्। यावत्कालं च शर्करा तिष्ठति तावत्कालं च शर्करायां तत्स्वरूपं मधुरत्वं च तिष्ठति। न हि वस्तु कदापि स्वस्वरूपं जहाति।

तटस्थलक्षणविषये उच्यते वेदान्तपरिभाषायां – "तटस्थलक्षणं तु यावल्लक्ष्यकालम् अनवस्थितत्वे सति यद् व्यावर्तकम्" इति। यावत्कालं लक्ष्यस्य स्थितिः तावत्कालं लक्ष्ये यद् अविद्यमानमपि लक्ष्यं तद्भिन्नेभ्यो व्यावर्तयति तत् तटस्थलक्षणम्। यथा गन्धवत्त्वं पृथिव्याः तटस्थलक्षणम्। नैयायिकमते उत्पन्नं द्रव्यं क्षणमगुणम् अक्रियञ्च तिष्ठति। अत उत्पन्ना पृथिवी गन्धगुणरहिता, उत्पत्तेः उत्तरक्षणे पृथिव्यां समवायसम्बन्धेन गुणः उत्पद्यते इति नैयायिकराद्धान्तः। अतो



गन्धः पृथिव्यां सततम् अविद्यमानोऽपि पृथिवीं तदितरेभ्यो जलादिभ्यो व्यावर्तयति। तस्माच्च गन्धः पृथिव्याः तटस्थलक्षणम्।

एवं उपनिषद्भ्य एव ब्रह्मणः स्वरूपलक्षणं तटस्थलक्षणं च ज्ञेयं तद् ब्रह्म उपनिषत्परं, तं त्वौपनिषदं पुरुषं पृच्छामि, अमायमप्यौपनिषदम् इत्यादिश्रुतिषु तस्य उपनिषन्मात्रवेद्यत्वकथनात्। किं तावद् ब्रह्मणः स्वरूपलक्षणं किं वा तटस्थलक्षणमिति अधस्ताद् आलोच्यते।



## पाठगतप्रश्नाः १

१. ब्रह्मपदस्य व्युत्पत्तिः का।

२. ब्रह्मशब्दस्य व्युत्पत्तिगतः अर्थः कः।

३. आत्मपदस्य का व्युत्पत्तिः।

४. आत्मपदस्य व्युत्पत्तिगता अर्थाः के।

५. किं तावत् स्वरूपलक्षणम्।

६. किं नाम तटस्थलक्षणम्।

७. तटस्थलक्षणस्य किं तावद् उदाहरणम्।

८. ब्रह्मणः स्वरूपलक्षणं तटस्थलक्षणं वा कुतो विज्ञायते।

## ११.३) ब्रह्मणः स्वरूपलक्षणम्

ब्रह्मणः स्वरूपलक्षणप्रतिपादकानि सन्ति बहूनि श्रुतिवाक्यानि। सत्यं ज्ञानमनन्तं ब्रह्म, प्रज्ञानं ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्यादिश्रुतिवाक्येषु ब्रह्मणः स्वरूपलक्षणमालोचितम्। तथाहि ब्रह्म सत्यस्वरूपं ज्ञानस्वरूपम् अनन्तस्वरूपम् आनन्दस्वरूपञ्च। यथा प्रकृष्टप्रकाशश्चन्द्रः इत्यादिवाक्येषु प्रकृष्टप्रकाशः चन्द्रस्य स्वरूपान्तर्भूतः तथैव सत्यज्ञानादिकं ब्रह्मणः स्वरूपमेव।

तैत्तिरीयोपनिषद्भाष्ये शङ्कराचार्येण ब्रह्मलक्षणविचारप्रसङ्गे उच्यते यत् सत्यज्ञानानन्तपदानि न हि विशेषणानि ब्रह्मणः। ब्रह्म एकमेव, ब्रह्मसजातीयद्वितीयवस्तुनः अभावात् विशेषणानां व्यर्थता एव स्यात्। उच्यते च - सम्भवव्यभिचाराभ्यां स्याद्विशेषणम् अर्थवत् इति। अतः सत्यज्ञानानन्तपदानि लक्षणं ब्रह्मणः। लक्षणं हि लक्ष्यं सर्वतः व्यावर्तयति, विशेषणं हि विशेष्यं सजातीयेभ्य एव व्यावर्तयति। एतेषां सत्यज्ञानानन्तपदानां परस्परनैरपेक्ष्येण साक्षात् ब्रह्मपदेनान्वयः। तेन सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्म इति ब्रह्मलक्षणानि फलितानि भवन्ति। ततः सामानाधिकरण्यवशात् सत्यज्ञानानन्तपदानां परस्परमन्वयो भवति। पूर्वमीमांसादर्शने पद्धतिरियं पार्ष्ठिकान्वय इति प्रसिद्धः। तथाहि अरुणया पिङ्गाक्ष्या गवा एकहायन्या सोमं क्रीणाति इति वाक्ये अरुणात्व-पिङ्गाक्षित्व-एकहायनित्वादिगुणानां प्रथमं क्रियायामन्वयो भवति। गोपदं करणत्वेन क्रियया अन्वेति। गोद्रव्यस्य क्रयक्रियया अन्वयः उपपद्यते, परन्तु अरुणत्वादिगुणानां क्रिययायामन्वयो नोपपद्यते। अतो विचार्य गुणाः द्रव्यमाश्रित्य एव क्रियया अन्वेति इति



निश्चीयते। एकस्मिन गोद्रव्ये विद्यमानत्वात् अरुणात्वपिङ्गाक्षित्वैकहायनित्वानां परस्परमन्वयो भवति। अतः सत्यज्ञानानन्तादीनां ब्रह्मणा पृथगन्वये सत्यपि विचारद्वारा परस्परान्वितानामेव एव तेषां ब्रह्मप्रतिपादकता ज्ञायते।

यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत् सत्यम्। स्वस्वरूपव्यभिचारः विकारेषु एव दृश्यते। तथाहि दुग्धस्य स्वरूपपरिवर्तनकारणाद् एव दध्नः समुत्पत्तिः। अतो न हि दध्नः दुग्धस्य वा सत्यत्वं सम्भवति। अतो ब्रह्मणः सत्यत्वकथनेन विकारेभ्यो ब्रह्मणो विलक्षणता स्पष्टं प्रतिपादिता। कारणं हि ब्रह्म चराचरात्मकप्रपञ्चस्य।

ननु कारणत्वात् मृत्तिकावद् जडत्वं न हि ब्रह्मणश्चिन्तनीयम्। उच्यते च तस्माद् ज्ञानं ब्रह्मेति। अत्र च ज्ञानपदं भावे ल्युट्-प्रत्ययेन निष्पन्नमिति बोध्यम्। न हि नैयायिकाभिमतं ज्ञानकर्तृत्वम् अत्र प्रतिपादितम्। कर्तृत्वम् अपि विकार एव, ब्रह्मणि विकारे स्वीकृते न हि तस्य सत्यत्वं सम्भवति। ब्रह्मणो ज्ञानकर्तृत्वे अङ्गीकृते सति ज्ञेयात् ज्ञानाच्च तस्य भेदात् वस्तुतः परिच्छिन्नस्य तस्य अनन्तता नैव सम्भवति। यथा सवितुः प्रकाशः, यथा वा अग्नेः उष्णता तथैव ज्ञानं ब्रह्मणः स्वरूपम्। तच्च ज्ञानं नित्यं कारणान्तरनिरपेक्षत्वात्, सूक्ष्मञ्च कालाकाशादीनां कारणत्वात्।

न च ज्ञानस्वरूपस्य ब्रह्मणः लौकिकज्ञानवद् अन्तवत्त्वं कल्पनीयम्। उच्यते तस्माद् अनन्तं ब्रह्मेति। ब्रह्मणः देशतः कालतः वस्तुतः अन्तस्य अभावात् अनन्तता सिध्यति। ब्रह्म एव अखिलस्य जगतः कारणम्। कार्यं व्याप्य कारणं तिष्ठति। अतो जगद् व्याप्य ब्रह्मणो विद्यमानत्वात् तस्य सर्वव्यापित्वं सिध्यति। कालत्रये ब्रह्मणोऽसत्त्वं कदाचिदपि न सम्भवति इति तस्य कालतः अन्तता नास्ति। ब्रह्मव्यतिरिक्तस्य द्वितीयवस्तुनः अभावात्, सर्ववस्तुषु अनुस्यूतत्वाद् वा ब्रह्मणः वस्तुतः परिच्छेदोऽपि न सम्भवति। अतः सर्वविधान्तताव्यावर्तकम् अनन्तपदं ब्रह्मणो लक्षणं भवति।

विज्ञानमानन्दं ब्रह्म, आनन्दं ब्रह्मेति व्यजानात्, आनन्दं ब्रह्मेति व्यजानात्, यो वै भूमा तत्सुखम् इत्यादिश्रुतिषु ब्रह्मण आनन्दस्वरूपता ख्यापिता। अस्य चानन्दस्य परमता साधनपरतन्त्रताभावात् अविनाशित्वाच्च। न चात्र दुःखाभाव एव आनन्दशब्दस्य अर्थः, लौकिकानन्दो हि ब्रह्मस्वरूपानन्दस्य मात्रेति श्रुतिप्रतिपाद्यस्यार्थस्य दुर्निरूप्यत्वात्। न हि अभावस्य आधिक्यन्यूनताचिन्तनं विधीयते बुधैः। अतो दुःखाभाव एव मोक्षः इति सांख्यनैयायिकसिद्धान्तः दूषित एव। ननु आनन्दं ब्रह्मेत्यत्र पुंलिङ्गिनः आनन्दशब्दात् मत्वर्थीये अच्प्रत्यये निष्पन्नस्य आनन्दपदस्य आनन्दविशिष्टमित्यर्थः, अन्यथा पुंलिङ्गे विद्यमानस्य आनन्दशब्दस्य ब्रह्मविशेषणतया नपुंसके कथं व्यवहारः इति चेन्न, आनन्दो ब्रह्मेति व्यजानात् इत्यादिश्रुतिषु ब्रह्मसामानाधिकरण्येन एव पुंलिङ्गिनः आनन्दपदस्य श्रवणात्। अत आनन्दं ब्रह्मेत्यादिषु स्थलेषु ब्रह्मस्वरूपतयैव आनन्दपदं व्याख्येयमन्यथा श्रुतीनां मिथो विरोधः समापतेत्।

सत्यज्ञानानन्तानन्दपदानि ब्रह्मणः लक्षणानि। लक्षणानि च लक्ष्यमितरेभ्यो व्यावर्तयन्ति। तथाहि सत्यपदं ब्रह्म अनृतविकारेभ्यो व्यावर्तयति, ज्ञानपदं जडेभ्यो ब्रह्म व्यावर्तयति, अनन्तपदं च अन्तविशिष्टवस्तुभ्यो ब्रह्म व्यावर्तयति, आनन्दपदं च दुःखाद् ब्रह्म व्यावर्तयति। एवं सत्यादिपदानां अनृतादिधर्मनिवृत्तिपरत्वात् ब्रह्मणः च अप्रसिद्धत्वात् सत्यादिवाक्यस्य शून्यार्थता एवेति चेत् न,



सत्यादीनां विशेषणत्वे सत्यपि लक्षणार्थत्वात् लक्षणस्य च लक्ष्यसत्त्वे एव प्रयोज्यमानत्वात् न शून्यार्थतापत्तिः। सत्यादिपदानां विशेषणत्वेऽपि न शून्यार्थता सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनां वाक्यानां, विशेषणानां विशेष्यनियन्तृत्वात्। असति विशेष्ये विशेषणोपादानस्य असम्भवात्। ननु सत्यज्ञानानन्तपदानां ब्रह्मप्रतिपादकत्वात् तेषां पर्यायवाचकत्वस्य आपत्तिः भवति, तथात्वे सत्यपदेनैव ब्रह्मणो निर्देशात् ज्ञानानन्तादिपदानाम् उपादाने पुनरुक्तिः स्यात्। अत्रोच्यते, सत्यादिपदानि यद्यपि ब्रह्म एव बोधयन्ति तथापि तेषां शक्यतावच्छेदकस्य व्यावर्त्यस्य भेदात् न हि तेषां पर्यायतापत्तिः।

ब्रह्मणश्च गुणक्रियाजात्यादिरहितत्वाद् शब्दवाच्यता न सम्भवति। अतो न सत्यादिशब्दैः ब्रह्म अभिधीयते। सत्यादिपदैर्हि ब्रह्म लक्ष्यते। उच्यते तस्मात् शङ्करभगवत्पादैः – सत्यादिशब्दा इतरेतरसन्निधानादन्योऽन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यान्निवर्तका ब्रह्मणो लक्षणार्थाश्च भवन्तीति। तेन च न यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, अनिरुक्तेऽनिलयने इत्यादिश्रुतिविरोधः।

लक्षणं नाम लक्ष्ये विद्यमानः असाधारणो धर्मः। धर्मश्च धर्मिणि तिष्ठति। सत्यत्वादीनां ब्रह्मस्वरूपत्वात् ब्रह्मधर्मत्वाभावः। अतो न हि सत्यत्वादीनि ब्रह्मलक्षणानि इति चेदुच्यते मैवम्, स्वस्य एव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्ष्यलक्षणत्वस्य सम्भवात्। सत्यादीनि यद्यपि ब्रह्माभिन्नानि ब्रह्मस्वरूपत्वात् तथापि कल्पितेन धर्मधर्मिभावेन तत्र सत्यादीनां ब्रह्मवृत्तित्वं साधनीयम्। उच्यते च पञ्चपादिकाकारेण – आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इति।

ब्रह्म च निरवयवम् अखण्डम् स्वगत-सजातीय-विजातीयभेदरहितम्। अत ब्रह्मविषये आम्नायते छान्दोग्योपनिषदि – एकमेवाद्वितीयम् इति। अत्र एकपदेन ब्रह्मणि सजातीयभेदनिरासः, एव पदेन स्वगतभेदनिरासः, अद्वितीयम् इति पदेन विजातीयभेदनिरासः विहितः। स्वगतसजातीयविजातीयभेदानां स्वरूपविषये उच्यते पञ्चदश्यां –

**वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।**
**वृक्षान्तरात्सजातीयो विजातीयः शिलादितः॥ (पञ्चदशी २.२०) इति।**

तथाहि वृक्षस्य पत्रपुष्पफलादिभिः स्वावयवेभ्यो भेदः स्वगतो भेदः, वृक्षस्य वृक्षान्तराद् भेदो हि सजातीयो भेदः, वृक्षस्य प्रस्तरादिभ्यो भेदो हि विजातीयो भेदः। ब्रह्मणि एते त्रयो भेदा न वर्तन्ते। ब्रह्मणो निरवयत्वात् नास्ति तस्मिन् स्वगतो भेदः, ब्रह्मव्यतिरिक्तस्य द्वितीयस्य अभावात् ब्रह्मणि सजातीयो विजातीयो वा भेदो नास्ति।



## पाठगतप्रश्नाः २

९. ब्रह्मणः स्वरूपलक्षणप्रतिपादकानि श्रुतिवाक्यानि कानि।

१०. लक्षणविशेषणयोः को भेदः।

११. पार्ष्ठिकान्वयस्य किं तावदुदाहरणम्।



१२. सत्यपदस्य कोऽर्थः।

१३. ब्रह्मलक्षणभूतस्य ज्ञानपदस्य कोऽर्थः।

१४. आनन्दपदस्य दुःखाभाव इति कुतो नार्थः।

१५. सत्यपदं ब्रह्म कुतो व्यावर्तयति।

१६. ज्ञानपदं ब्रह्म कुतो व्यावर्तयति।

१७. ब्रह्मणः शब्दवाच्यता कुतो न सम्भवति।

१८. सत्यत्वादीनां ब्रह्मस्वरूपत्वात् कथं ब्रह्मलक्षणता सम्भवति।

१९. सत्यत्वादीनां ब्रह्मस्वरूपत्वेऽपि लक्षणपरतां प्रतिपादयितुं पञ्चपादिकाकारेण किमुच्यते।

२०. एकमेवाद्वितीयम् – इत्यत्र केन पदेन ब्रह्मणि कस्य भेदस्य निरासो भवति।

२१. सजातीयभेदो नाम कः।

२२. स्वगतभेदो नाम कः।

२३. कुतो ब्रह्मणि विजातीयभेदः सजातीयभेदो वा नास्ति।

२४. ब्रह्मणि स्वगतभेदः किमर्थं नास्ति।

## ११.४) ब्रह्मणः तटस्थलक्षणम्

ब्रह्मणः तटस्थलक्षणं तैत्तिरीयोपनिषदो ब्रह्मानन्दवल्ल्यामेवमाम्नायते – यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति इति। तत्र च निर्णयवाक्यत्वेनाम्नातम् – आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ति इति। श्रुतिमिमाम् आधारीकृत्य एव भगवता बादरायणेन ब्रह्मसूत्रे सूत्रितं ब्रह्मणः तटस्थलक्षणं – जन्माद्यस्य यतः इति। सूत्रस्यास्य भाष्ये शङ्कराचार्यभगवत्पादैरुच्यते – अस्य जगतो ... जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद्ब्रह्म इति। सर्वमेतत् संगृह्य वेदान्तपरिभाषायां ब्रह्मणः तटस्थलक्षणमुक्तं – जगज्जन्मादिकारणत्वम् इति। जगत्पदेनात्र कार्यजातं सूच्यते। जन्मादीत्यत्र आदिपदेन स्थितिलययोः ग्रहणम्। कारणत्वं चात्र कर्तृत्वरूपम्, तेन न अविद्यायाम् अतिव्याप्तिः, अविद्यायाः जगत्कारणत्वेऽपि कर्तृत्वाभावात्। अतो ब्रह्मणः तटस्थलक्षणं तावत् जगज्जन्मस्थितिलयकर्तृत्वमिति।

कौमुदीकाराणां रामाद्वयाचार्याणां मते तावत् जगज्जन्मस्थितिलयेषु एकैककारणत्वमपि ब्रह्मणो लक्षणं भवितुमर्हति। अत्ता चराचरग्रहणात् इति सूत्रे जगल्लयकारणत्वस्य एव ब्रह्मलक्षणत्वेन उक्तत्वात्। अतो जगज्जन्मकर्तृत्वं, जगत्स्थितिकर्तृत्वं, जगल्लयकर्तृत्वम् इति त्रीणि लक्षणानि ब्रह्मणः सम्भवन्ति। कर्तृत्वं नाम 'तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्' इति वेदान्तपरिभाषायामुक्तम्। तदैक्षत, यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः इत्यादिश्रुतिभ्यः ब्रह्मणः उपादानगोचरापरोक्षज्ञानं प्रतिपादितम्, सोऽकामयत इत्यादिश्रुतिभिः उपादानविषयकचिकीर्षा ब्रह्मणो ज्ञायते, तदात्मानं स्वयमकुरुत



तन्मनोऽकुरुत इत्यादिश्रुतिभ्यो ब्रह्मणो उपादानविषयककृतिमत्त्वं ज्ञायते। एतेषां ज्ञानचिकीर्षाकृतीनां पूर्वोक्तेषु त्रिषु लक्षणेषु पृथक् पृथक् संयोजनेन नव ब्रह्मलक्षणानि समापतन्ति। तानि हि जगज्जन्मानुकूलापरोक्षज्ञानवत्त्वम्, जगज्जन्मानुकूलचिकीर्षामत्त्वम्, जगज्जन्मानुकूलकृतिमत्त्वम्, जगत्स्थित्यनुकूलापरोक्षज्ञानवत्त्वम्, जगत्स्थित्यनुकूलचिकीर्षावत्त्वम्, जगत्स्थित्यनुकूलकृतिमत्त्वम्, जगल्लयानुकूलापरोक्षज्ञानवत्त्वम्, जगल्लयानुकूलचिकीर्षावत्त्वम्, जगत्स्थित्यनुकूलकृतिमत्त्वम् चेति।

कर्तृत्वं नाम कार्यानुकूलज्ञानवत्त्वमिति केचन। अस्मिन्मते ब्रह्मणः त्रीणि एव तटस्थलक्षणानि - जगज्जन्मानुकूलापरोक्षज्ञानवत्त्वम्, जगज्जन्मानुकूलचिकीर्षामत्त्वम्, जगज्जन्मानुकूलकृतिमत्त्वम् चेति।

ब्रह्मणः अपरं तटस्थलक्षणं तावत् निखिलजगदुपादानत्वम् इति। अत्र उपादानत्वं नाम जगदध्यासाधिष्ठानत्वम् जगदाकारेण विपरिणममानमायाधिष्ठानत्वं वा। अतः जगतः अध्यासे यद् अधिष्ठानं तद् ब्रह्म, तादृशम् अधिष्ठानत्वं च ब्रह्मणि वर्तते। जगद्रूपेण विपरिणममानायाः परिणाम्युपादानकारणभूताया मायायाः अधिष्ठानं ब्रह्म, तादृशमायाधिष्ठानत्वं च ब्रह्मणि इति लक्षणसमन्वयः। ननु जगत् हि जडम्, तस्य कारणमपि तत्सजातीयं जडमेव स्यादिति चेदुच्यते परिणाम्युपादानकारणविषये अयं नियमः। ब्रह्मणः विवर्तभूतम् इदं जगत्, विवर्तोपादानकारणस्य कार्यसजातीयत्वे नास्ति नियमः। जगतः उपादानत्वाद् एव ब्रह्मणा सह जगतः तादात्म्यं ख्यापयति श्रुतिः – इदं सर्वं यदयमात्मा, सच्च त्यच्चाभवत्, बहु स्यां प्रजायेय इति।

ब्रह्म जगतः निमित्तकारणम् उपादानकारणं च भवति। ननु न हि ब्रह्म जगतः निमित्तकारणमात्रं भवितुमर्हति, तत्सृष्ट्वा तदेवानुप्राविशत् सर्वं खल्विदं ब्रह्म इत्यादिश्रुतिषु ब्रह्मणः सर्वकार्यव्यापकता ज्ञायते। न हि निमित्तकारणं कार्यं व्याप्नोति। न च ब्रह्म जगतः उपादानकारणं भवितुमर्हति, जगतो जडत्वात् तदुपादानस्यापि जडत्वमापद्येत। अत्रोच्यते यद् ब्रह्म जगतः निमित्तकारणम्, ब्रह्मचैतन्यं विना जगदुत्पत्तेः असम्भवात्। तस्य ब्रह्मणः उपादानत्वं च जगदुपादानमायाधिष्ठानत्वेन। तथाहि माया जगतः परिणाम्युपादानकारणं, मायाधिष्ठानं ब्रह्म च जगतो विवर्तोपादानकारणम्। निमित्तकारणं हि उपादानकारणाद् भिद्यते, अतः कथमैकस्यैव ब्रह्मणो युगपत् निमित्तकारणत्वम् उपादानकारणत्वं चेत्युच्यते – ब्रह्म स्वप्रधानतया निमित्तं, अज्ञानरूपोपाधिप्रधानतया उपादानं च भवति। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतया उपादानं च भवति तद्वत्। आम्नायते च –

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।**

**यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्॥ इति।**

ब्रह्मलक्षणप्रतिपादनकाले जगज्जन्मस्थितिहेतुत्वेन ब्रह्मणः निमित्तकारणता, जगल्लयाधिष्ठानत्वेन च तस्य उपादानकारणता ज्ञायते। एतेन जन्माद्यस्य यतः इति सूत्रेण निखिलजगदभिन्ननिमित्तोपादानकारणं ब्रह्मेति प्रतिपादितं भवति। सिद्धान्तलेशसंग्रहे केषाञ्चित् मतमेवं संगृहीतम् – "अन्ये तु जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात् उपादानत्वप्रत्यायनाय ब्रह्मणि लयो दर्शितः। अस्तु ब्रह्म जगदुपादानम्, तज्जन्मनि घटजन्मनि कुलालवत्, तत्स्थितौ राज्यस्थेमनि राजवच्च उपादानादन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव



जगज्जननजीवनियामकत्वमुक्तम्। तथा चैकमेवेदं लक्षणम् अभिन्ननिमित्तोपादानतयाद्वितीयं ब्रह्मोपलक्षयतीत्याहुः" इति। 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति ब्रह्मसूत्रेऽपि ब्रह्म एव जगतः अभिन्ननिमित्तोपादानकारणम् इति साक्षात्प्रतिपादितम्। ब्रह्म प्रकृतिः उपादानं च भवति। चेति पदेन निमित्तकारणता आक्षिप्यते। अत्र हेतुस्तावत् – येन विज्ञातेन सर्वं विज्ञातं स्यादिति प्रतिज्ञा, यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तश्च। किं बहुना, यतो वा इमानि भूतानि जायन्ते इति श्रुतौ यतः इति पदे श्रूयमाणा पञ्चमी जनिकर्तुः प्रकृतिः इति सूत्रेण अपादानसंज्ञाविधानात् भवति। अनेनापि ब्रह्मणः जगदुपादानत्वं भवति स्फुटम्। अतो ब्रह्म एव जगतो निमित्तकारणम् उपादानकारणं चेति स्पष्टम्।



## पाठगतप्रश्नाः ३

२५. ब्रह्मणः तटस्थलक्षणप्रतिपादकानि श्रुतिवाक्यानि कानि।

२६. ब्रह्मणः तटस्थलक्षणप्रतिपादकं सूत्रं किम्।

२७. वेदान्तपरिभाषायां ब्रह्मणः किं तटस्थलक्षणं प्रतिपाद्यते।

२८. जगज्जन्मादिकारणत्वम् – इत्यत्र कारणत्वपदस्य कोऽर्थः।

२९. जगज्जन्मादिकारणत्वम् इति लक्षणे कारणत्वपदस्य कर्तृत्वरूपार्थाङ्गीकारे कुत्र नातिव्याप्तिः।

३०. ब्रह्मलक्षणविषये कौमुदीकाराणां किं मतम्।

३१. कर्तृत्वं नाम किम्।

३२. ब्रह्मणः जगज्जन्मस्थितिलयकारणत्वं विहाय अपरं तटस्थलक्षणं किम्।

३३. निखिलजगदुपादानत्वम् इत्यत्र उपादानत्वं नाम किम्।

३४. कुतो ब्रह्म जगतः उपादानम्।

३५. कथं ब्रह्म जगतः उपादानकारणं निमित्तकारणं च भवति।

## ११.५) सगुणं निर्गुणं च ब्रह्म

ब्रह्म स्वभावतो निर्गुणमपि निर्गुणब्रह्मबोधे असमर्थानां मुमुक्षूणां कृते सगुणत्वेन ब्रह्म उपदिश्यते। अतः शङ्कराचार्येण आनन्दमयाधिकरणभाष्यारम्भे उच्यते – द्विरूपं हि ब्रह्मागम्यते, नामरूपविकारभेदोपाधिविशिष्टं, तद्विपरीतं च सर्वोपाधिविवर्जितम् इति। सोपाधिकं ब्रह्म उपास्यत्वेन, निरुपाधिकं च ब्रह्म ज्ञेयत्वेन वेदान्तेषूपदिश्यते। सगुणनिर्गुणब्रह्मविषये अधो विस्तारेण आलोच्यते।

## ११.५.१) निर्गुणं ब्रह्म

अद्वैतवेदान्तमते ब्रह्म हि स्वरूपतो निर्गुणम्। ब्रह्मणो गुणस्वीकारे किं सः गुणः सत्यः उत मिथ्या इति प्रश्नः। यदि सत्यो गुणः तदा ब्रह्मातिरिक्तस्य गुणस्य सत्यत्वात् अद्वैतभङ्गप्रसङ्गः। ब्रह्मणि स्वीक्रियमाणो गुणो मिथ्या चेत् इष्टापत्तिः। अतो ब्रह्मणो स्वरूपतो निर्गुणता एव युक्ता। ये च सगुणत्ववादिनः रामानुजादयः तैरपि निर्गुणं ब्रह्म सुतरामङ्गीकरणीयम्। यथा दण्डी पुरुषः इत्यत्र दण्डविशिष्टपुरुषबोधस्थले विशेष्यस्य पुरुषस्य विशेषणस्य दण्डस्य च पृथक् ज्ञानमपेक्षितम्। तथैव गुणविशिष्टं ब्रह्मेति बोधार्थं गुणस्य तद्रहितस्य ब्रह्मणश्च ज्ञानमपेक्षितम्। सगुणत्ववादिनः निर्गुणब्रह्मविषयकश्रुतयः प्राकृतगुणरहितत्वं ब्रह्मणः प्रतिपादयन्तीति आलपन्ति।

एवं ब्रह्म जातिरहितमपि, एकस्य जातिर्नाङ्गीक्रियते। ब्रह्मणि क्रियापि नास्ति, सर्वव्यापित्वात् निरवयवत्वात् च। ब्रह्मव्यतिरिक्तस्य द्वितीयस्य अभावाद् ब्रह्मणि न हि कश्चित् सम्बन्धोऽस्ति। एवं गुणक्रियाजातिसम्बन्धरहितत्वात् ब्रह्म न हि कथञ्चिद् वाचा प्रतिपादयितुं शक्यते। अतो ब्रह्म वाचामगोचरम् इति श्रुतयः प्रतिपादयन्ति। आम्नातञ्च – यद्वाचानभ्युदितम् (केन. १.४) यतो वाचो निवर्तन्ते (तै. २.४) इत्यादि।

ब्रह्मणः निर्गुणता च श्रुतिसहस्रेषु प्रतिपाद्यते। तथाहि ईशोपनिषदि आम्नायते – तदेजति तन्नैजति तद्दूरे तद्वन्तिके इति, केनोपनिषदि आम्नातं – न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः इति, कठोपनिषदि अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् इति, प्रश्नोपनिषदि तदच्छायमशरीरम् अलोहितं शुभ्रमक्षरम्, मुण्डकोपनिषदि अप्राणो ह्यमनाः शुभ्रः इति, माण्डूक्योपनिषदि अदृष्टम् अव्यवहार्यम् अग्राह्यम् अलक्षणम् अचिन्त्यम् अव्यपदेश्यम् इति, छान्दोग्योपनिषदि अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इति, बृहदारण्यकोपनिषदि आम्नायते तदेतद्ब्रह्म अपूर्वम् अनपरम् अनन्तरम् अबाह्यम् इत्यादि। अतो ब्रह्मणो निर्गुणतायाः श्रुतिप्रतिपादितत्वात् तस्य निराकरणं कथञ्चिदपि कर्तुं न शक्यते। एतेषां च सगुणपरत्वेन समुन्नयनं श्रुत्यर्थपरित्यागे एव सम्भवति।

## ११.५.२) सगुणं ब्रह्म

निर्गुणब्रह्मध्याने असमर्थानां कृते ब्रह्मणि कल्पितगुणान् संयोज्य सगुणं ब्रह्म प्रतिपादयति श्रुतिः। उच्यते च - साधकानां हितार्थाय ब्रह्मणो रूपकल्पना इति। सगुणब्रह्मप्रतिपादनप्रसङ्गे एव ब्रह्मणो जगत्कर्तृत्वादिगुणयोगो वर्ण्यते। कर्तृत्वाच्च तस्मिन् जगदुपादानविषयकापरोक्षज्ञानं चिकीर्षा कृतिश्च कल्प्यन्ते। निर्गुणं कार्यकारणव्यतिरिक्तम् अद्वैतं ब्रह्म न हि जगत्कारणं भवितुमर्हति। अतो मायारूपोपाधिना सह तस्य सम्बन्धं परिकल्प्य ब्रह्मण ईश्वरत्वं जगत्सर्जकत्वं च प्रतिपाद्यते श्रुतिषु। एवं अखिलजगदुपादानत्वात् ब्रह्मणः सर्वज्ञत्वं सर्वव्यापित्वं च वर्ण्यते। सकलजगदुपादानत्वात् जगदन्तःप्रविष्टत्वाच्च तस्य सर्वान्तर्यामित्वमपि सिध्यति। वाङ्मनःप्राणादिभिः सम्बन्धवशात् तस्य वाङ्मयत्वं प्राणमयत्वं मनोमयत्वं च प्रतिपाद्यते श्रुतिषु। परन्तु कल्पितगुणयोगेन एव ब्रह्मणः सगुणत्वम् इति बोध्यम्, स्वरूपतो ब्रह्म हि निर्गुणं निर्विशेषम्। कविर्मनीषी परिभूः स्वयम्भूः, अणोरणीयान् महतो महीयान् (कठ. १.२.२०), अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः। तं वेद्यं पुरुषं वेद (प्रश्न. ६.६), यः



सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि (मु. २.२.७), एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् (मा. ६), सोऽकामयत, बहु स्यां प्रजायेयेति (तै. २.६) इति यतो वा इमानि भूतानि जायन्ते (तै. ३.१) इति, सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः (छा. ३.१४.४), अयमात्मा वाङ्मयो मनोमयः प्राणमयः (बृ. १.५.३), मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् (श्वे. ४.१०) इत्यादिषु सहस्रश्रुतिषु ब्रह्मणः सगुणत्वमालोचितं भवति।

ब्रह्मण उपदेशो हि द्विधा विधीयते श्रुतिषु – विधिमुखेन निषेधमुखेन च। सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्यादिषु श्रुतिषु विधिमुखेन ब्रह्म उपदिश्यते। एवं नेह नानास्ति किञ्चन, अशब्दमस्पर्शमरूपमव्ययम्, अदृष्टम् अव्यवहार्यम् अग्राह्यम् इत्यादिश्रुतिषु निषेधमुखेन ब्रह्मण उपदेशो विहितः। वस्तुतस्तु निषेधमुखेन एव ब्रह्मणो निर्देशो युक्ततरः, ब्रह्मणः गुणक्रियाजातिसम्बन्धरहितत्वात् तस्य वाच्यत्वस्य असम्भवात्। अतः सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिस्थलेषु सत्यादिपदानां निषेधमुखेन एव तात्पर्यं बोध्यमिति वेदान्तिनो वदन्ति। तथाहि सत्यं नाम अनित्याभावः, ज्ञानं नाम जडाभावः अनन्तं नाम अन्ताभावश्च बोध्यः।



## पाठगतप्रश्नाः ४

३६. ब्रह्म स्वरूपतः सगुणं निर्गुणं वा।
३७. ब्रह्मणः सगुणत्ववादिनः निर्गुणब्रह्मविषयकश्रुतीनां कमर्थं कल्पयन्ति।
३८. कुतो ब्रह्मणि क्रिया नाङ्गीक्रियते।
३९. जगत्कर्तृरूपेण प्रतिपाद्यमानं ब्रह्म सगुणं निर्गुणं वा।
४०. कुतो ब्रह्मणः सर्वान्तर्यामित्वम्।
४१. ज्ञेयं ब्रह्म सगुणं निर्गुणं वा।
४२. निषेधमुखेन ब्रह्मनिर्देशः केषु श्रुतिषु विधीयते।



## पाठसारः

पाठेऽस्मिन् ब्रह्मलक्षणम् आलोचितं, सगुणनिर्गुणभेदेन च ब्रह्म प्रतिपादितम्। बृद्ध्यर्थकाद् बृह्धातोः 'बृंहेर्नोऽच्च' इति सूत्रेण कर्तरि मनिन्-प्रत्यये ब्रह्मशब्दो निष्पद्यते। निरतिशयवृद्धिमत् इति ब्रह्मशब्दस्य अर्थः। अनेन ब्रह्मणः सर्वव्यापकत्वं ज्ञायते। बृंहति वर्धयति प्रजाः इति वा ब्रह्म। ब्रह्म एव आत्मा।

लक्षणं हि लक्ष्यमात्रे विद्यमानः असाधारणो धर्मः। तच्च लक्षणं स्वरूपलक्षणं तटस्थलक्षणम् इति द्विविधम्। यो धर्मः वस्तुनः स्वरूपं सन् वस्त्वन्तरेभ्यः तद् वस्तु व्यावर्तयति तत् स्वरूपलक्षणम्। यथा



मधुरत्वं शर्करायाः स्वरूपलक्षणम्। यावत्कालं लक्ष्यं तिष्ठति तावत्कालं लक्ष्ये अविद्यमानः सन्नपि यः धर्मः लक्ष्यं तद्भिन्नेभ्यो व्यावर्तयति तद्धि तटस्थलक्षणम्। यथा गन्धवत्त्वं पृथिव्याः तटस्थलक्षणम्। उत्पत्तिप्रथमक्षणे पृथिव्यां न हि गन्धोऽस्ति, तथापि गन्धः पृथिवीं पृथिवीतरेभ्यो व्यावर्तयति। एवं ब्रह्मणोऽपि स्वरूपलक्षणं तटस्थलक्षणं च श्रुतिषु प्रतिपाद्येते।

सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्यादिश्रुतिषु सत्य-ज्ञानानन्दानन्तपदैः ब्रह्मणः स्वरूपलक्षणमुच्यते। यद्यपि सत्याज्ञानानन्दादयः ब्रह्मस्वरूपाः एव, तथापि कल्पितेन धर्मधर्मिभावेन तेषां लक्षणत्वं सम्भवति। सत्यपदेन स्वस्वरूपाव्यभिचारिरूपार्थः, ज्ञानपदेन भावप्रत्ययसिद्धः नित्यज्ञानरूपार्थः, आनन्दपदेन निरतिशयानन्दस्वरूपरूपार्थः, अनन्तपदेन च सर्वव्यापकत्वरूपार्थः अङ्गीक्रियते। तच्च ब्रह्म सजातीयस्वगतविजातीयभेदरहितम् इति श्रुतिषु प्रतिपादितम्। ब्रह्मणः तटस्थलक्षणं हि जगदभिन्ननिमित्तोपादानकारणत्वम् इति जन्माद्यधिकरणे प्रतिपादितम्। तदाधारीकृत्य जगतः उत्पत्तिस्थितिलयकर्तृत्वम् इति ब्रह्मणः तटस्थलक्षणं वेदान्तपरिभाषायाम् आलोच्यते। कर्तृत्वं च तत्तदुपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिमत्त्वम्। अतः उत्पत्ति-स्थिति-प्रलयानाम् एकैकस्य अपरोक्षज्ञानं चिकीर्षा कृतिश्च ब्रह्मणि वर्तते। अतः ब्रह्मणो नव तटस्थलक्षणानि सम्भवन्ति। निखिलजगदध्यासाधिष्ठानत्वं जगदाकारेण परिणममानमायाधिष्ठानत्वं वा ब्रह्मणः अपरं तटस्थलक्षणम्।

ब्रह्म स्वभावतो निर्गुणमपि निर्गुणब्रह्मज्ञानाय असमर्थानां मुमुक्षूणां कृते सगुणं ब्रह्म उदिश्यते। सगुणं ब्रह्म हि उपास्यं निर्गुणं ब्रह्म च ज्ञेयम्। अशब्दमस्पर्शमरूपमव्ययम् इत्यादिश्रुतिषु निर्गुणब्रह्म उपदिश्यते। गुणक्रियाजातिसम्बन्धरहितत्वात् ब्रह्म वाचा प्रतिपादयितुं न शक्यते। जगत्कर्तृत्वादिकल्पितगुणयोगेन सगुणस्य ब्रह्मणः प्रतिपादनं भवति। सगुणं ब्रह्म ईश्वर एव जगत्कर्ता। यः सर्वज्ञः सर्ववित् इत्यादिश्रुतिषु सगुणब्रह्मण उपदेशो भवति।

श्रुतिषु विधिमुखेन निषेधमुखेन च ब्रह्मण उपदेशो भवति। सत्यं ज्ञानमनन्तं ब्रह्म इत्याधिश्रुतिषु विधिमुखेन ब्रह्म प्रतिपाद्यते। नेह नानास्ति किञ्चन, अशब्दमस्पर्शम् इत्यादिश्रुतिषु निषेधमुखेन ब्रह्मोपदेशो विहितः। एतयोर्मध्ये निषेधमुखेन एव ब्रह्मप्रतिपादनं युक्ततरम्। अतः विधिमुखेन ब्रह्मप्रतिपादनकालेऽपि सत्यपदस्य अनित्याभावः, ज्ञानपदस्य जडाभावः इत्येवम् निषेधमुखेन अर्थः कल्पनीयः।



## पाठान्तप्रश्नाः

१. वाचस्पतिमिश्रेण ब्रह्मपदस्य कोऽर्थो विहितः।

२. वस्तुनः परिच्छेदः कथं सम्भवति।

३. आत्मपदार्थविषये सुरेश्वराचार्येण किमुच्यते।

४. कुतो नैयायिकमते उत्पत्तिकाले पृथिव्यां गन्धो नास्ति।

५. कस्यां श्रुतौ ब्रह्मणः उपनिषन्मात्रवेद्यता उच्यते।

६. अनन्तपदं ब्रह्म केभ्यो व्यावर्तयति।

७. स्वगतादिभेदत्रयस्वरूपप्रतिपादकः पञ्चदशीश्लोकः कः।



८. कथं ब्रह्म जगतः उपादानकारणम्।

९. द्विरूपं हि ब्रह्मावगम्यते – किं तद् रूपद्वयम्।

१०. ब्रह्मणो द्विधा उपदेशो विधीयते श्रुतिषु – तत्प्रकारद्वयं किम्।



## पाठगतप्रश्नानामुत्तराणि

**पाठगतप्रश्नानामुत्तरम् १**

१. वृद्ध्यर्थकाद् बृह्धातोः 'बृंहेर्नोऽच्च' इति सूत्रेण कर्तरि मनिन्-प्रत्यये ब्रह्मशब्दो निष्पद्यते।

२. निरतिशयवृद्धिमत् हि ब्रह्म, बृंहति वर्धयति प्रजाः इति वा ब्रह्म।

३. सातत्यगमनार्थकाद् अत्-धातोः सातिभ्यां मनिन्मनिणौ इति सूत्रेण कर्तरि मनिन्-प्रत्यये आत्मन् इति शब्दो निष्पद्यते।

४. अतति सन्ततभावेन जाग्रदादिसर्वावस्थासु अनुवर्तते इति आत्मपदस्य व्युत्पत्तिगतः अर्थः। आप्-धातोः आपूर्वकाद्-दाधातोः अद्-धातोश्च आत्मशब्दनिष्पत्तौ यो हि सर्वं प्राप्नोति, यः सर्वं गृह्णाति, यः सर्वं भक्षयति स आत्मा इत्येते अर्थाः सम्भवन्ति।

५. स्वरूपत्वे सति व्यावर्तकत्वं स्वरूपलक्षणलक्षणम्। उक्तं च धर्मराजाध्वरीन्द्रेण - स्वरूपमेव लक्षणं स्वरूपलक्षणम् इति।

६. यावल्लक्ष्यकालम् अनवस्थितत्वे सति व्यावर्तकत्वं तटस्थलक्षणस्य लक्षणम्। यावत्कालं लक्ष्यस्य स्थितिः तावत्कालं लक्ष्ये यद् अविद्यमानमपि लक्ष्यं तद्भिन्नेभ्यो व्यावर्तयति तत् तटस्थलक्षणम्। उच्यते च वेदान्तपरिभाषायां – तटस्थलक्षणं तु यावल्लक्ष्यकालम् अनवस्थितत्वे सति यद् व्यावर्तकम् इति।

७. गन्धवत्त्वं पृथिव्याः तटस्थलक्षणम् इति।

८. उपनिषद्भ्य एव ब्रह्मणः स्वरूपलक्षणं तटस्थलक्षणं वा विज्ञायते।

**पाठगतप्रश्नानामुत्तरम् २**

९. सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म इत्यादीनि।

१०. लक्षणं हि लक्ष्यं सर्वतः व्यावर्तयति, विशेषणं हि विशेष्यं सजातीयेभ्य एव व्यावर्तयति।

११. अरुणया पिङ्गाक्ष्या गवा एकहायन्या सोमं क्रीणाति इति।

१२. यद्रूपेण यन्निश्चितं तद्रूपं यत् न व्यभिचरति तत् सत्यमिति। अविकारित्वम् इति तदर्थः।

१३. ज्ञाधातोः भावे ल्युट्-प्रत्यये ज्ञानपदस्यात्र निष्पत्तिः, कारणान्तरनिरपेक्षं स्वरूपज्ञानमेवात्र ज्ञानपदार्थः।

१४. लौकिकानन्दो हि ब्रह्मानन्दस्य मात्रा इति श्रुतिप्रतिपाद्यविरोधात्। न हि अभावस्य आधिक्यन्यूनताचिन्तनं सम्भवति।



१५. सत्यपदं ब्रह्म अनृतविकारेभ्यो विवर्तयति।

१६. ज्ञानपदं जडेभ्यो ब्रह्म व्यावर्तयति।

१७. ब्रह्मणो गुणक्रियाजातिसम्बन्धरहितत्वात् शब्दवाच्यता न सम्भवति।

१८. सत्यत्वादीनां स्वस्य एव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्ष्यलक्षणभावः कल्प्यते।

१९. आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इति।

२०. एकपदेन ब्रह्मणि सजातीयभेदनिरासः, एव पदेन स्वगतभेदनिरासः, अद्वितीयपदेन च विजातीयभेदनिरासः भवति।

२१. वृक्षस्य तत्सजातीयाद् वृक्षान्तराद् भेदो हि सजातीयभेदः।

२२. अवयविनः स्वावयवेभ्यो भेदो हि स्वगतभेदः। यथा वृक्षस्य तदवयवैः पत्रपुष्पफलादिभिः भेदो हि स्वगतभेदः।

२३. ब्रह्मव्यतिरिक्तस्य द्वितीयस्य अभावाद् ब्रह्मणि सजातीयः विजातीयो वा भेदो नास्ति।

२४. ब्रह्मणो निरवयत्वाद् ब्रह्मणि स्वगतभेदो न वर्तते।

**पाठगतप्रश्नानामुत्तरम्** ३

२५. यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति इत्यादिश्रुतयः ब्रह्मणः तटस्थलक्षणं प्रतिपादयन्ति।

२६. जन्माद्यस्य यतः इति।

२७. जगज्जन्मादिकारणत्वम् इति।

२८. कारणत्वपदस्यात्र कर्तृत्वमर्थः।

२९. अविद्यायां नातिव्याप्तिः, अविद्यायाः जगज्जन्मादिकारणत्वेऽपि जडत्वेन जगत्कर्तृत्वाभावात्।

३०. कौमुदीकाराणां मते तावत् जगज्जन्मस्थितिलयेषु एकैककारणत्वम् अपि ब्रह्मणो लक्षणं भवितुम् अर्हति।

३१. कर्तृत्वं नाम तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् इति।

३२. निखिलजगदुपादानत्वम् इति अपरं तटस्थलक्षणं ब्रह्मणः।

३३. उपादानत्वं नाम जगदध्यासाधिष्ठानत्वं जगदाकारेण विपरिणममानमायाधिष्ठानत्वं वा।

३४. ब्रह्मणः जगद्व्यापकत्वात् तस्य उपादानत्वम् अङ्गीकरणीयम्। कारणं हि कार्यं व्याप्नोति इति नियमः।

३५. ब्रह्म स्वचैतन्यप्रधानतया निमित्तम्, अज्ञानरूपोपाधिप्रधानतया उपादानं च भवति।

**पाठगतप्रश्नानामुत्तरम्** ४

३६. ब्रह्म हि स्वरूपतो निर्गुणम्।

३७. निर्गुणब्रह्मप्रतिपादकानि श्रुतिवाक्यानि प्राकृतगुणरहितत्वं ब्रह्मणः निषेधन्ति इति प्रतिपादयन्ति।

३८. ब्रह्मणः सर्वव्यापित्वात् निरवयवत्वात् च ब्रह्मणि क्रिया नाङ्गीक्रियते।



३९. सगुणमेव, कर्तृत्वरूपगुणयोगेन ब्रह्मप्रतिपादनात्।

४०. सकलजगदुपादानत्वात् जगदन्तःप्रविष्टत्वाच्च तस्य सर्वान्तर्यामित्वम्।

४१. ज्ञेयं ब्रह्म निर्गुणमेव।

४२. नेह नानास्ति किञ्चन, अशब्दमस्पर्शमरूपमव्ययम्, यतो वाचो निवर्तन्ते इत्यादिश्रुतिषु निषेधमुखेन ब्रह्मनिर्देशो विधीयते।

॥ इति एकादशः पाठः ॥



१२

# माया

## प्रस्तावना

ब्रह्म वेद ब्रह्मैव भवति, तमेव विदित्वातिमृत्युमेति इत्यादिश्रुतिषु ब्रह्मज्ञानादेव सकलदुःखनिवृत्तिरूपमोक्षः प्रतिपादितः। श्रुतिषु च असकृत् सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुतिभिः ब्रह्मस्वरूपं प्रतिपाद्यते, आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यादिश्रुतिभिः ब्रह्मलाभोपायाश्च प्रतिपाद्यन्ते। अतो ब्रह्मस्वरूपविषये एव आलोचनमेव युक्तम्, किं पुनर्मायाविषयकेन आलोचनेन इति प्रश्नः स्वाभाविकः। अद्वैतवेदान्ते ब्रह्म हि निर्गुणं निर्विशेषं नित्यशुद्धबुद्धमुक्तस्वभावम् एकमेवाद्वितीयम्। जगतो जडत्वाद् ब्रह्मव्यतिरिक्तस्य द्वितीयस्य अभावात् कथं निर्गुणात् निर्विशेषाद् ब्रह्मणः जगदुत्पत्तिः इति प्रश्नः सुतरामुद्वेजयति दर्शनजिज्ञासूनां मानसम्। अतो जगदुपादानरूपेण माया स्वीक्रियते अद्वैतवेदान्ते। माया च श्रुतिस्मृतिसिद्धा। "योऽस्माकमविद्यायाः परं पारं तारयसीति", "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतिषु "मम माया दुरत्यया", "नाहं प्रकाशः सर्वस्य योगमायासमावृतः", "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इत्यादिभगवद्गीतावचनेषु च मायायाः सत्त्वं मायायुक्तस्यैव ईश्वरस्य च जगत्कर्तृत्वं वर्ण्यते।

बद्धो जीवः मायानिर्मिते अस्मिन् प्रपञ्चे अन्तःकरणदेहेन्द्रियादिभिः ऐक्यं समनुभवन् कर्ता भोक्ता च भवति, सुखदुःखानि च अनुभवति। जीवः स्वरूपतो ब्रह्म एव, मायाकारणात् एव तस्य स्वस्वरूपापरोक्षज्ञानं न भवति। श्रवणमनननिदिध्यासनैः अखण्डाकारचित्तवृत्तेः उदयात् मायानिवृत्तेः जीवः स्वस्वरूपं पुनः साक्षात्करोति, मुच्यते च स्वस्मिन् आरोपितेभ्यः सकलदुःखेभ्यः। परन्तु यावन्न निवर्त्यायाः मायायाः स्वरूपं विज्ञायते तावन्न हि तस्या निवृत्तेरुपायानामपि ज्ञानं सम्भवति। अतो मायायाः अपि लक्षणप्रमाणाभ्यां प्रतिपादनमद्वैतशास्त्रेषु दरीदृश्यते। अस्मिन् पाठे मायायाः लक्षणप्रमाणाभ्यां सह तद्विषयका इतरे अपि विचाराः उपस्थापयिष्यन्ते।



## उद्देश्यानि

एतं पाठमधीत्य भवन्तो भवत्यो वा अधोलिखितान् विषयान् ज्ञास्यन्ति।

- अद्वैतवेदान्ते मायायाः आलोचनस्य आवश्यकता
- मायाशब्दार्थः
- तत्त्वप्रदीपिकाप्रोक्तं मायालक्षणम्
- मायायाः अनादित्वस्य भावरूपत्वस्य ज्ञाननिवर्त्यत्वस्य च विचारः



- मायाया इतराणि लक्षणानि
- मायाया त्रिगुणात्मकत्वम् अनिर्वचनीयत्वञ्च
- मायासत्त्वे कानि प्रमाणानि।
- मायाविद्ययोः भिन्नत्वम् अभिन्नत्वं वा।
- माया एका अनेका वा।
- मायाया क आश्रयः। को वा विषयः।
- मायायाः कथं जगदुपादानत्वम्।

## १२.१) मायाशब्दार्थः

मा माने इति धातोः 'माछाससिभ्यो यः' इति सूत्रेण य इति प्रत्यये माय इति स्थितौ ततः स्त्रीत्वविवक्षायां टापि माया इति शब्दः सिध्यति। मीयते अपरोक्षवत् प्रदर्श्यते अनया इति माया, माति विश्वं यस्याम् इति माया, मीयते अनया संसार इति माया, मीयते निर्मीयते जगत् यया सा माया, मीयते ज्ञायते आत्मनि अध्यस्तं जगत् यया सा माया इत्यादयः अर्था मायाशब्दस्य व्युत्पत्तिमाश्रित्य प्रतिपादयितुं शक्यन्ते। श्रुतिस्मृतिषु माया – अज्ञानम्, अविद्या, प्रकृतिः, मिथ्याज्ञानम्, अव्यक्तम्, अव्याकृतम्, महासुषुप्तिः, अक्षरम् इत्यादिशब्दैरपि व्यपदिश्यते।

## १२.२) मायालक्षणम्

मायालक्षणविचारकाले चित्सुखाचार्येण तत्त्वप्रदीपिकायां कथितं -

**अनादिभावरूपं यद्विज्ञानेन प्रलीयते।**

**तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते॥ इति।**

मधुसूदनसरस्वती अद्वैतसिद्धिग्रन्थे चित्सुखाचार्योक्तं लक्षणमाधारीकृत्य एव मायालक्षणं विदधाति - अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम् इति। उक्तञ्च तेन - "अथ केयमविद्या, अनादिभावरूपत्वे सति ज्ञाननिवर्त्या से"ति। एतेषां लक्षणस्थपदानां सार्थक्यमिदानीमालोच्यते।

## १२.३) लक्षणस्थपदानां सार्थक्यम्

परवर्तिनि ज्ञाने उदिते पूर्ववर्तिनः ज्ञानस्य विनाशो भवति इति नियमः। पूर्ववर्ति ज्ञानं भावरूपम् उत्तरज्ञाननाश्यं च। लक्षणे अनादिशब्दोपादानेन उत्तरज्ञाननाश्येऽपि भावरूपे पूर्वोत्पन्ने ज्ञाने नातिव्याप्तिः, तस्य अनादित्वाभावात्। ज्ञानप्रागभावे अतिव्याप्तिवारणाय भावरूपमिति पदम्, नोचेत् ज्ञानप्रागभावस्य अनादित्वात् ज्ञाननिवर्त्यत्वाच्च तत्र मायालक्षणस्य अतिव्याप्तिः। लक्षणे ज्ञाननिवर्त्यत्वपदोपादानेन अनादौ भावरूपे च आत्मनि मायालक्षणस्य नातिव्याप्तिः, आत्मनः ज्ञाननिवर्त्यत्वाभावात्।

ननु यः पदार्थः अनादिः भावरूपश्च कथं तस्य निवर्त्यत्वं स्यात्। अनादेः भावरूपस्य आत्मनः न हि बाध्यत्वं प्रतिपाद्यते अद्वैतिभिः। एवम् अविद्याया अपि अनादित्वात् भावरूपत्वात् च निवर्त्यत्वं



नास्ति। अत्रोच्यते, अद्वैतिभिः यत्, अनादिः भावपदार्थश्चेत् तस्य बाधो न भवतीति अनादित्वभावरूपत्वाभ्यां बाधाभावस्य सहचारनियमो नास्ति। श्यामघटस्य पाकेन रक्तवर्णोत्पत्तौ पृथिवीपरमाणुगतस्य अनादेः भावरूपस्य श्यामवर्णस्य नाशः पूर्वपक्षिभिरपि साक्षात्क्रियते। अतो अनादिभावरूपत्वेऽपि मायायाः ज्ञाननिवर्त्यत्वं दुर्वारम्।

## १२.४) अविद्याया अनादित्वविचारः

अविद्या हि अनादिः। अनादित्वं नाम आदिराहित्यम् उत्पत्तिराहित्यम् वा। सा अविद्या यद्यपि ब्रह्मणि आरोपिता तथापि प्रथमारोपस्य दुर्निरूप्यत्वात् तस्या अनादित्वम्। अविद्याया अनादित्वे श्रुतिप्रमाणं तावत्  - अजामेकां लोहितशुक्लकृष्णामिति। अद्वैतवेदान्तप्रसिद्धे अनादिषट्के अविद्या परिगण्यते। उच्यते च चित्सुखाचार्येण तत्त्वप्रदीपिकाग्रन्थे –

**जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।**

**अविद्या तच्चितोर्योगः षडस्माकमनादयः॥ इति।**

ननु ब्रह्मस्वरूपावरकम् अज्ञानम् अनादिर्भवतु शुक्तिरजतभ्रमस्थले शुक्तेः आवरकम् अज्ञानं तु न अनादिः। यतः शुक्तिः उत्पद्यते अतः शुक्त्यवच्छिन्नचैतन्यावरकम् अज्ञानमपि उत्पद्यते, शुक्तिसत्त्वे तस्य स्थितिः शुक्त्यभावे च अभावः। अद्वैतवेदान्ते मूलाविद्या, तूलाविद्या इति अविद्याद्वितयं स्वीक्रियते। मूलाविद्या हि ब्रह्माश्रिता जगत्कारणं ब्रह्मस्वरूपाच्छादिका च। शुक्त्यादिपरिच्छिन्ना भ्रमरजतादिहेतुः अविद्या तु तूलाविद्या। तूलाविद्यायाः सादित्वं सुतरामङ्गीकरणीयम्। अतः अविद्याया अनादित्वे स्वीकृते तूलाविद्यायामव्याप्तिः। अत्रोच्यते अद्वैतिभिः यत्, शुक्तिर्हि शुद्धचैतन्ये अध्यस्ता। रजतोपादाभूता शुक्त्यवच्छिन्ना अविद्या हि अनादिचैतन्याश्रिता, अतः सापि अनादिः। वेदान्तपरिभाषायामुक्तं च – सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात् इति। उत्पन्ना शुक्तिः अज्ञानस्य अवच्छेदिका, न हि अज्ञानस्य विषयः। न हि जडम् अज्ञानस्य विषयः आश्रयो वा भवति। यथा आकाशस्य अवच्छेदकः घटपटादिः, घटान्तर्वर्ती आकाशः घटाकाशः पटान्तर्वर्ती आकाशः पटाकाशश्चेति कथ्यते। एवं अज्ञानस्य अवच्छेदिका शुक्तिः, शुक्त्यवच्छिन्नम् अज्ञानं हि शुक्त्यज्ञानमिति कथ्यते। परन्तु न हि अज्ञानं शुक्तौ आश्रितम्, अज्ञानस्य आश्रयो हि शुद्धचैतन्यमेव। अतः शुक्तिरूपकल्पितोपाधिकारणादेव मूलाविद्या-तूलाविद्ययोर्भेदः, कल्पितभेदमङ्गीकृत्य च तूलाविद्यायाः सादित्वप्रतिपादनं नोपपद्यते। अतः तूलाविद्यापि अनादिरिति नाव्याप्तिर्लक्षणस्य।



## पाठगतप्रश्नाः १

१. जगदुपादानत्वे कुतो मायाङ्गीक्रियते।

२. मायायां काः श्रुतयः प्रमाणम्।

३. मायासिद्धौ काः स्मृतयः प्रमाणम्।

४. मायापदस्य व्युत्पत्तिः का।



५. मायायाः पर्यायवाचकाः शब्दाः के।

६. चित्सुखाचार्यप्रतिपादितं मायालक्षणं किम्।

७. अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम् इति लक्षणे अनादिपदं किमर्थमुपात्तम्।

८. चित्सुखाचार्योक्तलक्षणे भावरूपपदं किमर्थमुपात्तम्।

९. चित्सुखाचार्योक्तलक्षणे ज्ञाननिवर्त्यपदं किमर्थमुपात्तम्।

१०. अद्वैतवादसम्मताः षट् अनादयः के।

११. का मूलाविद्या, का च तूलाविद्या।

१२. शुक्तिः अज्ञानस्य विषयः कुतो न भवति।

## १२.५) अविद्याया भावरूपत्वम्

अविद्यायाः भावरूपत्वस्य तात्पर्यं तावत् अभावविलक्षणत्वमात्रमेव। न हि अविद्या नाम विद्यायाः अभावः। अविद्यायाः अभावरूपत्वे भावरूपस्य जगतः उपादानम् अविद्या न स्यात्। न हि अभावाद् भावोत्पत्तिर्भवति इति शङ्करेण असकृत्प्रतिपादितम्। अतः अविद्यायाः अभावरूपता अङ्गीकर्तुं न शक्यते। अज्ञानस्य अभावत्वप्रतिपादकं पूर्वपक्षिणं प्रति प्रश्नोऽयं यत् किम् अज्ञानं घटपटादिविशेषज्ञानस्याभावः ज्ञानमात्रस्याभावो वेति। न हि अज्ञानं घटादिविशेषज्ञानाभावः, मूढोऽहं किञ्चिन्न जानामि इत्यादिस्थलेषु विशेषविषयरहितस्य अपि अज्ञानस्य अनुभवात्। न च अज्ञानं नाम ज्ञानमात्रस्याभावः, अभावार्थं धर्मिणः प्रतियोगिनश्च ज्ञानमपेक्षते। अतो धर्मिप्रतियोगिज्ञानस्य विद्यमानत्वात् ज्ञानमात्रस्य अभावः कदाचिदपि न सम्भवति। 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिषु मायाया जगदुपादानत्वकथानात् न हि मायाया अभावरूपत्वं श्रुतिसिद्धम्। किं बहुना, अविद्यायाः भावरूपता अपि अङ्गीकर्तुं न शक्यते। अविद्याया भावरूपत्वे सा जगति विद्यमानानाम् अभावपदार्थानामुपादानं न स्यात्। अतः अविद्यायाः भावाभावोभयविलक्षणत्वम्, तस्माच्च भावाभावाभ्याम् अनिर्वचनीयत्वम् अविद्यायाः सिध्यति।

## १२.६) अविद्याया ज्ञाननिवर्त्यत्वम्

न विद्या अविद्या इत्यत्र नञः न हि अत्यन्ताभावः अन्योन्याभावो वार्थः। अत्र नञः विरोधित्वमेव अर्थः। अतो अविद्या नाम विद्याविरोधिनी विद्यानिवर्त्या च। ननु अविद्यायाः ज्ञाननिवर्त्यत्वं नास्ति सोपाधिकभ्रमस्थलेषु रक्तस्फटिकादिषु ज्ञानोदयेऽपि भ्रमनिवृत्तेरभावात्, ब्रह्मज्ञानोदयेऽपि जीवन्मुक्तदशायाम् जगद्विज्ञानात्। अत्रोच्यते, रक्तस्फटिकस्थले जपाकुसुमरूपस्य उपाधेः प्रतिबन्धकरूपेण विद्यमानत्वात्, जीवन्मुक्तदशायाञ्च प्रारब्धकर्मणः प्रतिबन्धकरूपेण सत्त्वात् बिलम्बेन स्वच्छस्फटिकाज्ञानस्य ब्रह्मविषयकाज्ञानस्य च निवृत्तिर्भवति। परन्तु प्रतिबन्धककारणात् विलम्बे सत्यपि न हि अज्ञानस्य ज्ञाननिवर्त्यत्वे अस्ति काचिदनुपपत्तिः। अविद्याया ज्ञाननिवर्त्यत्वे - तरति शोकमात्मवित्, तमेव विदित्वातिमृत्युमेति, ब्रह्म वेद ब्रह्मैव भवति इत्यादिश्रुतयः "ज्ञानेन तु तदज्ञानं येषां

नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥" इत्यादिस्मृतयश्च प्रमाणम्। अतो अनादित्वे सति भावरूपत्वे सति ज्ञाननिवर्त्यत्वम् इति अज्ञानस्य निर्दुष्टं लक्षणम्।

अविद्यालक्षणे ज्ञाननिवर्त्यपदस्य साक्षाज्ज्ञाननिवर्त्यत्वम् इत्यर्थः। तेन च अविद्या एव लक्ष्यते, ज्ञानं साक्षाद् अज्ञानमेव निवर्तयति। अतो अविद्याया लक्षणान्तरं भवति ज्ञानत्वेन ज्ञाननिवर्त्यत्वमिति। पूर्वज्ञानस्य उत्तरज्ञानेन निवृत्तत्वात् पूर्वज्ञाने लक्षणस्य अतिव्याप्तिरिति चेन्न, उत्तरज्ञानस्य विरोधिगुणत्वेन पूर्वज्ञानस्य ज्ञाननिवर्त्यत्वं न हि ज्ञानत्वेन। अत्र लक्षणे अनादित्वभावत्वयोरपेक्षा नास्ति। अतः इदं लक्षणान्तरमिति मधुसूदनसरस्वतीमतम्।

## १२.७) मायाया द्वितीयं लक्षणम्

मायाया द्वितीयं लक्षणं तावत् - भ्रमोपादानत्वम् इति। भ्रमस्य उपादानमेव माया। परन्तु भ्रमस्य उपादानं ब्रह्म अपि भवति। अखिलस्य प्रपञ्चस्य विवर्तोपादानकारणं ब्रह्म एव। अतः अत्र लक्षणे परिणामित्वेन अचेतनत्वेन वेति पदं योजनीयम्। तेन अचेतनत्वेन भ्रमोपादानत्वं, परिणामित्वेन भ्रमोपादानत्वं वा मायाया लक्षणम्। ब्रह्म भ्रमोपादानं भवति, परन्तु अचेतनं परिणामि वा न भवति।

ननु अज्ञानं हि भावविलक्षणम् अभावविलक्षणम् इति पूर्वं प्रतिपादितम्। शुक्तिरजतरूपभ्रमोऽमि भावविलक्षणः अनिर्वचनीयः। अतः अज्ञानस्य उपादानत्वं भ्रमस्य च उपादेयत्वं न स्यात्, भावस्य एव उपादानत्वम् उपादेयत्वं भवति। अत्रोच्यते, उपादानत्वं प्रति उपादेयत्वं च प्रति न हि भावत्वं हेतुः, परन्तु कार्ये यत्कारणम् अन्वितं तिष्ठति तस्य उपादानत्वम्, यच्च सादि तस्य उपादेयत्वं सिध्यति। यथा कार्ये घटे मृत्तिका अन्विता तिष्ठति अतः मृत्तिका घटस्य उपादानं, घटश्च सादिः अतो घट उपादेयः। भावपदार्थ एव उपादानम् उपादेयं वा भवतीत्यत्र नास्ति नियमः, न हि ब्रह्म भावपदार्थोऽपि कस्यापि परिणाम्युपादानकारणं उपादेयं वा भवति।

ननु यदा शुक्तौ शुक्तिज्ञानं भवति तदा शुक्तिविषयकमज्ञानं निवर्तते। तच्च अज्ञानं न भ्रममुत्पादिवत्, अतः तस्य भ्रमोपादानत्वाभावत् लक्षणस्य तत्र अव्याप्तिः इति चेत् न। कारणं हि द्विविधं भवति फलोपधायकत्वेन स्वरूपयोग्यत्वेन च। तथाहि घटस्य उत्पत्तौ चक्रभ्रमणोपयोगी घटोत्पत्तिस्थले विद्यमानो दण्डः कार्यजनकः, अतः स फलोपधायकः। परन्तु अरण्ये विद्यमानः दण्डः अपि घटनिर्माणे कारणं भवितुं समर्थः। अतः अरण्ये विद्यमाने दण्डे योग्यता अस्ति। एवं प्रकृते शुक्तिज्ञानेन निवृत्तस्य अज्ञानस्य भ्रमजनकत्वाभावेऽपि भ्रमोपादानयोग्यता अस्ति। अतः तत्रापि अचेतनत्वेन भ्रमोपादनत्वमिति लक्षणं सुतरां सङ्गच्छते इति नाव्याप्तिः। अतः अचेतनत्वेन परिणामित्वेन भ्रमोपादानत्वमिति निर्दुष्टं माया लक्षणमिति सिध्यति।



### पाठगतप्रश्नाः २

१३. अविद्याया भावरूपत्वस्य तात्पर्यं किम्।

१४. अविद्यापदेन विद्याया अभावः इत्यर्थः कुतो न गृह्यते।



१५. वस्तुगत्या अविद्यायाः भावरूपत्वम् अभावरूपत्वं वा।

१६. अविद्येत्यत्र नञः कोऽर्थः।

१७. अविद्याया ज्ञाननिवर्त्यत्वे किं श्रुतिप्रमाणम्।

१८. अविद्यालक्षणे ज्ञाननिवर्त्यत्वपदस्य किं तात्पर्यम्।

१९. ज्ञानं केन रूपेण अज्ञानस्य निवर्तकं भवति।

२०. मायाया अपरं लक्षणं किम्।

२१. भ्रमोपादानत्वम् इति मायालक्षणे सति कुत्रातिव्याप्तिः, कथं च तस्य परिहारः।

२२. शुक्तौ शुक्तिज्ञानकाले शुक्तिविषयकस्य अज्ञानस्य कथं भ्रमोपादानत्वम्।

---

वेदान्तसारकृता सदानन्दयोगीन्द्रेण पूर्वपूर्वाचार्याणां लक्षणानि समादाय अज्ञानलक्षणमेवं निबध्नाति स्वग्रन्थे – अज्ञानं तु सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित् इति। ज्ञानविरोधित्वं भावरूपत्वं च पूर्वमालोचितम्। सदसद्भ्याम् अनिर्वचनीयत्वं, त्रिगुणात्मकत्वं यत्किञ्चित्त्वं च इदानीं विचार्यते।

## १२.८) अविद्याया अनिर्वचनीयत्वम्

अज्ञानं न हि सत्। सत् नाम कालत्रयाबाध्यम्। यथा हि घटज्ञानानन्तरं घटविषयकमज्ञानं बाधितं भवति तथैव ब्रह्मज्ञानानन्तरम् ब्रह्मविषयकमज्ञानं बाधितं भवति। अज्ञानं न हि असत्। असत् नाम अलीकम् शशशृङ्गादि। परन्तु अहमज्ञः इत्याद्यनुभवेषु अज्ञानस्य अपरोक्षप्रतीतिः भवति, अतः अज्ञानं न असत्। अलीकस्य कदापि कस्मिंश्चिद् अधिकरणे ज्ञानं न भवति। न हि कश्चित्र कुत्रापि शशशृङ्गं साक्षात्करोति। न च अज्ञानं सदसदुभयात्मकम्, एकस्मिन्नेव धर्मिणि अज्ञाने सत् असत् चेति विरुद्धधर्मद्वयस्य स्थितिः न सम्भवति। अतः अज्ञानं न सत्, नापि असत्, नापि सदसदुभयात्मकम्, परन्तु सदसद्भ्याम् अनिर्वचनीयं हि तत्। उच्यते च अनिर्वचनीयस्य लक्षणम् –

**प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं च यत्।**
**गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः॥ इति।**

विवेकचूडामणौ भगवच्छङ्कराचार्यैरप्युक्तं –

**सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो।**
**साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भुतानिर्वचनीयरूपा॥ इति।**

## १२.९) अविद्यायाः त्रिगुणात्मकत्वम्

सा च माया त्रिगुणात्मिका। ते च गुणाः लोहितशुक्लकृष्णाः इति श्रुतिषु प्रतिपादितम्। मायाकार्येषु तेजसि अप्सु पृथिव्यां त्रिवृत्करणेन समुत्पन्नेषु स्थूलभूतेषु च एतद्गुणत्रयसत्त्वात् तत्कारणभूता माया अपि त्रिगुणात्मिका इति सिध्यति। आम्नातं च-

**यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य इति।**

यद्वा गुणत्रयं हि सत्त्वं रजः तमश्चेति। मायायाः त्रिगुणात्मकत्वं श्रुतौ भगवद्गीतासु च प्रतिपादितम्। तथाहि अजामेकां लोहितशुक्लकृष्णाम् इति श्रुतौ लोहितशुक्लकृष्णपदैः रजस्सत्त्वतमसां निर्देशो विहितः। भगवद्गीतासु च – सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः, दैवी ह्येषा गुणमयी, प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः, प्रकृतेर्गुणसम्मूढाः, य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह इत्यादीनि मायायाः त्रिगुणात्मकत्वप्रतिपादकानि वचांसि सुलभानि। कारणस्य अज्ञानस्य त्रिगुणात्मकत्वात् अज्ञानात् समुत्पन्नमिदं जगत् अपि त्रिगुणात्मकम्। गुणत्रयात्मकत्वाच्च मायाया अभावरूपता न सङ्गच्छते, भावपदार्थस्य एव गुणा भवन्ति नाभावस्य।न च सा माया शृङ्गग्राहिकन्यायेन इदमित्थन्तया प्रदर्शयितु शक्यते। अतो यत्किञ्चिदिति मायाविशेषणं प्रदत्तम्।

## १२.१०) मायायां प्रमाणानि

मायासिद्धौ सन्ति बहूनि प्रमाणानि। तथाहि अहमज्ञः मामन्यं च न जानामि मयि ज्ञानं नास्ति त्वदुक्तमर्थं न जानामि इत्याद्यनुभवा हि अविद्यासत्त्वे प्रमाणम्। विवरणकारस्तु एतैरुदाहरणैः अविद्याया भावरूपत्वमपि प्रतिष्ठापयति। सुखमहमस्वाप्सं न किञ्चिद् अवेदिषम् इत्यादिसुषुप्तिकालीनः अनुभवोऽपि अविद्यां प्रमापयति। तथाहि अहम् अज्ञः इत्युक्तौ न हि अज्ञानस्य अभावरूपता वक्तुं शक्यते। यथा अहं सुखी इत्यादौ सुखस्य प्रत्यक्षं ज्ञानं भवति तथैव अहम् अज्ञ इत्यादौ अज्ञानस्य प्रत्यक्षत्वात् तस्य भावरूपत्वम् एव अङ्गीक्रियते। यतो हि अद्वैतवेदान्तिनां नये अभावस्य ज्ञानं न हि प्रत्यक्षेण भवति। अभावो हि अनुपलब्धिप्रमाणेन ज्ञातो भवति।

भावरूपाज्ञानसिद्ध्यर्थम् अनुमानमपि प्रमाणरूपेण उपन्यस्यते विवरणकृता प्रकाशात्मयतिना। अनुमानं तावत् – विवादगोचरापन्नं प्रमाणज्ञानं, स्वप्रागभाव-व्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिध्यति।

देवात्मशक्तिं स्वगुणैर्निगूढाम्, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, तरत्यविद्यां वितताम्, तम आसीत् तमसा गूढम्, अजामेकां लोहितशुक्लकृष्णाम् बह्वीः प्रजाः सृजमानां सरूपाः इत्यादिश्रुतयः मायास्तित्वं ख्यापयन्ति।

अज्ञानसिद्धौ दृष्टार्थापत्तिः अपि प्रमाणं वर्तते। ब्रह्मणि आरोपितस्य मिथ्याभूतस्य अहङ्कारस्य शुक्तिकायां चारोपितस्य मिथ्याभूतस्य रजतस्य मिथ्याभूतमेव किञ्चिदुपादानं कल्पनीयम्। यदि उपादानं सत्यं स्यात् तर्हि कार्यस्यापि सत्यत्वात् कार्यस्य बाधः एव न भवेत्। अस्य च मिथ्याभूतस्य उपादानस्य



सादित्वे अस्यापि किञ्चिदुपादानं कल्पनीयम् भवेत्। अतः मिथ्याभूतमिदम् उपादानम् अनादि इति अङ्गीकरणीयम्। अतो यद् अनादि स्वयं मिथ्या मिथ्याभूतकार्योपादानम् आत्मसम्बन्धि तदज्ञानमिति कल्प्यते, यतो हि तादृशकारणम् अन्तरेण मिथ्याध्यासो न उपपद्यते। अज्ञानस्य उपादानत्वात् तस्य भावरूपत्वमपि सिध्यति।

अज्ञानसिद्धौ श्रुतार्थापत्तिः प्रमाणमपि अस्ति। तथाहि तरति शोकमात्मवित् इत्यादिश्रुतिषु आत्मज्ञाननिवर्त्यस्य बन्धहेतोः शोकोपलक्षितस्य अज्ञानस्य अस्तित्वं खाप्यते। अज्ञानरूपनिवर्त्यस्य सिद्धिमन्तरेण अज्ञाननिवृत्तिः नैव निरूपयितुं शक्यते। अतः अस्ति अज्ञानमिति निर्विवादम्।



## पाठगतप्रश्नाः ३

२३. वेदान्तसारकृतम् अज्ञानलक्षणं किम्।
२४. अज्ञानं कुते न सत्, कुतो वा न असत्।
२५. अज्ञानस्य अनिर्वचनीयत्वं कुतः।
२६. अविद्यायां विद्यमानं गुणत्रयं किम्।
२७. मायायां किं तावत् प्रत्यक्षप्रमाणम्।
२८. मायासिद्धौ किं तावदनुमानम्।
२९. मायासिद्धौ प्रमाणभूताः श्रुतयः काः।
३०. अज्ञानसिद्धौ का तावद् दृष्टार्थापत्तिः।
३१. अज्ञानसिद्धौ का श्रुतार्थापत्तिः।

## १२.११) मायाविद्ययोः भिन्नत्वम् अभिन्नत्वं वा

केषाञ्चन मते माया अविद्या इति समार्थकौ शब्दौ। शङ्करभगवत्पादैः मायाविद्ययोः पर्यायत्वेन एव प्रयोगो विहितः। तथाहि ब्रह्मसूत्रस्य प्रथमाध्यायस्य चतुर्थपादस्य तृतीये तदधीनत्वादर्थवत् इति सूत्रे भगवत्पादैर्लिख्यते – "अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिः... तदेतदव्यक्तं...क्वचिन्मायेति सूचितम् – मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति मन्त्रवर्णात्, अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्" इति। भगवद्गीतासु पञ्चमाध्यायस्य चतुर्दशतममन्त्रव्याख्यानावसरे च शङ्कराचार्यैरुच्यते - स्वभावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिः माया प्रवर्तते 'दैवी हि' (भ. गी. ७ । १४) इत्यादिना वक्ष्यमाणा इति। परन्तु उत्तरवर्तिभिरद्वैतिभिः मायाविद्ययोः भिन्नतया पारिभाषिकतया व्यवहारो विहितः।

तथाहि केषाञ्चन मतं तावत् सर्वेषां भूतानां प्रकृतिः ब्रह्माश्रिता हि माया। सा हि एका, सा च ईश्वरस्य उपाधिः। अविद्या हि परिच्छिन्ना अनन्ता जीवोपाधिः। अतो माया अविद्या च भिन्ना।



तत्त्वविवेकप्रकरणे विद्यारण्यस्वामी अपि मायाविद्ययोर्भेदं प्रतिपादितवान्। तन्मते रजस्तमोभ्यामनभिभूता शुद्धसत्त्वप्रधाना माया, रजस्तमोभ्यामभिभूता मलिनसत्त्वप्रधाना हि अविद्या। मायायां चैतन्यप्रतिबिम्बं हि ईश्वरः, अविद्यायां चैतन्यप्रतिबिम्बं च जीव इति तदीयं मतम्। उक्तं च तेन – सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते इति। क्वचिच्च मायाविद्ययोर्भेद एवं प्रतिपाद्यते यत् – एका एव मूलप्रकृतिः विक्षेपशक्तिप्राधान्येन माया इति कथ्यते आवरणशक्तिप्राधान्येन च अविद्या इति कथ्यते। माया च ईश्वरोपाधिर्भवति, अविद्या च जीवोपाधिः। आवरणकारणादेव जीवस्य अज्ञोऽस्मि इत्यनुभवः, न तु ईश्वरस्य।

## १२.१२) मायाया एकत्वनानात्वविचारः

ब्रह्मसूत्रशाङ्करभाष्यस्योपरि वाचस्पतिमिश्रस्य भामतीटीका प्रसिद्धा। ब्रह्मसूत्रशाङ्करभाष्यस्योपरि पद्मपादाचार्यस्य पञ्चपादिकाटीका तस्याः टीकायाश्च विवरणाख्यव्याख्यानं प्रकाशात्मयतिना कृतम्। भामतीकारो हि मायाया अनेकत्वं स्वीकरोति, विवरणकारः प्रकाशात्मयतिस्तु मायाया एकत्वमङ्गीकरोति।

भामतीकारमते तावत् न हि अविद्या एका, प्रतिजीवं सा भिद्यते। अतः एकस्य बद्धजीवस्य अविद्यानिवृत्तौ न हि सर्वेषां मोक्षः सम्भवति। अतः वाक्यान्वयाधिकरणभाष्यविचारकाले उच्यते तेन – यथा हि बिम्बस्य मणिकृपाणादयो गुहा एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा इति। अविद्याबहुत्वं इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतिसिद्धम्।

विवरणकारमते तु मूलाविद्या तु एका एव। आम्नायते च अविद्याया एकत्वम् – अजामेकां लोहितशुक्लकृष्णाम्, मायां तु प्रकृतिं विद्यात् इत्यादिश्रुतिषु। इन्द्रो मायाभिः इत्यादिश्रुतिषु मायायां बहुवचनं मायास्थितशक्तिबहुत्वदृष्ट्या आम्नातम् इति बोध्यम्। शुक्तिरजताद्युपादानभूतानि अज्ञानानि हि मूलाविद्याया एव अवस्थाभेदाः, तानि च अज्ञानानि शुक्त्यादिज्ञानेन निवर्तन्ते। मूलाविद्याया एकत्वेऽपि बद्धमुक्तव्यवस्था सुतरामुपपद्यते प्रतिजीवम् अविद्यायाः अवस्थाभेदमङ्गीकृत्य। तथाहि अविद्या हि अंशविशिष्टा, कुत्रचिदुपाधौ ब्रह्मज्ञाने सति अविद्यायाः कश्चिदंशो निवर्तते, अन्येषु उपाधिषु अविद्यायाः स्थितौ न हि सर्वेषां मुक्तिर्भवति।

## १२.१३) मायाया आश्रयत्वविषयत्वविचारः

अहं घटं न जानामि इत्यनेन घटाज्ञानं ख्यापितं भवति। अत्र च अज्ञानस्य विषयः घटः, यतः घटस्य एव ज्ञानमत्र नास्तीति प्रतिपाद्यते। अज्ञानस्य आश्रयश्चात्र अहमिति। विषयज्ञानम् अज्ञानञ्च न हि निराश्रयं तिष्ठति। अतः अविद्यायाः मायापर्यायभूतायाः कस्तावदाश्रयः, को वा विषयः इति विचारणीयम्। अविद्याश्रयत्वविषयत्वविषये अस्ति मतभेदः विवरणभामतीप्रस्थानयोः।

भामतीकारमते अविद्यायाः आश्रयो जीवः। न हि निरुपाधिके ब्रह्मणि अविद्या स्थातुमर्हति। अविद्यायाः विषयस्तु ब्रह्म एव। जीवो हि ब्रह्मस्वरूपम् अपरोक्षतया न जानाति इत्यस्माद् वाक्याद् अविद्यायाः विषयः ब्रह्म एव इति स्पष्टं ज्ञायते। जीवे हि ब्रह्मविषयकमज्ञानम् अस्ति। अतः



समन्वयाधिकरणभाष्यविचारकाले भामतीकृता उच्यते – "नाविद्या ब्रह्माश्रया, किं तु जीवे, सा त्वनिर्वचनीयेत्युक्तम्, तेन नित्यशुद्धमेव ब्रह्म" इति।

विवरणकारमते संक्षेपशारीरककारस्य सर्वज्ञात्ममुनेश्च मते अज्ञानस्य आश्रयः विषयश्च ब्रह्म एव। अज्ञानस्य ब्रह्माश्रयत्वे नास्ति दोषः। न ह्यस्ति अज्ञानस्य शुद्धचैतन्यस्य च विरोधः। ब्रह्म हि अज्ञानस्य अवभासकम्, साक्षिचैतन्यस्य अज्ञानावभासकत्वम् अद्वैतिभिः अङ्गीक्रियते। यथा गृहे विद्यमानं तमः गृहमेव विषयीकरोति एवम् अविद्या अपि ब्रह्माश्रिता ब्रह्म एव विषयीकरोति इति नास्ति काचिदनुपपत्तिः। उच्यते च विवरणकारेण प्रथमवर्णके – "न तावदज्ञानम् आश्रयविषयभेदापेक्षम्, किन्तु एकस्मिन्नेव वस्तुनि आश्रयत्वमावरणं चेति कृत्यद्वयं सम्पादयति" इति। संक्षेपशारीरककारेण उच्यते –

**आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।**

**पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥ (सं.शा. १.३.१९) इति।**

## १२.१४) मायाया जगदुपादानत्वविचारः

ब्रह्म हि जगतः निमित्तकारणम् विवर्तोपादानकारणञ्च, माया हि परिणाम्युपादानकारणम् इति पूर्वपाठेषु आलोचितम्। परन्तु माया जगदुपादानत्वं कथंमिति विषये अद्वैतवेदान्त बहवो विचाराः समुपलभ्यन्ते।

तथाहि पदार्थतत्त्वनिर्णयकाराणां मते "यतो वा इमानि भूतानि जायन्ते" "मायां तु प्रकृति विद्यात्" इत्युभयविधश्रुतिदर्शनात् ब्रह्म माया उभयमेव जगदुपादानमिति ज्ञेयम्। एतयोर्ब्रह्म विवर्तमानतया जगदुपादानम्, माया च परिणममाना जगदुपादानम्।

संक्षेपशारीरककाराणां मते तावत् ब्रह्म एव जगदुपादानम्। कूटस्थस्य ब्रह्मणः स्वतः कारणत्वं न सम्भवति, तस्य निर्गुणत्वात् निर्विशेषत्वात्। अतः माया हि द्वारकारणम्। यथा द्वारम् अकारणमपि कार्ये अनुगतं तिष्ठति तथैव मायापि प्रपञ्चे अनुगता तिष्ठति। अत्र उदाहरणरूपेण कथयितुं शक्यते यत् यता मृत्तिका हि घटस्य उपादानम्। मृत्तिकायाः घटरूपताप्राप्तिं प्रति तद्गतश्लक्ष्णत्वं द्वारम्। अतः संक्षेपशारीरककारमते माया हि प्रपञ्चोत्पत्तौ द्वारकारणम्, उपादानं तु ब्रह्म एव।

वाचस्पतिमिश्रमते तु माया हि जीवाश्रिता। तादृशमायया विषयीकृतं ब्रह्म स्वत एव प्रपञ्चाकारेण विवर्तते। अतः ब्रह्म एव प्रपञ्चस्य उपादानम्। माया हि सहकारिमात्रम्, न कार्यानुगतं द्वारकारणम्।

वेदान्तसिद्धान्तमुक्तावलीकृतां प्रकाशानन्दस्वामिनां मते तावत् – मायाशक्तिरेव जगदुपादानं न ब्रह्म। यतो हि ब्रह्मणः कारणत्वं निषेधन्ति 'तदेतद्ब्रह्मापूर्वमनपरमबाह्यम्' 'न तस्य कार्यं करणञ्च विद्यते' इत्यादिश्रुतयः। अतो जगदुपादानभूतायाः मायाया अधिष्ठानत्वेन ब्रह्मणि कारणत्वम् उपचर्यते। ब्रह्मणि जगत्कारणता तु गौणी।



## पाठगतप्रश्नाः ४

३२. शङ्कराचार्यमते मायाविद्ययोः भिन्नत्वम् अभिन्नत्वं वा।

३३. विद्यारण्यस्वामिनो मते का माया, का चाविद्या।

३४. वाचस्पतिमिश्राः मायाया एकत्वम् अनेकत्वं वा अङ्गीकुर्वन्ति।

३५. विवरणकारमते माया एका अनेका वा।

३६. अज्ञानस्य कः आश्रयः, को वा विषयः।

३७. संक्षेपशारीरककाराणां मते मायायाः कीदृशं जगदुपादानत्वम्।

३८. वाचस्पतिमिश्रमते मायायाः जगदुपादानत्वं कीदृशम्।



## पाठसारः

अद्वैतवेदान्तमते माया हि जगत्कारणम्। मायोपहितं चैतन्यमेव ईश्वरः। ईश्वरः मायाधीशः, मायां वशीकृत्य स जगन्निर्माति। सा च माया श्रुतिस्मृतिसिद्धा। मानार्थकात् माधातोः माछाससिभ्यो यः इति सूत्रेण य-प्रत्यये, ततः स्त्रीत्वविवक्षाया टापि माया इति शब्दः सिध्यति। मीयते अपरोक्षवत् प्रदर्श्यते अनया इति माया इत्यादयः अर्थाः मायाया व्युत्पत्तिदृष्ट्या सम्भवन्ति। अज्ञानम्, अविद्या, प्रकृतिः, मिथ्याज्ञानम्, अव्यक्तम् इत्यादयः मायायाः पर्यायवाचिनः।

चित्सुखाचार्यप्रतिपादितं मायालक्षणं हि अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम् इति। उत्तरज्ञाननाश्ये पूर्वज्ञाने अतिव्याप्तिवारणाय लक्षणे अनादिपदम् उपात्तम्। ज्ञानप्रागभावे अतिव्याप्तिवारणाय भावरूपपदोपादानम्, अनादौ भावरूपे आत्मनि लक्षणस्य अतिव्याप्तिवारणाय ज्ञाननिवर्त्यत्वपदम् उपात्तम्। माया उत्पत्तिरहिता, अतः सा अनादिः। अखिलजगतः उपादानं हि माया। न हि अभावः कस्यापि उपादानं भवति, अतः माया भावरूपा। अनादित्वात् भावरूपत्वाच्च न माया आत्मवत् नित्येति चिन्तनीयम्, ब्रह्मज्ञानेन तस्याः निवृत्तेः। शुक्तिः उत्पद्यते, अतः तद्विषयिणी अविद्या अपि उत्पद्यते। शुक्तिविषयिणी अविद्या हि तूलाविद्या, सा च सादिः। अतस्तूलाविद्यायाम् अविद्यालक्षणस्य अव्याप्तिः इति चेन्न, शुक्तिरूपकल्पितोपाधिकारणादेव अत्र अविद्यायाः सादित्वमुच्यते। अविद्या हि स्वरूपतः अनादिः। अद्वेतिसम्मते अनादिषट्के अविद्यायाः परिगणनं भवति। अविद्याया भावरूपत्वं तस्या अभावरूपत्वनिषेधार्थमेव उच्यते। वस्तुतस्तु अविद्या भावाभावविलक्षणा अनिर्वचनीया। अविद्यायाः ज्ञाननिवर्त्यत्वे तरति शोकमात्मवित् इत्यादिश्रुतयः प्रमाणम्। एवं ज्ञानत्वेन ज्ञाननिवर्त्यत्वम् इत्यपि मायाया निर्दुष्टं लक्षणं सम्भवति। ज्ञानं स्वरूपेण अज्ञानस्यैव निवर्तकं भवति।

भ्रमोपादानत्वम् इति अविद्यायाः द्वितीयं लक्षणं मधुसूदनस्वामिना प्रतिपाद्यते। अत्र परिणामित्वेन अचेतनत्वेन वा भ्रमोपादानत्वम् अविद्याया लक्षणमिति तात्पर्यम्। तेन च चेतने जगतो विवर्तकारणभूते



आत्मनि न लक्षणस्यातिव्याप्तिः। पूर्वाचार्याणां मतानि संगृह्य सदानन्दयोगीन्द्रेण अज्ञानलक्षणविषये एवमुच्यते – अज्ञानं तु सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित् इति।

अविद्या हि अनिर्वचनीया। अविद्या सत् स्याच्चेन्न बाध्येत, असत् चेन्न तस्याः प्रतीतिः स्यात्। न चाविद्या सदसदुभयात्मकम्, परस्परविरुद्धधर्मयोः एकत्र धर्मिणि असम्भवात्। अतः अविद्या कोटित्रयविनिर्मुक्ता अनिर्वचनीया च। अविद्या च सत्त्वरजस्तमोरूपगुणत्रयात्मिका।

मायासत्त्वे सन्ति प्रत्यक्षादीनि बहूनि प्रमाणानि सन्ति। तथाहि अहमज्ञः, मामन्यं च न जानामि इत्यादिप्रत्यक्षाणि; विवादगोचरापन्नं प्रमाणज्ञानं, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति इत्याद्यनुमानानि, देवात्मशक्तिं स्वगुणैर्निगूढाम् मायां तु प्रकृतिं विद्यात् इत्यादिश्रुतयः, ब्रह्मणि आरोपितस्य मिथ्याभूतस्य अहङ्कारस्य शुक्तिकायां चारोपितस्य मिथ्याभूतस्य रजतस्य मिथ्याभूतमेव किञ्चिदुपादानं स्यादिति दृष्टार्थापत्तिः, तरति शोकम् आत्मवित् इत्यादिश्रुतिषु आत्मज्ञाननिवर्त्यत्वात् मिथ्या एव बन्धहेतुः शोकोपलक्षितम् अज्ञानमिति श्रुतार्थापत्तिश्च मायायाः सत्त्वे प्रमाणानि।

शङ्कराचार्येण मायाविद्ययोः पर्यायशब्दरूपेण व्यवहारो विहितः, परन्तु परवर्तिभिः अद्वैतिभिः मायाविद्ययोः भिन्नतया पारिभाषिकतया व्यवहारो विहितः। केषाञ्चन मते माया हि ईश्वरोपाधिः अविद्या च जीवोपाधिः। केचन पुनः एका एव मूलप्रकृतिः विक्षेपशक्तिप्राधान्येन माया, आवरणशक्तिप्राधान्येन च अविद्या इति कथयन्ति।

भामतीकारमते माया हि प्रतिजीवं भिन्ना, विवरणकारमते तावत् माया एका एव। प्रतिजीवम् एकस्या एव अविद्याया अवस्थाभेदाः दृश्यन्ते। भामतीकारमते च मायाया आश्रयो जीवः, विषयो हि ब्रह्म। विवरणकारमते तु मायाया आश्रयो विषयश्च ब्रह्म एव।

मायाया जगदुपादानत्वविषय पदार्थतत्त्वनिर्णयकाराणां मतं हि ब्रह्म विवर्तमानतया जगदुपादानं, माया च परिणममानतया जगदुपादानम् इति। संक्षेपशारीरककाराणां मते तु माया हि प्रपञ्चोत्पत्तौ द्वारकारणम्, उपादानं तु ब्रह्म एव। वाचस्पतिमते तु माया हि सहकारिमात्रं ब्रह्मणः, न कार्यानुगतं द्वारकारणम्। प्रकाशानन्दमते तावत् मायाशक्तिरेव जगदुपादानं न ब्रह्म। ब्रह्मणः जगत्कारणता मायाधिष्ठानत्वेन गौणी एवेति तन्मतम्।



## पाठान्तप्रश्नाः

१. मायाशब्दस्य व्युत्पत्तिलभ्या अर्थाः के।

२. चित्सुखाचार्येण प्रोक्तः अविद्यालक्षणप्रतिपादकः श्लोकः कः।

३. अनादित्वे सति ज्ञाननिवर्त्यत्वम् इति अविद्यालक्षणस्य ज्ञानप्रागभावे कुत अतिव्याप्तिः।

४. अनादिषट्कप्रतिपादकः श्लोकः कः।



५. कुतः अज्ञानं न घटादिविशेषज्ञानाभावः भवितुम् अर्हति।

६. अविद्याया भावरूपत्वं कुतः अङ्गीकर्तुं न शक्यते।

७. अविद्या इत्यत्र नञः अर्थः कः।

८. सोपाधिकभ्रमस्थलेषु ज्ञानोदयकाले एव अज्ञानस्य कुतो न निवृत्तिः।

९. अविद्यायाः त्रिगुणत्वप्रतिपादिका श्रुतिः का।

१०. अद्वैतवेदान्ते अभावस्य केन प्रमाणेन प्रत्यक्षता अङ्गीक्रियते।

११. विवरणमते मूलाविद्याया एकत्वात्, एकस्य ज्ञानेन सर्वेषां मुक्तिः कुतो न भवति।

१२. संक्षेपशारीरककारमते मायाया आश्रयः विषयश्च कः।



## पाठगतप्रश्नानामुत्तराणि

**पाठगतप्रश्नानामुत्तराणि १**

१. जगतः जडत्वाद् चेतनब्रह्मव्यतिरिक्तस्य द्वितीयस्य च अभावाद् जगदुपादानरूपेण माया अङ्गीक्रियते।

२. मायां तु प्रकृतिं विद्यात्, इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतयो मायायां प्रमाणम्।

३. मायासिद्धौ मम माया दुरत्यया, नाहं प्रकाशः सर्वस्य योगमायासमावृतः, अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः इत्यादिस्मृतयः प्रमाणम्।

४. मानार्थकात् माधातोः माछाससिभ्यो यः इति सूत्रेण य-प्रत्यये, ततः स्त्रीत्वविवक्षायां टापि माया इति शब्दसिद्धिः।

५. अज्ञानम्, अविद्या, प्रकृतिः, मिथ्याज्ञानम्, अव्यक्तम्, अव्याकृतं, महासुषुप्तिः, अक्षरम् इत्यादयः मायायाः पर्यायवाचकाः।

६. अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम्।

७. उत्तरज्ञाननाश्ये पूर्वज्ञाने अतिव्याप्तिवारणाय, अन्यथा उत्तरज्ञाननाश्यस्य पूर्वज्ञानस्य भावरूपत्वात् ज्ञाननिवर्त्यत्वात् च तत्र लक्षणस्यातिव्याप्तिः दुर्वारा स्यात्।

८. अनादौ ज्ञाननिवर्त्ये ज्ञानप्रागभावे अतिव्याप्तिवारणाय

९. अनादौ भावरूपे आत्मनि अतिव्याप्तिवारणाय

१०. जीवः, ईश्वरः, शुद्धचैतन्यम्, जीवेशयोर्भेदः, अविद्या, अविद्या-चैतन्ययोः सम्बन्धः इत्येते षट् अनादयः पदार्थाः अद्वैतवादे अङ्गीकृताः।

११. मूलाविद्या ब्रह्माश्रिता जगत्कारणं, ब्रह्मस्वरूपाच्छादिका च। तूलाविद्या हि शुक्त्यादिपरिच्छिन्ना भ्रमरजतादिहेतुः।

१२. न हि अज्ञानं स्वकार्यं जडां शुक्तिम् आश्रित्य तिष्ठति। शुक्त्यवच्छिन्नं चैतन्यमेव अज्ञानस्य विषयः। शुक्तिस्तु अज्ञानस्य अवच्छेदिका।



**पाठगतप्रश्नानामुत्तराणि २**

१३. अविद्याया भावरूपत्वस्य तात्पर्यं तावद् अभावविलक्षणत्वमेव।

१४. अविद्याया अभावरूपत्वे जगत उपादानम् अविद्या न स्यात्, अभावाद् भावोत्पत्तेः शङ्करेण शतधा दूषितत्वात्।

१५. वस्तुतस्तु अविद्या नापि भावरूपा, नापि अभावरूपा। अविद्या तु भावाभावविलक्षणा।

१६. अविद्येत्यत्र नञः विरोधित्वम् अर्थः। अतः अविद्या नाम विद्याविरोधि, विद्यानिवर्त्या वेति।

१७. तरति शोकमात्मवित्, तमेव विदित्वातिमृत्युमेति, ब्रह्म वेद ब्रह्मैव भवति इत्यादिश्रुतयः अविद्याया ज्ञाननिवर्त्यत्वे प्रमाणम्।

१८. अविद्यालक्षणे ज्ञाननिवर्त्यत्वपदस्य साक्षाज्ज्ञाननिवर्त्यत्वे तात्पर्यम्।

१९. ज्ञानं हि ज्ञानत्वेन अज्ञानस्य निवर्तकं भवति।

२०. भ्रमोपादानत्वम् इति मायाया अपरं लक्षणम्।

२१. ब्रह्मणि अतिव्याप्तिः, अतः लक्षणे परिणामित्वेन अचेतनत्वेन वेति पदं योजनीयम्।

२२. शुक्तिरजतोत्पत्त्यभावेऽपि शुक्तिविषयके अज्ञाने भ्रमोपादानत्वस्य स्वरूपयोग्यतायाः विद्यमानत्वात् फलोपधायकत्वाभावेऽपि भ्रमोपादानत्वं सिध्यति।

**पाठगतप्रश्नानामुत्तराणि ३**

२३. अज्ञानं तु सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित् इति।

२४. अज्ञानं हि ज्ञानेन बाधितं भवति, अतो न सत्। अज्ञानस्य च जगदाकारेण प्रतीतिः अस्ति, अतो न तत् शशशृङ्गवद् असत्।

२५. अज्ञानस्य सद्भिन्नत्वात् असद्भिन्नत्वात् सदसद्भिन्नत्वाच्च सदसद्भ्याम् अनिर्वचनीयत्वम्

२६. लोहितशुक्लकृष्णाः हि अविद्यास्थिताः गुणाः इति केचन, सत्त्वरजस्तमांसि हि अत्र गुणा इति च केचन आमनन्ति।

२७. अहमज्ञः, मामहं न जानामि इत्यादिप्रत्यक्षानुभवा हि मायायां प्रमाणम्।

२८. विवादगोचरापन्नं प्रमाणज्ञानं, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिध्यति।

२९. देवात्मशक्तिं स्वगुणैर्निगूढाम्, मायां तु प्रकृतिं विद्यात्, तरत्यविद्यां वितताम्, तम आसीत् तमसा गूढम्, अजामेकां लोहितशुक्लकृष्णाम् इत्यादिश्रुतयः मायासिद्धौ प्रमाणानि।

३०. ब्रह्मणि आरोपितस्य मिथ्याभूतस्य अहङ्कारस्य, शुक्तिकायां चारोपितस्य मिथ्याभूतस्य रजतस्य मिथ्याभूतमेव किञ्चिदुपादानं स्यादिति मिथ्याभूतरजतोपादानरूपेण अहङ्कारोपादानरूपेण च अज्ञानं कल्प्यते।



३१. तरति शोकमात्मवित् इत्यादिश्रुतिषु आत्मज्ञाननिवर्त्यस्य बन्धहेतोः शोकोपलक्षितस्य अज्ञानस्य असिद्धौ शोकतरणस्य अनुपपद्यमानत्वात् श्रुतार्थापत्त्यापि अज्ञानं सिध्यति।

**पाठगतप्रश्नानामुत्तराणि** ४

३२. शङ्कराचार्यमते मायाविद्ययोः अभिन्नता एवास्ति।

३३. विद्यारण्यस्वामिमते रजस्तमोभ्यामनभिभूता शुद्धसत्त्वप्रधाना ईश्वरोपाधिर्हि माया, रजस्तमोभ्यामभिभूता मलिनसत्त्वप्रधाना जीवोपाधिर्हि अविद्या।

३४. वाचस्पतिमिश्राः हि मायाया एकत्वम् अङ्गीकुर्वन्ति।

३५. विवरणकारमते माया एका एव।

३६. भामतीकारमते अज्ञानस्य आश्रयः जीवः, विषयस्तु ब्रह्म। विवरणकारमते अज्ञानस्य आश्रयः विषयश्च ब्रह्म एव।

३७. संक्षेपशारीरककाराणां मते ब्रह्म एव जगदुपादानं, माया तु द्वारकारणम्।

३८. वाचस्पतिमिश्रमते माया हि सहकारिमात्रम्, ब्रह्म एव प्रपञ्चस्य उपादानम्।

॥ इति द्वादशः पाठः ॥



# १३

# अध्यासलक्षणविचारः

## प्रस्तावना

धर्मः अर्थः कामः मोक्षः इति चत्वारः पुरुषार्थाः। प्रत्येकं पुरुषार्थानां लाभोपायं प्रतिपादयितुं शास्त्राणि रचितानि। मन्वादिप्रणीतानि धर्मशास्त्राणि, कौटिल्यशुक्रादिप्रणीतानि अर्थशास्त्राणि, वात्स्यायनादिप्रणीतानि कामशास्त्राणि च लोके प्रथितानि। दर्शनानि हि मोक्षशास्त्राणि। भारतीयदर्शनानि आस्तिकनास्तिकभेदेन द्विधा विभक्तानि। यानि दर्शनानि वेदस्य प्रामाण्यमभ्युपगच्छन्ति तानि आस्तिकानि, यानि च तत् नाभ्युपगच्छन्ति तानि नास्तिकानि। चार्वाक-जैन-बोद्धदर्शनानि नास्तिकानि, सांख्य-योग-न्याय-वैशेषिक-पूर्वमीमासोत्तरमीमासादर्शनानि आस्तिकदर्शनानि। कर्मकाण्डान्तर्गतानां वेदवाक्यानां विचारः पूर्वमीमांसादर्शने भवति। ज्ञानकाण्डरूपाणाम् उपनिषदां विचारः उत्तरमीमांसादर्शने भवति। उत्तरमीमांसादर्शनस्यैव वेदान्त इत्यपरं नाम। उपनिषदः, श्रीमद्भगवद्गीता, ब्रह्मसूत्रम् इति प्रस्थानत्रयमाधारीकृत्य वेदान्तानां प्रपञ्चो भवति। प्रस्थानत्रयस्य बहुविधव्याख्यानदर्शनात् बहवो वेदान्ताः अद्वैत-विशिष्टाद्वैत-द्वैत-द्वैताद्वैत-भेदाभेदादयः प्रादुर्भूताः। एतेषु सर्वेषु शङ्कराचार्येण उपबृंहितः अद्वैतवेदान्त एव सर्वातिशायितया विराजतेतराम्।

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः इति अद्वैतवेदान्तस्य प्रतिपाद्यविषयाणां सारः। ब्रह्मणः स्वरूपस्य अतीत-वर्तमान-भविष्यत्कालेषु परिवर्तनं न भवति, अतो ब्रह्म सत्यम्। अतः शङ्कराचार्यः तैत्तिरीयोपनिषदः भाष्ये कथयति – यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत् सत्यम् इति। सत्यं नित्यमिति अनर्थान्तरम्। किञ्च, ब्रह्म शुद्धम् अविद्यादिदोषशून्यत्वात्, बुद्धम् अजडत्वात्, मुक्तं तस्य बन्धासम्भवात्, आनन्दस्वरूपं च परप्रेमास्पदत्वात्। यत् यत्र प्रतीयते, परवर्तिकाले उत्पन्नेन यथार्थज्ञानेन तत्रैव तत् निषिध्यते चेत् तत् मिथ्या भवति। अनुभूयमानं जगदिदमुत्पद्यते नश्यति च, अतो न सत्। नापि शशशृङ्गवत् असत्, यतो हि जगतः प्रतीतिरस्ति। न वा जगत् सदसदुभयात्मकम्, परस्परविरुद्धधर्मयोः एकत्र असम्भवात्। अतो जगत् सदसद्भ्याम् अनिर्वचनीयम्। ब्रह्म एव स्वस्मिन् आरोपितायाः मायायाः कार्येण अन्तःकरणेन उपहितः सन् जीवो भवति; यथा आकाशः एकोऽपि घटरूपोपाधिना सह सम्पर्कात् घटाकाशो भवति तद्वत्। अन्तःकरणानि बहूनि, अतो जीवा अपि बहवः। तेषु यः शास्त्राचार्योपदेशैः शमदमादिना च संस्कृतेन मनसा श्रवण-मनन-निदिध्यासनैः स्वस्य ब्रह्मस्वरूपत्वं साक्षात्करोति सः मुच्यते। मुक्तिश्च आत्यन्तिकदुःखनिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च। सा मुक्तिः श्रवणादिभिः ब्रह्माकारचित्तवृत्तेरुदयेन अज्ञाननाशात् सिद्ध्यति।



अद्वैतवेदान्तशास्त्रावबोधाय ब्रह्ममायादिज्ञानेन सह अध्यासस्य ज्ञानमपि सुतरामपेक्षितम्। अध्यासज्ञानं विना निर्गुणस्य ब्रह्मणः कथं जीवत्वं, जीवस्य च कथं कर्तृत्वभोक्तृत्वादिबन्धः, कथं च अध्यस्तानां बन्धानां निवृत्तिः इत्यादयो विषया ज्ञातुं न शक्यन्ते। अखिलस्य जगतः ब्रह्मणि अध्यस्तत्वात् जगतो मिथ्यात्वमिति निश्चेतुम् कोऽयमध्यासः, किं तत्र कारणम्, के तस्य अध्यासस्य भेदाः, कथं सर्वविधानां लौकिकानां शास्त्रीयाणां च व्यवहाराणाम् अध्यासपूर्वकता, कथं चाध्यासस्य निवृत्तिः इत्यादिविषयाः सुतरां ज्ञातव्याः। अस्मिन्पाठे वयं तानेवांशान् आलोच्य पठामः।



## उद्देश्यानि

अस्मिन् पाठे अधोलिखितान् विषयान् ज्ञातुं शक्नुवन्ति छात्राः –

- अद्वैतवेदान्ते अध्यासालोचनस्य किं तावत् प्रयोजनम्।
- अध्यासपदस्य व्युत्पत्तिगतः अर्थः कः।
- अध्यासलक्षणम्, अध्यासलक्षणविचारे मतभेदाः
- अध्यासस्य भेदाः
- अध्याससत्त्वे प्रमाणम्
- लौकिकानां शास्त्रीयाणां च व्यवहाराणाम् आध्यासिकत्वम्

## १३.१) अध्यासप्रयोजनम्

अद्वैतवेदान्ते प्रतिपाद्यविषयः तावत् जीवब्रह्मणोरैक्यम्, मुक्तिश्च शास्त्रस्यास्य प्रयोजनम्। जीवब्रह्मणोः ऐक्यं लोके प्रसिद्धं चेत् न हि तज्ज्ञानाय अद्वैतवेदान्ते प्रज्ञावतां प्रवृत्तिः स्यात्। परन्तु अस्ति हि लोके अनुभवः शरीरेन्द्रियमनोबुद्ध्यादिभिः अवच्छिन्नः जीवो शास्त्रप्रतिपादितात् नित्यशुद्धबुद्धमुक्तस्वभावात् ब्रह्मणो भिन्नः इति।जीवब्रह्मणोः अयं भेदः तात्त्विकः चेत् न हि शास्त्रशतैः सः दूरीकर्तुं शक्यते। अतो जीवब्रह्मैक्यरूपविषयसिद्धये आदौ ब्रह्म एव अज्ञानकारणात् जीवो भवति इति ब्रह्मणः जीवत्वम् मिथ्या अध्यासकार्यमिति प्रतिपादनीयम्। अध्यासस्वरूपस्य ज्ञानं विना जीवस्य अध्यासकार्यत्वं नैव बुद्धिगोचरं भवतीति अध्यासः आदावेव आलोचनविषयतां याति।

किञ्च, बन्धनिवृत्तेर्हि मोक्षः सम्भवति। जीवस्य अविद्यादिकृतबन्धः यदि पारमार्थिकः तर्हि न केनाप्युपायेन तस्य निवृत्तिः सम्भवति। बन्धनिवृत्तेरसम्भवाच्च मुक्त्यसिद्धेः वेदान्तशास्त्रमेव विफलं स्यात्, न स्यात् तत्र प्रवृत्तिर्मुमुक्षूणाम्। अत्रोच्यते, न हि अविद्यादिकृत-कर्तृत्वभोक्तृत्वादिबन्धः पारमार्थिकः। बन्धोऽयं ब्रह्मणि आरोपितः, जीवस्य स्वस्वरूपज्ञाने सति एतेषां मिथ्याभूतानां बन्धानां निवृत्तिर्भवति, यथा हि रज्जुस्वरूपज्ञाने सति मिथ्याभूतसर्पस्य निवृत्तिर्भवति तद्वत्। छान्दोग्योपनिषदि श्रूयते च – तरति शोकम् आत्मवित् इति। अतोऽद्वैतवेदान्तस्य प्रयोजनसिद्धये बन्धस्य मिथात्वस्य अध्यस्तत्वस्य च प्रतिपादनार्थम् अध्यारोपापरपर्यायस्य अध्यासस्य लक्षणप्रमाणज्ञानं सुतरामपेक्षितम्।

वेदान्तशास्त्रेषु ब्रह्मविचारः प्रस्तुतः। विचारश्च सन्दिग्धे सप्रयोजने च विषये सम्भवति। ननु सर्वेषामेव अहमिति प्रत्यये भासमानत्वात् न हि ब्रह्म सन्दिग्धम्। आत्मनो यथार्थस्वरूपस्य ज्ञानेन भवति



संसारनिवृत्तिः, न च लोकप्रसिद्धात् आत्मानुभवात् अन्यः आत्मनो यथार्थस्वरूपस्य अनुभवो विद्यते। तादृशे आत्मयाथात्म्यानुभवे सत्यपि संसारस्य निवृत्त्यभावात् न हि ब्रह्मणः प्रयोजनमपि किञ्चिदस्ति। अतः सन्दिग्धत्वसप्रयोजनत्वाभावात् न विचार्यं ब्रह्म। अत्रोच्यते, प्राकृतानां जनानां अहमित्यनुभवे न हि श्रुतिप्रतिपाद्यं नित्यशुद्धबुद्धमुक्तस्वभावम् असंसारि आत्मतत्त्वं भासते। देहेन्द्रियमनोबुद्ध्यादीन् विषयान् तद्धर्मांश्च आत्मनि अध्यस्यैव अहं गौरः, अहं काणः, अहं सन्दिग्धे, अहं निश्चिनोमि इत्यादिव्यवहाराः प्रवर्तन्ते। अतः आध्यासिक एव अहमनुभवः साधारणजनानाम्। न केवलं साधारणजनानां पण्डितानामपि अहमनुभवः तदनुयायिलौकिकव्यवहारश्च अध्यासपूर्वकः एव। अतः जीवानां यथार्थब्रह्मस्वरूपस्य ज्ञानाभावात् तज्ज्ञानलाभाय विचार्यं ब्रह्मेति आपतति। श्रुतिप्रतिपादितब्रह्मणः साक्षात्कारे सति शुकवामदेवादीनामिव मोक्षः ध्रुव एव। अतो ब्रह्मविचारस्य सप्रयोजनत्वमपि सिद्ध्यति। अत इदं ब्रह्म सामान्यतो ज्ञातं विशेषतः अज्ञातम्। तथाहि देहेन्द्रियादिषु अध्यासवशात् देहेन्द्रियादिभिः अभिन्नतया ब्रह्म सामान्यतः सर्वैर्विज्ञायते। परन्तु सर्वोपाधिविनिर्मुक्ततया विशेषतो ब्रह्मणः ज्ञानं नैव जीवानामस्ति। अतो विचार्यं ब्रह्म। उच्यते च मण्डनमिश्रेण ब्रह्मसिद्धौ –

**सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।**

**प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥ इति।**

अध्यासप्रतिपादनं विना नैव ब्रह्मणः सन्दिग्धत्वं सप्रयोजनत्वं च प्रतिपादयितुं शक्यते, न च तेन विचार्यत्वं ब्रह्मणः शक्यते प्रतिपादयितुमिति अध्यासस्य आलोचनं सुतरामपेक्ष्यते।

उपनिषद आधारीकृत्य एव वेदान्तशास्त्राणां प्रवृत्तिः। उच्यते च शङ्कराचार्येण जन्माद्यधिकरणभाष्ये – वेदान्तवाक्य-कुसुम-ग्रथनार्थत्वात् सूत्राणाम् इति। उपनिषत्सु विधिमुखेन निषेधमुखेन च ब्रह्मस्वरूपं प्रतिपाद्यते। तथाहि निषेधद्वारकब्रह्मप्रतिपादकानि उपनिषद्वाक्यानि तावत् – नेह नानास्ति किञ्चन, अशब्दमस्पर्शमरूपमव्ययम्, अवाङ्मनसगोचरम् इत्यादीनि। विधिमुखेन ब्रह्म प्रतिपादयन्ति – सत्यं ज्ञानमनन्तं ब्रह्म, सर्वं खल्विदं ब्रह्म, सच्चिदानन्दं ब्रह्म इत्यादीनि उपनिषद्वाक्यानि। अत्र चायं पर्यनुयोगः – ननु इह ब्रह्मणि नानाभावात् कथं सर्वं खल्विदं ब्रह्म इति ब्रह्मणः सर्वव्यापकता सिध्यति। अत उपनिषद्वाक्यानां मिथो विरोधात् न हि प्रामाण्यं तेषां, अपास्तं च प्रामाण्यं तदाश्रितानां वेदान्तशास्त्राणाम्। अत्रोच्यते, न हि उपनिषद्वाक्यानां मिथो विरोधोऽस्ति। निषेधमुखेनैव ब्रह्मस्वरूपं सुवचम्। न हि ब्रह्मणि नानात्वमस्ति। न चानेन ब्रह्मणः सर्वव्यापकत्वविरोधः। सर्वव्यापकत्वं च ब्रह्मणः ब्रह्मणि आरोपितेषु अखिलेषु विषयेषु ब्रह्मणः अनुस्यूतत्वात्। उच्यते च शङ्कराचार्येण बृहदारण्यकोपनिद्भाष्ये – "तत्र च दर्शनविषये ब्रह्मणि न इह नाना अस्ति किञ्चन किञ्चिदपि; असति नानात्वे, नानात्वम् अध्यारोपयति अविद्यया" इति। तस्मात् अध्यासकारणादेव नानात्वप्रतीतिः भवति, न पारमार्थिकं नानात्वम् अस्ति। तेन उपनिषद्वाक्यानां विरुद्धार्थप्रतिपादकता अपि नास्ति, तदाश्रितानां वेदान्तग्रन्थानाम् अप्रामाण्यशङ्का अपि नापतति। अतोऽयमध्यासः अद्वैतवेदान्ततत्त्वालोचनप्रसङ्गे महद् गुरुत्वमावहति।



'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इत्येव उपदेशप्रक्रिया अद्वैतवेदान्ते। अपवादस्य अध्यारोपपूर्वकत्वात् आदौ अध्यारोपः प्रतिपादनीयः, तदनन्तरं च अध्यारोपितमिथ्याभूतविषयाणां निषेधो विधेयः। उच्यते च वेदान्तसारस्य बालबोधिनीटीकायाम् आपोदेवेन – 'अपवादस्य अध्यारोपपूर्वकत्वात् प्रथमम् अध्यारोपं निरूपयति' इति। अतोऽद्वैतवेदान्तविचारप्रसङ्गे आदावेव अध्यारोपापरपर्यायस्य अध्यासस्य विचारः कर्तव्य इति अध्यासप्रयोजनं स्पष्टम्।

## १३.२) अध्यासपदार्थः

अधीत्युपसर्गपूर्वकाद् दिवादिगणीयात् अस् धातोः घञ्प्रत्यये अध्यासपदं निष्पद्यते। अधीत्यस्य उपरि इत्यर्थः। अस्-धातुः क्षेपणार्थे वर्तते, 'असु क्षेपणे' इति धातुपाठात्। घञ्-प्रत्ययः भावार्थे कर्मार्थे च वर्तते। एकस्य वस्तुनः उपरि - अपरस्य वस्तुनः (भ्रमवशात्) क्षेपणस्य, (भ्रमवशतः) क्षिप्तस्य अपरस्य वस्तुनो वा अध्यासपदेन ग्रहणं भवति व्युत्पत्तिवशात्। तथाहि, भावार्थे घञ्-प्रत्यये निष्पन्नस्य अध्यासपदस्य अर्थस्तावत् अध्यारोपणक्रिया। कर्मवाच्ये घञ्-प्रत्यये निष्पन्नस्य अध्यासपदस्य अध्यारोपितं वस्तु एवार्थः। यथा रज्जौ भ्रमवशात् यत् सर्पज्ञानं जायते तदपि अध्यासपदवाच्यम्, रज्जौ यस्य सर्पस्य ज्ञानं भवति सः सर्पोऽपि अध्यासपदवाच्यः। प्रथमस्य अध्यासस्य ज्ञानाध्यास इति द्वितीयस्य च अर्थाध्यास इति अभिधानम्। एतयोर्विचारः अग्रे विधास्यते।



### पाठगतप्रश्नाः १

१. अद्वैतवेदान्तस्य प्रतिपाद्यविषयः कः।

२. अद्वैतवेदान्तशास्त्रस्य प्रयोजनं किम्।

३. कथं बन्धानां मिथ्यात्वम्।

४. कीदृशे विषये विचारः सम्भवति।

५. ब्रह्मणः कुतः सन्दिग्धत्वम्।

६. विधिमुखेन ब्रह्मप्रतिपादकानि श्रुतिवचनानि कानि।

७. निषेधमुखेन ब्रह्मप्रतिपादकानि श्रुतिवचनानि कानि।

८. अध्यासपदस्य का व्युत्पत्तिः।

९. अध्यासपदस्य व्युत्पत्तिगतः अर्थः कः।

---

## १३.३) अध्यासलक्षणम्

'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः न तूद्देशमात्रेण' इति शास्त्रनियमः। कस्यचिद् वस्तुनः सिद्धये तस्य लक्षणं, तल्लक्षणं लक्ष्ये अस्ति न वेति परीक्षार्थं प्रमाणं च अपेक्षितम्। किञ्च, पूर्वपक्षिण आक्षिपन्ति आत्मा अहमिति प्रत्यये विषयरूपेण भाषते, अनात्मा अहम्भिन्ने प्रत्यये; आत्मा विषयी भवति, अनात्मा तु



विषयः; अतः अत्यन्तभिन्नत्वात् आत्मानात्मनोः अध्यासो न सम्भवति इति। आत्मानात्मनोः अध्यासो यदि न स्वीक्रियते तर्हि परमात्मनः जीवत्वं कथञ्चिदपि प्रतिपादयितुं न शक्यते, तेन च बन्धमोक्षौ मोक्षोपयोगिनां शास्त्राणां प्रयोजनं च निरूपयितुं न शक्यन्ते। अतः अध्यासोऽस्ति इति प्रतिपादयितुम् आदौ अध्यासलक्षणं ततः तद्विषयकं प्रमाणं च आलोचनीयम्।

सदानन्दयोगीन्द्रप्रणीते वेदान्तसारे प्रतिपादितम् अध्यासलक्षणं हि – वस्तुनि अवस्त्वारोपः अध्यारोपः इति। अध्यासस्य उदाहरणं प्रस्तोतुमुक्तं तेन – असर्पभूतायां रज्जौ सर्पारोपवत् इति। वस्तुनि कस्मिंश्चित् पदार्थे अवस्तुनः तद्भिन्नस्य अपरस्य पदार्थस्य आरोपः अवभासः एव अध्यारोपः। उदाहरणे लक्षणसङ्गतिस्तु एवम् – वस्तुनि रज्जौ अवस्तुनः रज्जुभिन्नस्य सर्पस्य आरोपः अध्यारोपः इति। तथाहि वस्तुनि सच्चिदानन्दे ब्रह्मणि अवस्तुनः वस्तुभिन्नस्य ब्रह्मभिन्नस्य अज्ञानादिजडपदार्थानाम् आरोपः अवभास एव अध्यारोपः इत्यपि सिद्ध्यति। इदञ्च अध्यासस्य स्वरूपलक्षणं भवति। उक्तं च नृसिंहाश्रमाचार्येण पञ्चपादिकाविवरणस्य भावप्रकाशिकाटीकायां – 'परत्रावभास इत्यध्यासमात्रस्य स्वरूपलक्षणम्' इति।

अद्वैतवेदान्तसम्मतस्य अध्यासस्य इतरदर्शनसम्मताध्यासाद् विलक्षणता नानेन अध्यासलक्षणेन स्फुटा भवति। शङ्कराचार्येण ब्रह्मसूत्रभाष्यादौ अध्यासभाष्यं ग्रथितम्। तत्र प्रतिपादितेन अध्यासलक्षणेन स्वविलक्षणमतस्थापनम् अपरमतखण्डनं च सम्भवति। शङ्कराचार्येण विहितम् अध्यासलक्षणं हि - स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति। पञ्चपादिकाविवरणे प्रकाशात्मयतिना ब्रह्मसूत्रशाङ्करभाष्यटीकायां भामत्यां च वाचस्पतिमिश्रेण लक्षणमिदं विस्तरेण आलोचितम्। तद्व्याख्यानद्वयं पृथक्तया सरलरूपेण इदानीं प्रस्तूयते।

वाचस्पतिमिश्रेण लक्षणस्य व्याख्यानमेवं विधीयते यत् – स्मृतेः रूपमिव रूपं यस्य सः स्मृतिरूपः। रूपं नाम स्वरूपम्। स्मृतेः स्वरूपं च असन्निहितविषयत्वम्। यदा कस्यचित् वस्तुनः स्मृतिः भवति तदा तद्वस्तु समीपे न तिष्ठति। परत्र इत्यस्य सद्वस्तुनि इत्यर्थः, परत्रपदेन आरोपस्य अधिष्ठानं निर्दिष्टम्। पूर्वदृष्टस्य अवभासः पूर्वदृष्टावभासः। पूर्वं दृष्टं पूर्वदृष्टम्। दृश्-धातोः यद्यपि दर्शनम् इत्यर्थः तथापि इह तस्य ज्ञानमित्येव अर्थः ग्रहणीयः। अतः पूर्वं ज्ञातस्य ज्ञानविषयीभूतस्येति यावत्। पूर्वदृष्टपदेन आरोपणीयस्य उल्लेखः कृतः। आरोपणीयं हि मिथ्या, अतः पूर्वदृष्टपदेन मिथ्याभूतस्य अनृतस्य एव निर्देशनं विहितम्। अवभासपदस्य द्विधा अर्थो विहितो भामतीकारेण। अवसन्नः अवमतो वा भासः अवभासः इति। भासो नाम ज्ञानम्। अवसादः उच्छेदः, उत्तरज्ञानेन बाधितः इति यावत्। अवमानः यौक्तिकतिरस्कारः। ज्ञानस्य तिरस्कारो नाम ज्ञानस्य इच्छा-प्रवृत्त्यादिकार्यसम्पादने अक्षमता। एवम् उत्तरज्ञानेन बाधितं, युक्त्या तिरस्कृतं वा ज्ञानम् अवभासपदस्य अर्थः। तेन च पूर्वदृष्टस्य पूर्वं ज्ञातस्य, परत्र तद्भिन्ने सद्वस्तुनि, स्मृतिरूपः असन्निहितविषयकः, अवभासः बाधितं तिरस्कृतं वा ज्ञानम् एव अध्यासः। असन्निहितविषयकः अवभासो नाम असन्निहितस्य विषयस्य अवभास इति। अतः असन्निहितस्य पूर्वदृष्टस्य विषयस्य परत्र तद्भिन्ने सद्वस्तुनि यः अवभासः यत् बाधितं तिरस्कृतं वा ज्ञानं सः अध्यास इत्यर्थः। पूर्वदृष्टपदेन इदम् आवेदितं यत् भ्रमे यः विषयः भासते सः अन्यत्र सत्यभूतः एव भवेत् इति नियमो नास्ति, तस्य वस्तुनः ज्ञानमात्रम् अपेक्षितम् अध्यासायेति।



वाचस्पतिमिश्रमते अवभासः इत्येव अध्यासस्य संक्षिप्तं लक्षणं भवति। अवभासपदेनैव मिथ्याज्ञानमुक्तं भवति। अवभासपदस्यार्थः अवसन्नः अवमतो वा भासः इति प्रतिपादितम्। पूर्वदृष्टेत्यादिपदेन संक्षिप्तलक्षणस्यैव व्याख्यानं परिष्कारश्च भवतः।

अत्र उदाहरणं तावत् शुक्तौ रजतम् इति ज्ञानम्। आपणे पूर्वं दृष्टस्य असन्निहितस्य रजतस्य रजतभिन्ने परत्र शुक्तौ अवभासः एव अध्यासः इति लक्षणसमन्वयः। इदं च रजतज्ञानम् परवर्तिनि काले अधिष्ठानस्य शुक्तेः दर्शनात् इदं न रजतम् इति ज्ञानेन बाधितं भवति।

लक्षणे स्मृतिरूपपदं प्रत्यभिज्ञायाम् अतिव्याप्तिवारणाय प्रदत्तम्। प्रत्यभिज्ञायां विषयः सन्निहितः भवति। तथाहि काश्यां देवदत्तं दृष्ट्वा दिल्ल्यां देवदत्तं पश्यन् कश्चन सोऽयं देवदत्तः इति ब्रूते। इदं च ज्ञानं प्रत्यभिज्ञा इत्युच्यते। देवदत्तः तदा वक्तुः प्रत्यक्षविषयः भवति। एवं परत्र प्रत्यक्षविषये देवदत्ते पूर्वदृष्टस्य काश्यां दृष्टस्य देवदत्तस्य यदभेदेन ज्ञानं तदपि अध्यासपदवाच्यं स्यात्। किञ्च, स्वस्तिमतीनामके गवि पूर्वं दृष्टस्य गोत्वस्य परत्र कालाक्षीनामके गवि यः यथार्थः अवभासः प्रत्यभिज्ञारूपः सोऽपि अध्यासः स्यात्। लक्षणे स्मृतिरूपपदप्रदानेन यथार्थज्ञानरूपायां प्रत्यभिज्ञायामतिव्याप्तिः वारिता, प्रत्यभिज्ञायां विषयस्य सन्निहितत्वात्। लक्षणे परत्रेति पदोपादानेन यथार्थज्ञाने अतिव्याप्तिः वारिता। रजते रजतस्य ज्ञानं यथार्थम् एव।

पञ्चपादिकाविवरणग्रन्थे प्रकाशात्मयतिः अध्यासस्य लक्षणं व्याख्यातवान्। तन्मते स्मृतिरूपपदस्य अर्थस्तावत् स्मृतेः रूपमिव रूपं यस्य सः इति। न हि भ्रमस्थले स्मृतिर्भवति। रूपं नाम स्वरूपमेव। स्मृतेः स्वरूपं चात्र कारणत्रितयजन्यत्वम्। कारणत्रयं च दोषः, संस्कारः सम्प्रयोगश्चेति। कालव्यवधानम् अमनोयोगः इत्यादयः दोषाः, पूर्वज्ञानजन्यः संस्कारः, सम्प्रयोगश्च इन्द्रियसन्निकर्षः। स्मृधातोः भावे कर्मणि च क्तिन्प्रत्यये स्मृतिपदस्य सिद्धिः। भावे क्तिन्प्रत्यये निष्पन्नस्य स्मृतिपदस्य स्मरणम् अर्थः, कर्मणि क्तिन्प्रत्यये निष्पन्नस्य स्मृतिपदस्य स्मर्यमाणं वस्तु अर्थः भवति। परत्र इत्यस्य अन्यत्र इत्यर्थः। पूर्वदृष्टस्य अवभासः पूर्वदृष्टावभासः। पूर्वदृष्टपदस्य अर्थस्तावत् पूर्वदृष्टसजातीयम् इति, न हि पूर्वदृष्टं वस्तु एव भ्रमस्थले भासते। अवभासपदस्य द्विधा व्युत्पत्तिः कल्पिता। तथाहि अवपूर्वकाद् भास्-धातोः भावे कर्मणि च घञ्प्रत्यये अवभासः इति। भावे घञ्प्रत्यये निष्पन्नस्य अवभासशब्दस्य ज्ञानम् इत्यर्थः। कर्मणि घञ्प्रत्यये निष्पन्नस्य अवभासशब्दस्य ज्ञानविषय इत्यर्थः। अतः अन्यत्र पूर्वदृष्टसजातीयस्य अन्यस्य कारणत्रितयजन्यः यः अवभासः सोऽध्यास इति लक्षणार्थः।

प्रकाशात्मयतिमते परत्र अवभासः इत्यनेनैव अध्यासस्य लक्षणं सम्भवति। परत्र इति कथनेन परस्य अवभासः इति आक्षेपात् सिध्यति। अतः परत्र परस्य अवभासः इत्येव अध्यासस्य लक्षणं भवितुमर्हति। तेन च परत्र शुक्तौ परस्य रजतस्य अवभासः अध्यासः इति सिध्यति। पूर्वदृष्ट-स्मृतिरूपेत्यादिपदं तस्यैव लक्षणस्य स्पष्टतायै संयोजितम्।



## पाठगतप्रश्नाः २

१०. वेदान्तसारप्रतिपादितम् अध्यारोपलक्षणं किम्।



११. शङ्कराचार्यप्रतिपादितम् अध्यासलक्षणं किम्।

१२. भामतीकारमते अध्यासस्य संक्षिप्तं लक्षणं किम्।

१३. भामतीमते अवभासपदस्य कोऽर्थः।

१४. ज्ञानस्य अवसादो नाम किम्।

१५. ज्ञानस्य अवमानो नाम किम्।

१६. भामतीमते लक्षणस्थितस्य स्मृतिरूपपदस्य कोऽर्थः।

१७. अध्यासलक्षणस्थितं स्मृतिरूपपदं कुत्र अतिव्याप्तिं वारयति, कस्तत्र हेतुः।

१८. विवरणमते अध्यासस्य किं तावत् लघुलक्षणं भवितुमर्हति।

१९. विवरणमते स्मृतेः किं तावत् स्वरूपम्।

## १३.४) अध्यासभेदाः

अध्यासो हि अर्थाध्यासो ज्ञानाध्यास इति द्विविधः। अध्यासकाले यथा विषयस्य अध्यासः भवति तथा ज्ञानस्यापि अध्यासः भवति। शुक्तौ यथा रजतस्य अध्यासः भवति तथा रजतज्ञानस्यापि अध्यासः सम्भवति। यदा शुक्तौ रजतस्य अध्यासो भवति तदा सः अध्यासः अर्थाध्यासः इति कथ्यते। यदा च शुक्तौ रजतज्ञानस्य अध्यासो भवति तदा स अध्यासो ज्ञानाध्यास इति कथ्यते। विवरणकारेण अर्थाध्यासे ज्ञानाध्यासे च अध्यासलक्षणस्य समन्वयः प्रदर्शितः। तथाहि परत्र शुक्तौ पूर्वदृष्टस्य पूर्वदृष्टसजातीयस्य रजतस्य स्मर्यमाणसदृशस्य अवभासमानस्य विषयस्य अध्यासपदेन ग्रहणात् अर्थाध्यासे लक्षणसङ्गतिः। किञ्च, परत्र शुक्तौ पूर्वदृष्टस्य पूर्वदृष्टसजातीयस्य स्मृतिरूपः स्मरणसदृशः यः अवभासः ज्ञानं सोऽध्यास इति ज्ञानाध्यासे लक्षणसङ्गतिः। उक्तं च प्रकाशात्मयतिना पञ्चपादिकाविवरणे – "यदा ज्ञानविशिष्टोऽर्थ एवाध्यासः, तदा स्मर्यमाणसदृशः अन्यात्मना अवभासमानः अन्यः अर्थः अध्यास इत्येवंलक्षणपरतया वाक्यं योजितम्। यदा पुनरर्थविशिष्टं ज्ञानमेवाध्यासः, तदा स्मृतिसमानोऽन्यस्यान्यात्मनावभासः अध्यासः इत्येवंलक्षणपरतयापि तदेव वाक्यं योजयितुं शक्यते" इति। एवं भामतीमतेऽपि अवभासपदस्य भावे कर्मणि च द्विधा व्युत्पत्तिमङ्गीकृत्य अर्थाध्यासे ज्ञानाध्यासे च अध्यासलक्षणस्य समन्वयः सम्भवति।

अयम् अर्थाध्यासः धर्म्यध्यासः धर्माध्यासः सम्बन्धाध्यासश्चेति त्रिधा विभज्यते। एकस्मिन् धर्मिणि अपरस्य धर्मिणः अध्यासो हि धर्म्यध्यासः। यथा धर्मिणि शुक्तौ अपरस्य धर्मिणः रजतस्य आरोपो हि धर्म्यध्यासः। यथा वा आत्मनि अन्तःकरणस्य आरोपो हि धर्म्यध्यासः। एकस्मिन् धर्मिणि अपरस्य धर्मिणः धर्मस्य अध्यासः धर्माध्यास इति उच्यते। यथा धर्मिणि रज्जौ धर्मिणः सर्पस्य विषयुक्तत्वधर्मस्य अध्यासो हि धर्माध्यासः। यथा वा आत्मधर्मचैतन्यस्य अन्तःकरणे आरोपो हि धर्माध्यासः। यदा एकस्मिन् धर्मिणि न हि धर्मिणः न वा धर्मस्य किन्तु केवलं सम्बन्धमात्रस्य आरोपो भवति तदा स



सम्बन्धाध्यास इत्युच्यते। यथा आत्मना सह सम्बन्धहीनस्य शरीरस्य आत्मना सह सम्बन्धमात्रम् आरोप्यते। तस्माच्च मम शरीरम् इति भ्रमज्ञानं भवति।

अर्थाध्यासः पुनः तादात्म्याध्यासः संसर्गाध्यासः इति द्विधा इति केचन कथयन्ति। आत्मनि यदा कस्यचित् अनात्मवस्तुनः अभेदेन आरोपो भवति तदा सः तादात्म्याध्यास इति कथ्यते। स्वरूपाध्यास इत्यस्यापरं नाम। तथाहि आत्मनि इन्द्रियाणाम् आरोपे सति अहं पश्यामि अहं शृणोमि इत्येवं ज्ञानमुत्पद्यते। यदा च आत्मनि न हि अनात्मवस्तुनः किन्तु तत्संसर्गस्य केवलम् आरोपः भवति तदा सः संसर्गाध्यास इति कथ्यते। तथाहि न आत्मनि यदा पुत्रसंसर्गस्य आरोपः भवति तदा मम पुत्रः इति भ्रमज्ञानं जायते। आत्मनि न हि अत्र आत्मनि पुत्रस्य आरोपो भवति, अन्यथा अहं पुत्रः इति तादात्म्याध्यासः स्यात्, अत्र पुत्रेण सह आत्मनः अविद्यमानस्य सम्बन्धस्य केवलम् आरोपः भवति। अहंकारेण तादात्म्याध्यासस्य ममकारेण च संसर्गाध्यासस्य निर्देशो भवति। उभयविधम् अध्यासम् अङ्गीकृत्य शङ्कराचार्येण उच्यते – अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः इति।

सोपाधिकनिरुपाधिकभेदेनाध्यासो द्विविधः। यस्मिन् अध्यासे कारणरूपेण कश्चित् उपाधिः वर्तते सः सोपाधिकः अध्यासः। यथा द्विचन्द्रदर्शनरूपभ्रमे अङ्गुलीव्यापारः उपाधिः, अतः द्विचन्द्रदर्शनं सोपाधिकः अध्यासः। यथा वा एकस्यैव ब्रह्मणः अन्तःकरणरूपोपाधिकारणात् जीवभ्रमः। सोपाधिकाध्यासे न हि अधिष्ठानज्ञानमात्रेण अध्यासो निवर्तते, उपाधिनाशेन एव अध्यासस्य निवृत्तिर्भवति। यस्मिन् अध्यासे कारणरूपेण उपाधिः न वर्तते स निरुपाधिकः अध्यासः। यथा शुक्तौ रजतम् इति ज्ञानम्। अयञ्चाध्यासः शुक्तिरूपाधिष्ठानदर्शनेन बाधितो भवति। अध्यासस्य उदाहरणप्रदानकाले शङ्कराचार्यः उभयविधमध्यासमेव उदाहरति – "यथा च लोकेऽनुभवः शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति" इति।

अध्यासोऽयं साद्यनादिभेदेन पुनर्द्विविधः। आत्मनि अविद्यायाः अध्यासः अनादिः, अनादिकालतः एव अयमध्यासः विद्यमानः अस्ति। चित्सुखाचार्यः तत्त्वप्रदीपिकायाम् षड् अनादीन् अङ्गीकृतवान्; ते हि जीवः, ईश्वरः, विशुद्धं चैतन्यं, जीवेश्वरोर्भेदः, अविद्या, अविद्या-चैतन्ययोः सम्बन्धश्चेति। उक्तञ्च तेन –

**जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।**

**अविद्या तच्चितोर्योगः षडस्माकमनादयः॥ इति।**

शुक्तिरज्वादिषु रजतसर्पादीनाम् अध्यासः सादिः, यतः ते अध्यासा उत्पद्यन्ते। परन्तु उभयविधोऽपि अध्यासः ज्ञानोदये सति बाधितो भवति।



## पाठगतप्रश्नाः ३

२०. अध्यासः कतिविधः।

२१. कः अर्थाध्यासः।



२२. कः ज्ञानाध्यासः।

२३. अर्थाध्यासः कतिविधः।

२४. कः सम्बन्धाध्यासः, किं च तदुदाहरणम्।

२५. कः धर्म्यध्यासः, किं च तदुदाहरणम्।

२६. कः धर्माध्यासः किं च तदुदाहरणम्।

२७. उपाधिदृष्ट्या अध्यासो कतिविधः।

२८. कः सोपाधिकः अध्यासः, किं च तदुदाहरणम्।

२९. सोपाधिकाध्यासे कथमध्यासनिवृत्तिर्भवति।

३०. को निरूपाधिकाध्यासः, किं च तस्योदाहरणम्।

३१. कः सादिरध्यासः, कि च तस्योदाहरणम्।

३२. कोऽनादिरध्यासः, किं च तत्रोदाहरणम्।

## १३.५) लौकिकशास्त्रीयव्यवहाराणाम् आध्यासिकत्वम्

लौकिकाः वैदिकाश्च प्रमाणप्रमेयव्यवहाराः अध्यासकारणादेव सम्भवन्ति। विधिप्रतिषेधमोक्षपराणि शास्त्राणि अध्यासपूर्वकमेव प्रवर्तन्ते। तथाहि देहेन्द्रियादिषु अहंममाभिमाने सति निर्गुणः असङ्गः आत्मा प्रमाता भवति। प्रमाता च शरीरम् अधिष्ठाय इन्द्रियाणि व्यापारयति। तेन प्रत्यक्षादिज्ञानम् उत्पद्यते। देहेन्द्रियादिषु आत्मनः अध्यासं विना आत्मा प्रमाता न भवति, आत्मा प्रमाता न भवति चेत् ज्ञानमपि न उत्पद्यते। अतः सर्वोऽपि प्रमाणप्रमेयव्यवहारः अध्यासपूर्वकः एव। प्राकृतात् जनाद् आरभ्य पण्डिताः सर्वेऽपि अध्यासपूर्वकम् एव व्यवहरन्ति लोके। तथाहि लोके गवादिपशवः यदा दण्डधारिणं पुरुषम् आगच्छन्तं पश्यन्ति तदा ते माम् अयं हन्तुमिच्छतीति विज्ञाय पलायन्ते, हरिततृणधारिणं पुरुषं प्रति च प्रवर्तन्ते। एवं पण्डिता अपि हिंस्रदृष्टिं खण्डधारिणं बलवन्तं पुरुषम् आगच्छन्तं वीक्ष्य ततः पलायन्ते, तद्विपरीतान् प्रति च प्रवर्तन्ते। अतः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारकाले नैव भेदः दृश्यते, पशूनां पण्डितानां च व्यवहारः अध्यासपूर्वक एव। देहे आत्माध्यासं विना अहं म्रिये इति बोध एवात्र न उदीयात्।

कर्मकाण्डान्तर्गतं ज्ञानकाण्डान्तर्गतं वा शास्त्रमपि अध्यासमाश्रित्य एव प्रवृत्तम्। तथाहि, आत्मनि ब्राह्मणादिवर्णानाम् गृहस्थाद्याश्रमाणां बालयुवकादिवयसाम् व्याधिग्रस्तत्वाद्यवस्थानाम् अध्यासं कृत्वा एव एतानि शास्त्राणि प्रवृत्तानि भवन्ति। वर्णाध्यासो यथा – ब्राह्मणो यजेत इति, आश्रमाध्यासो यथा – गृहस्थः सदृशीं भार्यां विन्देत् इति, वयोऽध्यासो यथा – अष्टवर्षं बालकमुपनयीत इति, अवस्थाध्यासो यता – अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्यागः इति च। यद्यपि कर्मकाण्डे देहातिरिक्तः आत्मा अङ्गीक्रियते तथापि उपनिषत्सु प्रतिपादितः नित्यशुद्धबुद्धमुक्तस्वभाव आत्मा न तत्र विधेः विषयो भवति। ज्ञानकाण्डे च आध्यासिकं जीवत्वं पुरस्कृत्य तस्य जीवस्य मुक्त्यर्थम् एव शास्त्राणां



प्रवृत्तिः भवति। जीवत्वं जीवस्य बन्धः इत्यादिविषया अध्यासकारणादेव सिध्यन्ति। अतः सर्वे लौकिकव्यवहाराः सर्वाणि च शास्त्राणि अविद्यापूर्वकमेव प्रवृत्तानि भवन्ति।

प्रत्यगात्मनि देहान्तःकरणादीनाम् अनात्मनाम् अध्यासपुरःसरमेव लोकव्यवहाराः सम्भवन्ति। तथाहि आत्मनि बाह्यधर्मान् अध्यस्य पुत्रे नष्टे मृते च अहमेव मृतो नष्टो वेति मन्यते जीवः। एवं देहधर्मान् आत्मनि अध्यस्य अहं स्थूलः, अहं गौरः, अहं गच्छामि, अहं लङ्घयामि इति; इन्द्रियधर्मान् आत्मनि अध्यस्य अहं मूकः, अहं काणः, अहं बधिरः, अहम् अन्धः इति; तथा अन्तःकरणधर्मान् आत्मनि अध्यस्य अहं कामये, अहं सङ्कल्पयामि इति व्यवहाराः दरीदृश्यन्ते लोके। आत्मनि अनात्मनाम् अध्यासः एव सर्वानर्थहेतुः, न हि शुक्तिरजतादिविभ्रमाः। अतः अस्य सकलस्य अनर्थस्य हेतोः अध्यासस्य दूरीकरणाय एव सर्वा उपनिषदः प्रवृत्ताः, तदनुयायि अद्वैतवेदान्तशास्त्रं च प्रवृत्तम्।



## पाठगतप्रश्नाः ४

३३. कथं निर्गुणः असङ्गः आत्मा प्रमाता भवति।

३४. शास्त्राणां कथमाध्यासिकत्वम्।

३५. वर्णाध्यासोपेतं विधिवाक्यं किम्।

३६. आश्रमाध्यासयुक्तं शास्त्रवाक्यमुदाहरत।

३७. अन्तःकरणधर्मान् आत्मनि आरोप्य के व्यवहारा भवन्ति।

३८. सर्वानर्थहेतुरध्यासो कः।

---



## पाठसारः

वेदान्तशास्त्रस्य जीवब्रह्मैक्यरूपविषयस्य मोक्षरूपप्रयोजनस्य च सिद्धये अध्यासस्य आलोचनमपेक्षितम्। जीवत्वं हि ब्रह्मणः अध्यासकारणाद् भवति। अतो जीवब्रह्मणोः भेदः मिथ्या, जीवब्रह्मणोः वास्तविको भेदो नास्ति।एवं ब्रह्मणि कर्तृत्वभोक्तृत्वादिबन्धः अध्यासकारणादेव कल्पितः भवति। अतो मिथ्याभूतः बन्धः ब्रह्मज्ञाने सति नश्यति इति सिध्यति। एवं अध्यासकारणाद् अद्वैतवेदान्तस्य विषयस्य प्रयोजनस्य च सिद्धिर्भवति। अधीत्युपसर्गपूर्वकाद् दिवादिगणीयात् अस् धातोः घञ्प्रत्यये निष्पन्नः अध्यासशब्दः निष्पद्यते। अत्र भावे घञ्प्रत्ययश्चेत् अध्यासपदस्यार्थः आरोपक्रिया, कर्मणि घञ्प्रत्ययश्चेत् अध्यासपदं आरोप्यपदार्थम् अभिधत्ते।

अध्यासस्य लक्षणं तावत् स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति शङ्कराचार्येण विहितम्। भामतीकारः अवभासः इत्येव अध्यासस्य लक्षणं सम्भवतीति मन्यते। अवसन्नः अवमतो वा भासः अवभासः इति तदीयव्याख्यानम्। स्मृतिरूपपदस्य असन्निहितविषय इत्यर्थः, पदेनानेन प्रत्यभिज्ञायाम्



अतिव्याप्तिर्वारिता भवति। परत्रेति पदेन यथार्थज्ञाने अतिव्याप्तिर्वारिता भवति। पूर्वदृष्टपदेन च आरोपणीयस्य उल्लेखात् तस्य मिथ्यात्वं ज्ञायते। विवरणकारमते हि परत्रावभास इत्येव लक्षणम् अध्यासस्य, इतरपदानि लक्षणस्य स्पष्टार्थमुपात्तानि। तत्र स्मृतिरूपशब्दस्य स्मर्यमाणसदृशः इत्यर्थः, परत्रेत्यस्य स्वभिन्ने इत्यर्थः, पूर्वदृष्टपदस्य च पूर्वदृष्टसजातीयम् इत्यर्थः। अवभासपदस्य च ज्ञानं ज्ञेयः वार्थः।

अयञ्च अध्यासो ज्ञानाध्यासः अर्थाध्यासः इति द्विधा। तथाहि परत्र शुक्तौ पूर्वदृष्टस्य पूर्वदृष्टसजातीयस्य रजतस्य स्मर्यमाणसदृशस्य अवभासमानस्य विषयस्य अध्यासपदेन ग्रहणात् अर्थाध्यासे लक्षणसङ्गतिः। किञ्च, परत्र शुक्तौ पूर्वदृष्टस्य पूर्वदृष्टसजातीयस्य स्मृतिरूपः स्मरणसदृशः यः अवभासः ज्ञानं सोऽध्यास इति ज्ञानाध्यासे लक्षणसङ्गतिः। धर्म्यध्यासः धर्माध्यासः सम्बन्धाध्यासश्चेति त्रिधा अर्थाध्यासो विभज्यते। अर्थाध्यासः पुनः तादात्म्याध्यासः संसर्गाध्यासः इति द्विधा इति केचन कथयन्ति। सोपाधिकनिरुपाधिक-भेदेनाध्यासो पुनर्द्विविधः। साद्यनादिभेदेनापि अध्यासद्वैविध्यं विद्वांसः कल्पयन्ति।

सर्वविधाः लौकिकवैदिकव्यवहाराश्च अध्यासकारणादेव भवन्ति। तथाहि देहेन्द्रियादिषु ब्रह्मणः अध्यासे सति ब्रह्मणः प्रमातृत्वं सिध्यति। ब्रह्मणः प्रमातृत्वे सिद्धे प्रमाणप्रवृत्तिर्भवति, तेन च ज्ञानं सम्भवति। अतः सर्वविधलौकिकव्यवहारः अध्यासकारणादेव भवति। पण्डितानां मूर्खानां पशूनां सर्वेषां लौकिकः प्रमाणप्रमेयव्यवहारः अध्यासपूर्वक एव। शास्त्रीयव्यवहारोऽपि ब्रह्मणि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासम् आश्रित्य एव प्रवर्तन्ते। अतः लौकिकवैदिकव्यवहाराणाम् आध्यासिकत्वम्।



## पाठान्तप्रश्नाः

१. चत्वारः पुरुषार्थाः के।

२. अद्वैतवेदान्तस्य प्रतिपाद्यविषयाणां सारः कः।

३. कथं ब्रह्मणः शुद्धत्वम्।

४. ब्रह्मणः आनन्दस्वरूपत्वं कुतः।

५. का नाम मुक्तिः।

६. बन्धस्य मिथ्यात्वप्रतिपादिका श्रुतिः का।

७. किं नाम असत्, किं च तत्रोदाहरणम्।

८. ब्रह्मणि नानात्वप्रतीतौ को हेतुः।

९. षट् अनादयः के।

१०. वयोऽध्यासस्य किमुदाहरणम्।

११. अवस्थाध्यासस्य किमुदाहरणम्।



## पाठगतप्रश्नानामुत्तराणि



**पाठगतप्रश्नाः १**

१. अद्वैतवेदान्तस्य प्रतिपाद्यविषयो हि जीवब्रह्मणोरैक्यम्।

२. अद्वैतवेदान्तशास्त्रस्य प्रयोजनं तावत् मोक्षः।

३. ब्रह्मणि आरोपितत्वात् जीवस्य स्वस्वरूपज्ञाने सति बन्धानां निवृत्तेः बन्धानां मिथ्यात्वम्।

४. सन्दिग्धे सप्रयोजने एव विषये विचारः सम्भवति।

५. देहेन्द्रियादिभिः अभिन्नतया ब्रह्म सामान्यतो ज्ञायते। परन्तु सर्वोपाधिविनिर्मुक्ततया ब्रह्मणो विशषज्ञानं जीवानां नास्ति। अतो ब्रह्मणः सन्दिग्धत्वम्।

६. सत्यं ज्ञानमनन्तं ब्रह्म, सर्वं खल्विदं ब्रह्म, सच्चिदानन्दं ब्रह्म इत्यादीनि उपनिषद्वाक्यानि।

७. नेह नानास्ति किञ्चन, अशब्दमस्पर्शमरूपमव्ययम्, अवाङ्गनसगोचरम् इत्यादीनि श्रुतिवचनानि निषेधमुखेन ब्रह्म प्रतिपादयन्ति।

८. अधिपूर्वकाद् दिवादिगणीयाद् अस् धातोः भावे कर्मणि वा घञ्-प्रत्यये अध्यासपदं निष्पद्यते।

९. भावव्युत्पत्या अध्यासपदस्य आरोपक्रिया इत्यर्थः, कर्मव्युत्पत्या च अध्यासपदस्य अध्यारोपितं वस्तु इत्यर्थः।

**पाठगतप्रश्नाः २**

१०. असर्पभूतायां रज्जौ सर्पारोपवत् वस्तुनि अवस्त्वारोपः अध्यारोप इति।

११. स्मृतिरूपः परत्र पूर्वदृष्टावभासः इति।

१२. अवभासः इत्येव भामतीकारमते अध्यासस्य संक्षिप्तं लक्षणम्।

१३. अवसन्नः अवमतो वा भासः अवभास इति।

१४. ज्ञानस्य अवसादो नाम ज्ञानस्य उच्छेदः उत्तरज्ञानबाध्यत्वं वा।

१५. ज्ञानस्य अवमानो नाम यौक्तिकतिरस्कारः। इच्छाप्रवृत्त्यादिकार्यसम्पादने अक्षमता एव ज्ञानस्य तिरस्कारः।

१६. असन्निहितविषय इत्यर्थः।

१७. प्रत्यभिज्ञायाम् अतिव्याप्तिं वारयति, प्रत्यभिज्ञायां विषयस्य सन्निहितत्वात्।

१८. विवरणमते परत्र अवभासः इत्येव अध्यासस्य लघुलक्षणं भवितुमर्हति।

१९. दोषः संस्कारः सम्प्रयोगश्चेति कारणत्रितयजन्यत्वमेव स्मृतेः स्वरूपम्।

**पाठगतप्रश्नाः ३**

२०. अध्यासो द्विविधः अर्थाध्यासः ज्ञानाध्यासश्चेति।

२१. अधिष्ठाने आरोप्यवस्तुनः हि अर्थाध्यासः। यथा शुक्तौ रजतस्य अध्यासो हि अर्थाध्यासः।

२२. अधिष्ठाने आरोप्यवस्तुनः ज्ञानस्य अध्यासो हि ज्ञानाध्यासः। यथा शुक्तौ रजतज्ञानस्य



अध्यासो हि ज्ञानाध्यासः।

२३. धर्म्यध्यासः धर्माध्यासः सम्बन्धाध्यासश्चेति अर्थाध्यासः त्रिविधः। तादात्म्याध्यासः संसर्गाध्यासश्चेति अर्थाध्यासद्वैविध्यमपि केचन कथयन्ति।

२४. एकस्मिन् धर्मिणि सम्बन्धमात्रस्य आरोपो हि सम्बन्धाध्यासः। यथा आत्मनि सम्बन्धहीनस्य शरीरस्य सम्बन्धम् अध्यस्य भवति प्रयोगः मम शरीरम् इति।

२५. एकस्मिन् धर्मिणि अपरस्य धर्मिणः अध्यासो हि धर्म्यध्यासः। यथा शुक्तौ रजतस्य अध्यासः।

२६. एकस्मिन् धर्मिणि अपरस्य धर्मिणो धर्मस्य अध्यासो हि धर्माध्यासः। यथा रज्जौ धर्मिणः सर्पस्य विषययुक्तत्वधर्मस्य अध्यासो हि धर्माध्यासः।

२७. उपाधिदृष्ट्या अध्यासो द्विविधः सोपाधिकः निरुपाधिकश्चेति।

२८. यस्मिन् अध्यासे कारणरूपेण कश्चित् उपाधिः वर्तते सः सोपाधिकः अध्यासः। यथा द्विचन्द्रदर्शनं सोपाधिकः अध्यासः। अङ्गुलीव्यापारस्तत्र उपाधिः।

२९. सोपाधिकाध्यासः न केवलम् अधिष्ठानज्ञानमात्रेण निवर्तते, उपाधिनाशेन एवात्र अध्यासस्य निवृत्तिर्भवति।

३०. यस्मिन् अध्यासे कारणरूपेण कश्चिद् उपाधिः न वर्तते स निरुपाधिकः अध्यासः। यथा शुक्तौ रजतम् इति ज्ञानम्।

३१. यस्य अध्यासस्य उत्पत्तिर्निरूपयितुं शक्यते स सादिरध्यासः। यथा शुक्तौ रजतस्य अध्यासः सादिः।

३२. यस्य अध्यासस्य आदिर्निरूपयितुं न शक्यते सः अनादिः अध्यासः। यथा आत्मनि अविद्यायाः अध्यासः अनादिः।

**पाठगतप्रश्नाः** ४

३३. देहेन्द्रियादिषु अहंममाभिमाने सत्येव असङ्गः आत्मा प्रमाता भवति।

३४. आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य एव शास्त्राणां प्रवृत्तिदर्शनात् शास्त्राणाम् आध्यासिकत्वम्।

३५. ब्राह्मणो यजेत, राजा राजसूयेन यजेत इत्यादीनि।

३६. गृहस्थः सदृशीं भार्यां विन्देत् इति।

३७. अहं कामये, अहं सङ्कल्पयामि इत्यादयः।

३८. आत्मनि अनात्माध्यास एव सर्वानर्थहेतुः।

॥ इति त्रयोदशः पाठः ॥



# १४

# अध्यासकारणविचारः

## प्रस्तावना

ब्रह्मणि अखिलं जगद् अध्यस्तम्। जगत् हि मिथ्या। अज्ञानकारणात् जीवः स्वस्वरूपम् अजानन् सुखदुःखादिकम् अनुभवति। ब्रह्मणो अज्ञानस्य कार्येण मिथ्याभूतेन अन्तःकरणेन सह मिथ्यासम्बन्धवशात् जीवभावः। जगतः मिथ्यात्वं विज्ञाय यथा वैराग्यं जायेत, जीवभावस्य मिथ्यात्वं विज्ञाय च यथा जीवः स्वस्वरूपज्ञानाय प्रवर्तेत तदर्थं कथमध्यासो भवति इति विज्ञेयम्। यथा ज्वरकारणं विज्ञायते चेत् ज्वरस्य उपशमार्थम् उपचारकल्पनायां सौविध्यं जायते तथैव अध्यासकारणानां ज्ञाने तेषां निरोधः सुशको भवति। किमध्यस्तं किं च सत्यमित्यस्य ज्ञानार्थं अध्यस्तुवस्तुनः स्वरूपं सुतरां विज्ञेयम्। अध्यस्तवस्तुनः किं तावत् स्वरूपम् इत्यस्मिन् विषये भारतीयास्तिकदर्शनेषु मिथो मतविरोधः अपि वर्तते। पूर्वस्मिन् पाठे अध्यासालोचनस्य प्रयोजनम्, अध्यासलक्षणं, अध्यासभेदाः, अध्याससत्त्वे प्रमाणानि चोपन्यस्तानि। अस्मिन् पाठे वयम् अध्यासकारणानि, अध्यस्तवस्तुनः स्वरूपम्, तस्य वस्तुनः स्वरूपप्रतिपादनविषये भारतीयदर्शनानां यानि परस्परविरुद्धानि मतानि सन्ति तानि आलोचयामः।



## उद्देश्यानि

- अध्यस्तवस्तूनाम् उत्पत्तिप्रकारः
- भ्रमज्ञानस्य स्वरूपम्
- अध्यासस्य उपादानं निमित्तकारणं च
- अध्यस्तवस्तुनः स्वरूपम्
- सलक्षणं सत्तात्रयम्
- विवर्तपरिणामयोः स्वरूपम्

## १४.१) अध्यस्तवस्तूत्पत्तिविचारः

प्रमा नाम यथार्थज्ञानम्। प्रमाया लक्षणमुच्यते वेदान्तपरिभाषायाम्- "अनधिगताबाधितार्थविषयज्ञानत्वम्" इति। ब्रह्मचैतन्यम् अखिलप्रपञ्चस्य उपादानं, तस्मात् सर्वत्र तादात्म्येन ब्रह्म वर्तमानं सत् स्वसंसृष्टं जगद् अवभासयति। उच्यते च सिद्धान्तलेशसङ्ग्रहे जीवाल्पज्ञत्वविषये विवरणमतालोचनकाले अप्पय्यदीक्षितेन- "ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं सत् स्वसंसृष्टं सर्वमवभासयति न जीवचैतन्यम्" इति। जीवस्य अन्तःकरणेन एव



सम्बन्धः, न बाह्यघटादिविषयेन सह तस्य साक्षात् सम्बन्धो वर्तते। यदा अन्तःकरणं नयनादिद्वारेण निर्गत्य विषयपर्यन्तं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्नोति तदा एव विषयाकारा अन्तःकरणवृत्तिरुदेति। सा अन्तःकरणवृत्तिः विषयचैतन्यस्य आवरकम् अज्ञानम् अभिभवति। तेन विषयचैतन्यस्य अभिव्यक्तिः सञ्जायते। ततो विषयस्य ज्ञानं भवति।

ज्ञानस्य ब्रह्मस्वरूपत्वेऽपि वृत्तिधर्मस्य जन्यत्वस्य ज्ञाने आरोपात् ज्ञानं जायते इत्युच्यते। विवरणे प्रकाशात्मयतिना उच्यते- "ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः" इति। तथाहि विषयप्रत्यक्षनिमित्तं चैतन्यत्रयमुच्यते विषयचैतन्यं प्रमाणचैतन्यं प्रमातृचैतन्यं चेति। घटाद्यवच्छिन्नचैतन्यं विषयचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यं, अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। यथा तडागस्य जलं छिद्रान्निर्गत्य नालिकाद्वारा केदारान्प्रविश्य केदाराकारानुसारं त्रिकोणचतुष्कोणाद्याकारं भवति, तथा तैजसम् अन्तःकरणं चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। अयं परिणाम एव वृत्तिरित्युच्यते। एवं विषयावच्छिन्नचैतन्य-प्रमातृचैतन्ययोः अभेदे सति विषयस्य ज्ञानं जायते। विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य च समाना एव सत्ता, उभयोरेव चैतन्यस्वरूपत्वात्।अतः तयोः ऐक्ये न काचिदनुपपत्तिः। अधिष्ठानस्य सत्ता एव आरोपितेषु विद्यते, न हि आरोपितानां भिन्ना सत्ता अस्ति। विषयादिसकलप्रपञ्चः ब्रह्मणि अध्यस्तः, अतः सर्वत्रापि ब्रह्मसत्ता एवानुवर्तते।

एवं शुक्तिरूप्यादिभ्रमज्ञानस्थले देशान्तरस्थस्य रजतस्य न शुक्तौ भानम्, तस्य असन्निकृष्टत्वात् प्रत्यक्षविषयता न सम्भवति। ननु रजतोत्पादकानां रजतावयवानां शुक्तौ अभावात् कथं प्रातिभासिकरजतोत्पत्तिरिति चेदुच्यते न हि लोकप्रसिद्धसामग्री प्रातिभासिकरजतम् उत्पादयति किन्तु विलक्षणा एव सामग्री अत्र अपेक्षिता।

तथाहि प्रकाशकारणात् चाकचिक्ययुक्तां शुक्तिमालोक्य काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिना शुक्तिद्रव्येण संसर्गात् इदमाकारा चाकचिक्याकारा काचिद् अन्तःकरणवृत्तिः उदेति। तस्यां च वृत्तौ इदमवच्छिन्नं चैतन्यं प्रतिबिम्बते। तत्र तडागोदकन्यायेन वृत्तेर्निर्गमनेन इदमवच्छिन्नं चैतन्यं वृत्त्यवच्छिन्नं चैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति, शुक्तिरूपसमानदेशस्थत्वात्। अन्तःकरणवृत्त्या चात्र इदन्त्वरूपसामान्यमात्रं विषयीक्रियते न तु शुक्तित्वरूपविशेषः। ततश्च प्रमातृचैतन्याभिन्न-विषयचैतन्यनिष्ठा शुक्तित्वप्रकारिका अविद्या चाकचिक्यादिसादृश्यदर्शनकारणात् उद्बोधितरजतसंस्कारसामग्रीसहिता काचकामलादिदोषसहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते।

इन्द्रियदोष-सादृश्य-संस्कारादिसामग्रीसहिता अविद्या एकैव कथं रजतरूपेण कदाचिद्वा रङ्गरूपेण परिणमते इति चेदुच्यते यत्पुरुषीया या अविद्या यादृशसंस्कारेण सह वर्तते, सा तस्य पुरुषस्य सविधे तदाकारेण एव परिणमते, नान्याकारेण। अत्रेष्टसिद्धिकाराः कथयन्ति यत्- "यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः" इति। तस्मादेव एकस्यां शुक्तौ कस्यचित् रजतभ्रमः कस्यचिच्च रङ्गभ्रमो जायते।



एवं शुद्धब्रह्मणि घटादिव्यावहारिकवस्त्वध्यासे अविद्यैव दोषत्वेन हेतुः। शुक्तिरूप्यादिस्थले तु काचादयः एव दोषत्वेन अङ्गीक्रियते। अतः आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वे नियामकम्। स्वप्नोपलब्धरथादीनाम् आगन्तुकनिद्रादिदोषजन्यत्वात्प्रातिभासिकत्वम्। अयं च धर्म्यध्यासः।

धर्मिणोर्विवेके ज्ञायमानेऽपि एकधर्मिगतधर्माणाम् अन्यधर्मिणि अध्यासे उदाहरणं तावत्- पीतः शङ्खः इति। तथाहि- बहिर्निष्क्रान्तेन स्वच्छनयनरश्मिना सम्पृक्तं पित्तद्रव्यगतं पीततामात्रम् (न तु तदधिष्ठानम्) अनुभवन्, शङ्खे च इन्द्रियदोषकारणात् शुक्लिमानम् आच्छादितम् अननुभवन्, पीततायाः शङ्खासम्बन्धम् अननुभूय "पीतं तपनीयपिण्डम्" "पीतं बिल्वफलम्" इत्यादिषु पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खयोः आरोप्य भवति व्यवहारः पीतः शङ्खः इति वाचस्पतिमिश्रादिभिरुच्यते।

## १४.२) भ्रमज्ञानविचारः

शुक्तौ इदं रजतम् इति जायमानं ज्ञानम् भ्रमः एव। भ्रमज्ञाने अधिष्ठानैकदेशस्य आरोप्यस्य च तादात्म्येन भानं भवति। यत्र आरोपो भवति तदधिष्ठानम्। यदा शुक्तौ रजतस्य आरोपो भवति तदा शुक्तिः रजतस्य अधिष्ठानम्। अधिष्ठानस्य सामान्यांशो विशेषांशश्च वर्तेते। यथा इदं रजतम् इति ज्ञाने इदमिति शुक्तेः सामान्यांशः। यदा काचकामलादिदोषदूषितेन चक्षुरिन्द्रियेण सह शुक्तेः संयोगो भवति, तदा चक्षुर्द्वारा चान्तःकरणस्य शुक्त्या सम्बन्धवशात् इदमाकारा अन्तःकरणवृत्तिरुदेति। इन्द्रियदोषकारणात् शुक्तित्व-नीलपृष्ठत्वादिविशेषस्य ज्ञानं नैव भवति। अतः इदं रजतम् इति ज्ञाने इदमंशः स्वरूपतो न मिथ्या। उच्यते च पञ्चदशीकारेण विद्यारण्यस्वामिना – “इदमंशस्य सत्यत्वं शुक्तिगं रूप्य ईक्षते” इति। एवं प्रत्येकस्मिन् एव भ्रमे अधिष्ठानस्य सामान्यांशः प्रतिभाति। शुक्तौ आरोपितेन रजतेन सह अन्तःकरणस्य संयोगो नास्ति, अतः रजताकारा अन्तःकरणवृत्तिः नैव उदेति। अद्वैतवेदान्ते ज्ञानस्थले विषयाकारा वृत्तिः सुतरामङ्गीकरणीया, अतः शुक्तौ रजतज्ञानस्थले रजताकारा अविद्यावृत्तिः अङ्गीक्रियते। तेन च रजतस्य ज्ञानं सम्भवति। इदं रजतम् इति भ्रमज्ञाने विद्यमानः रजतांशस्तु मिथ्या, व्यावहारिकरजतस्य तत्र अविद्यमानत्वात्। अतः ‘इदं रजतम्’ इति भ्रमज्ञाने इदमंशः स्वरूपतो न मिथ्या, रजतांशस्तु मिथ्या एव। शुक्त्यंशत्वात् इदमंशेन सह नास्ति रजतस्य सम्बन्धः परन्तु इदं रजतम् इति ज्ञाने इदन्तादात्म्येन रजतस्य भानात् इदं रजतम् इति ज्ञानं मिथ्या।

एवमेव ब्रह्मणि प्रपञ्चस्य आरोपवशाद् भवति ज्ञानं घटः सन् इति। सत्ताविशिष्टः सत्तादात्म्यापन्नो वा घट इति तदर्थः। अस्मिन् ज्ञाने सन् इत्यंशो अधिष्ठानस्य ब्रह्मणः, नायं स्वरूपतो मिथ्या। घटस्य ब्रह्मणि आरोपितत्वात् मिथ्यात्वं दुर्वारम्। यद्यपि सन् इत्यंशेन सह नास्ति घटस्य सम्बन्धः तथापि घटेन सह तादात्म्येन सन् इत्यंशस्य भानात् घटः सन् इति ज्ञानं भ्रम एव। एवं सर्वत्रानुसन्धेयम्।



## पाठगतप्रश्नाः १

१. प्रमायाः लक्षणं किम्।

२. किं नाम विषयचैतन्यम्।



३. किं नाम प्रमाणचैतन्यम्।

४. किं नाम प्रमातृचैतन्यम्।

५. शुक्तिरजतोत्पत्तौ को तावत् इन्द्रियदोषः।

६. प्रातिभासकत्वे किं तावत् नियामकम्।

७. इदं रजतम् इति ज्ञाने कः शुक्तेः सामान्यांशं निर्दिशति।

८. इदमंशस्य सत्यत्वेऽपि कथं इदं रजतम् इति ज्ञाने सः भ्रम इति कथ्यते।

९. इन्द्रियदोषकारणात् शुक्तेः केषामंशानां ज्ञानं न भवति।

१०. ज्ञानस्थले अन्तःकरणवृत्तिः किमर्थम् अपेक्षिता।

११. एकैव अविद्या कथं कदाचिद्रजतरूपेण कदाचिद्वा रङ्गरूपेण विपरिणमते।

## १४.३) अध्यासस्य उपादानम् निमित्तकारणं च

आगन्तुकदोषः संस्कारः अधिष्ठानसामान्यज्ञानम् सादृश्यम् अविद्या च अध्यस्तवस्तूत्पतौ हेतुरूपेण अङ्गीक्रियन्ते। तेषु सत्स्वेव अध्यासो भवति न तदभावे। एतेषु कारणेषु पुनः अविद्या अध्यस्तवस्तुनः उपादानकारणं भवति। इतराणि निमित्तकारणानि सन्ति। यस्मात् कार्यस्य उत्पत्तिः, कार्यनाशे कार्यस्य लयश्च यत्र सञ्जायेते तदेव उपादानकारणम्। तथाहि, घटः मृत्तिकाया उत्पद्यते घटनाशे च मृत्तिकायामेव घटस्य लयो भवति, अतो मृत्तिका घटस्य उपादानम्। अध्यस्तं वस्तुजातम् अविद्यायाः परिणामः, लयश्च तेषाम् अज्ञाने एव भवति। सर्वमपि कार्यं तेषाम् उपादानकारणस्य अविद्याया अधिष्ठाने ब्रह्मणि आश्रितं तिष्ठति। अतो शुक्तौ प्रतीयमानं रजतं वस्तुगत्या शुक्त्यवच्छिन्ने चैतन्ये अध्यस्तम्। वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण उक्तम् – "अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्" इति। अतो प्रातिभासिकरजतस्य परिणामि उपादानकारणं भवति अविद्या, विवर्तोपादानकारणं च इदमवच्छिन्नं चैतन्यम्।

ननु संस्कारः अध्यासस्य कारणं नास्ति, प्रथमोत्पत्तौ संस्कारस्य अभावात्। तथाहि, ब्रह्मणि वर्तमानजगदध्यासं प्रति पूर्वजगत्संस्कारः हेतुः, पूर्वजगदध्यासं प्रति तत्पूर्वजगत्संस्कारो हेतुः। परन्तु प्रथमजगदुत्पत्तौ कथं संस्कारः हेतुः स्यादिति चेदुच्यते संसारो हि अनादिः, अतः प्रथमजगतः निरूपणम् अशक्यम्। तदाश्रित्य च अयं पूर्वपक्षोऽपि न सम्भवतीति। उक्तञ्च शङ्कराचार्येण श्रीमद्भगवद्गीताभाष्ये – "यथा अस्मिन् जन्मनि देहादिसङ्घाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथा अतीते अतीततरेऽपि जन्मनि इति अनादिरविद्याकृतः संसारः अतीतोऽनागतश्च अनुमेयः" इति।

ननु सादृश्यं न हि सर्वत्राध्यासे निमित्तकारणरूपेण वर्तते सादृश्याभावेऽपि अध्यासो सुतरां भवति। यथा पीतः शङ्खः, आकाशस्य तलमालिन्यावभासश्च इत्यादिषु। रज्ज्वां सर्पभ्रमो यद्यपि अवयवगतसादृश्यकारणात् भवति तथापि ब्रह्मणि प्रपञ्चस्याध्यासे ब्रह्मप्रपञ्चयोः कीदृशं वा सादृश्यं हेतुत्वेन वर्तते। दृग्दृश्ययोः चैतन्यजडयोः तमःप्रकाशवद्विरुद्धस्वभावयोः ब्रह्मप्रपञ्चयोः

अत्यन्तवैलक्षण्यसत्त्वेऽपि "अहमिदं ममेदम्" इति तादात्म्याध्यासदर्शनात् सादृश्यस्य सर्वविधाध्यासं प्रति कारणत्वं नाङ्गीक्रियते। अत उच्यते-

**विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।**

**अनादिवासनासम्भूतो न सारूप्यमपेक्षते॥ इति।**

नृसिंहभट्टोपाध्यायमते यत्र अध्यासः शुक्तित्वादिविशेषदर्शनेन प्रतिबध्यते तत्रैवाध्यासे सादृश्यज्ञानस्य कारणत्वम्। तन्मतं च सङ्गृह्यते सिद्धान्तलेशसङ्ग्रहे- "सादृश्यज्ञानस्याध्यासकारणत्ववादेऽपि विशेषदर्शनप्रतिबध्येषु रजताद्यध्यासेष्वेव तस्य कारणत्वं वाच्यं, न तु तदप्रतिबध्येषु पीतशङ्खाद्यध्यासेषु, असम्भवात्" इति। अतः सादृश्यस्य क्वाचित्कं कारणत्वमङ्गीक्रियते।

## १४.४) अध्यस्तवस्तुनः स्वरूपम्

आरोपितवस्तुनश्च अनिर्वचनीयत्वम् अद्वैतवादिनः अङ्गीकुर्वन्ति। तथाहि शुक्तौ रजतं न सत्, तस्य सत्त्वे इयं शुक्तिरित्युत्तरज्ञानेन न तस्य बाधः स्यात्। शुक्तिं च रजतात्मना गृह्णन् जनो भ्रान्त एव। शुक्तौ प्रतीयमानं रजतम् असत् इत्यपि वक्तुं न शक्यते, तस्य प्रतीयमानत्वात्। ननु देशान्तरस्थं रजतं तत्र प्रतिभासते इत्यपि न शक्यते वक्तुम्, "इदं रजतम्" इत इदङ्कारेण पुरोऽवस्थितत्वनिर्देशात्। अतः शुक्तौ रजतम् अस्ति चेन्न बाध्येत, नास्ति चेन्न प्रतीयेत। तच्च रजतं सदसत् इत्यप्यङ्गीकर्तुं न शक्यते, सदसतोः परस्परविरुद्धत्वात् तयोः सामानाधिकरण्यं नैव सम्भवति। अतो रजतं न सत्, नाप्यसत्, नापि सदसत् किन्तु सदसद्भ्यामनिर्वचनीयम्।

तच्च रजतम् अज्ञानोपादानकं तत्कालोत्पन्नम् अभिनवञ्च। रजतं विना रजतज्ज्ञानं नैव सम्भवति, अतः पुरोवर्तिन्यां शुक्तौ ज्ञानकाले प्रातिभासिकरजतोत्पत्तिः अङ्गीकरणीया। तस्य च रजतस्य अन्यत्र असत्त्वाद् तत्रैव च उत्पन्नत्वात् अभिनवत्वं सिध्यति।



### पाठगतप्रश्नाः २

१२. अध्यस्तवस्तूत्पत्तौ के हेतुरूपेण तिष्ठन्ति।

१३. अध्यस्तवस्तुनः किं तावदुपादानम्।

१४. आगन्तुकदोष-संस्कारादयः अध्यस्तवस्तुनः कीदृशं कारणम्।

१५. किं नाम उपादानकारणम्।

१६. सर्वमपि कार्यं कुत्र अध्यस्तम्।

१७. केषु अध्यासेषु सादृश्यज्ञानं कारणम्।

१८. अद्वैतवेदान्तमते आरोपितवस्तुनः किं तावत् स्वरूपम्।

१९. ब्रह्मणि प्रपञ्चाध्यासे सादृश्यं किं हेतुत्वेन वर्तते।



## १४.५) ख्यातिवादः

व्यक्तायां वाचि विद्यमानात् चक्ष्-धातोः भावे क्तिन्-प्रत्यये ख्यातिशब्दो निष्पद्यते। ख्यातिशब्दस्य ज्ञानम् इत्यर्थः। दर्शनशास्त्रे ख्यातिशब्दः भ्रमे भासमानवस्तुनः ज्ञाने रूढः। दार्शनिका भ्रमे भासमानवस्तुनः स्वरूपविषये विविधमतानि उपस्थापयन्ति। अतो विविधाः ख्यातयः प्रसिद्धिं गताः। तासु आत्मख्यातिः असत्ख्यातिः अख्यातिः अन्यथाख्यातिः अनिर्वचनख्यातिरिति पञ्च ख्यातयः प्रसिद्धाः। उक्तञ्च –

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।**

**तथानिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्॥**

**योगाचारा माध्यमिकास्तथा मीमांसका अपि।**

नैयायिका मायिनश्च पञ्च ख्यातीः क्रमाज्जगुः॥ इति। एतद्व्यतिरिच्यापि रामानुजस्य सत्ख्यातिः, वीरशैवानाम् अलौकिकख्यातिः, विज्ञानभिक्षोः सदसत्ख्यातिः, भाट्ट-पातञ्जलानाम् अन्यथाख्यातिः इत्यादयोऽपि ख्यातिविचारकाले आलोचनविषयतां गच्छन्ति। अत्र मुख्यानां पञ्च ख्यातीनाम् आलोचनं विधीयते।

**आत्मख्यातिः** – सौत्रान्तिक-वैभाषिक-योगाचाराणां च ख्यातिविषयको वादः आत्मख्यातिरित्युच्यते। तथाहि एतेषां मते रजतभ्रमे प्रतीयमानं रजतं ज्ञानाकारम्, तस्य बहिः आरोपो भवति। सौत्रान्तिकानां नये बहिः प्रत्यक्षे विषये, वैभाषिकानां मते बहिः अनुमिते विषये, योगाचाराणां च नये अनाद्यविद्यावासनारोपिते अलीके बाह्ये विषये ज्ञानाकारस्य विषयस्य आरोपो भवति। अतो बाह्ये शुक्त्यादौ ज्ञानाकारस्य रजतस्य आरोपो भवतीति तेषां मतम्। बौद्धनये विज्ञानप्रवाहातिरिक्तस्य नित्यस्य आत्मनः अस्वीकारात्, रजतस्य विज्ञानस्वरूपत्वात् तस्य ख्यातिः आत्मख्यातिः इत्युच्यते।

**अख्यातिः** – प्राभाकरमीमांसकानाम् अख्यातिवादः प्रसिद्धः। तेषां मते सर्वमेव ज्ञानं समीचीनम्। प्राभाकरमते इदं रजतम् इति शुक्तिरजतज्ञानस्थले हि ज्ञानद्वयमस्ति। तत्र इदम् इति प्रत्यक्षस्य विषयः, रजतम् इति स्मृतेः विषयः। अस्ति अनयोर्महान् भेदः। परन्तु तयोः भेदस्य अग्रहणात् सामानाधिकरण्येन इदम् रजतम् इति ज्ञानमुत्पद्यते। यतो हि अनुभव-स्मरणयोः विवेकस्य (भेदस्य) अग्रहणात् इदं रजतम् इति लोकप्रसिद्धं ज्ञानमुत्पद्यते, अतः एतेषां मतं विवेकाख्यातिः अख्यातिर्वेति कथ्यते।

**अन्यथाख्यातिः** – नैयायिकानां भाट्टमीमांसकानां च ख्यातिविषयको वादः अन्यथाख्यातिवाद इत्युच्यते। विपरीतख्यातिः इत्यस्य अपरं नाम। नैयायिकमते हि शुक्तौ इदं रजतम् इति भ्रमस्थले देशान्तरस्थं रजतमेव पुरोवर्तिन्यां शुक्तौ प्रतिभासते। अतः शुक्तेः अन्यथा देशान्तरस्थरजतादिरूपेण ज्ञानात् एतेषां मतम् अन्यथाख्यातिरित्युच्यते।



**असत्ख्यातिः** – शून्यवादिनो माध्यमिका बौद्धा हि असत्ख्यातिवादिनः। एतेषां मते इदं रजतम् इति शुक्तौ रजतभ्रमस्थले अधिष्ठानं शुक्तिरपि असत्, तत्र प्रतीयमानं रजतम् हि असत्। शुक्तौ अत्यन्तस्य असतः रजतस्य कल्पनात् ख्यातिरियं असत्ख्यातिरित्युच्यते।

**अनिवर्चनीयख्यातिः** – अद्वैतवेदान्तिनां मते तावत् शुक्तौ प्रतीयमानं रजतम् हि सदसद्भ्याम् अनिर्वचनीयम्। अतो इदं रजतम् इत्यत्र अद्वैतवेदान्तिभिः अनिर्वचनीयख्यातिः अङ्गीक्रियते।

आत्मख्यातिवादे विज्ञानधर्मस्य सत्यस्य एव रजतस्य भ्रमस्थले स्वीकारात्, अख्यातिवादे च स्मृतिविषयस्य सत्यस्य एव विषयस्य शुक्तौ इदं रजतम् इति ज्ञानस्थले अङ्गीकारात् , अन्यथाख्यातिवादे च देशान्तरस्थस्य सत्यस्यैव रजतस्य भ्रमस्थले प्रतीयमानत्वात् एतेषां सत्ख्यातिः इत्यभिधानेनापि व्यपदेशो भवति। उच्यते च इष्टसिद्धिकारेण विमुक्तात्मना –

**अन्यथाख्यातिरख्यातिरात्मख्यातिरिति त्रयः।**
**सत्ख्यातिपक्षा नैतेऽपि विना सिध्यन्ति मायया॥**

भगवद्रामानुजाचार्याणां ख्यातिविषयको मतवादोऽपि सत्ख्यातिरित्युच्यते। रामानुजाचार्याणां मते तावत् सर्वमेव भूतं पञ्चीकृतम्। अतः शुक्तौ रजते च सन्ति बहवः साधारणाः अवयवाः। शुक्तौ रजतावयवसदृशान् अवयवान् वीक्ष्यैव भवति ज्ञानम् इदं रजतमिति। परन्तु शुक्तौ रजतावयवसदृशावयवात् अतिरिक्ता ये अवयवाः सन्ति तेषां ज्ञानाभावात् शुक्तौ इदं रजतमिति इति जायमानं ज्ञानं भ्रम एव। अत्र ज्ञाने भासमानः विषयस्तु सन्, रजतावयवसदृशानाम् अवयवानां शुक्तौ दर्शनात्।



## पाठगतप्रश्नाः ३

२०. ख्यातिपदस्य कोऽर्थः।
२१. आत्मख्यातिवादिनः के।
२२. अख्यातिवादिनः के।
२३. असत्ख्यातिवादिनः के।
२४. अद्वैतवेदान्तिनां ख्यातिवादः केन नाम्ना प्रसिद्धः।
२५. अन्यथाख्यातिं के अङ्गीकुर्वन्ति।
२६. अन्यथाख्यातेः अपरं नाम किम्।
२७. रामानुजाचार्याणां ख्यातिवादः केन नाम्ना प्रसिद्धः।



## १४.६) परिणामवादः विवर्तवादश्च

शुक्तौ प्रतीयमानं रजतम् अज्ञानस्य परिणामः। शुक्तिविषयकम् अज्ञानमेव रजताकारेण परिणमते। तच्च रजतं शुक्त्यवच्छिन्नचैतन्यस्य विवर्तः। अतः अज्ञानं शुक्तिरजतस्य परिणाम्युपादानं, इदमवच्छिन्नरजतं च शुक्तिरजतस्य विवर्तोपादानम्। अपवादस्वरूपकथनकाले सदानन्दयोगीन्द्रेण वेदान्तसारे परिणामविवर्तयोः स्वरूपम् आलोच्यते। तथाहि रज्ज्वाः कार्यभूतस्य सर्पस्य यथा न रज्व्यतिरिक्तसता अस्ति, तथैव ब्रह्मणः समुत्पन्नस्यास्य प्रपञ्चस्य ब्रह्मातिरिक्तसत्ता नास्ति। ननु कथं ब्रह्मणः समुत्पन्नं जगत्। कारणं कार्यसजातीयं भवतीति दार्शनिकानां राद्धान्तः। मतमेतदाधारीकृत्य एव सांख्यैः प्रतीयमानजगतः कारणरूपेण तत्सजातीयं प्रकृतितत्त्वमुपमीयते सामान्यतोदृष्टानुमानेन। परन्तु न हि ब्रह्मजगतोः सजातीयत्वमस्ति। ब्रह्म हि चेतनं जगच्च अचेतनम्, अतो जगद्विजातीयं ब्रह्म कथं जगत्कारणं स्यात्, किञ्च यदि ब्रह्म एव जगत् भवति तर्हि अयं प्रश्नः सुतरां समुदेति यत् किं सम्पूर्णं ब्रह्म एव जगद्रूपं धत्ते उत ब्रह्मणः अंशः कश्चन। प्रथमः पक्षः अङ्गीक्रियते चेत् जगद्रूपेण परिवर्तनकारणात् नास्ति इदानीं ब्रह्मेति समापतति, द्वितीये पक्षे च ब्रह्मणः सावयवत्वापत्तिः। अत्रोच्यते यत् न हि ब्रह्म जगद्रूपेण परिणमते येन पूर्वोक्तदोषाः समापतेयुः। ब्रह्मणि आरोपितं जगत्; अतो जगद् ब्रह्मणः विवर्तः, अज्ञानस्य च परिणामः। ननु किं नाम विवर्तः को वा परिणामः इति चेदुद्धरन्ति सदानन्दयोगीन्द्राः प्राचां वचः -

**सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।**

**अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदीरितः॥ इति।**

कारणस्य स्वरूपतः एव अन्यथाभावः अन्यरूपधारणम् परिणामः, स्वरूपम् अपरित्यज्य कारणस्य अन्यथाभावः विवर्तः। यथा दधि दुग्धस्य परिणामः, दुग्धस्य स्वरूपतः एव अन्यथा स्थितिः भवति दधिरूपेण। अतो दधि परिणामः दुग्धस्य। अन्धकारे यदा रज्जौ सर्पः अनुभूयते तदा रज्जुः स्वस्वरूपम् अपरित्यज्य एव सर्पाकारेण प्रतिभासते। अतो यदा नायं सर्प इति सर्पस्य बाधो भवति तदा रज्जुमात्रम् अवशिष्यते। अतः सर्पः रज्जोः विवर्तः।

अप्पय्यदीक्षितः सिद्धान्तलेशसंग्रहे परिणामविवर्तयोः लक्षणमाह – वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामः, तदसमसत्ताको विवर्त इति। धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायां तुल्यमेवोच्यते – परिणामो नामोपादानसमसत्ताककार्यापत्तिः। विवर्तो नामोपादानविषमसत्ताककार्यापत्तिः इति।

अद्वैतवेदान्ते सत्तात्रयम् अङ्गीक्रियते – पारमार्थिकसत्ता व्यावहारिकसत्ता प्रातिभासिकसत्ता चेति। पारमार्थिकसत्तायाः लक्षणं तावत् कालत्रयाबाध्यत्वम्। ब्रह्मव्यतिरिक्तस्य सर्वस्य एव ब्रह्मज्ञानेन बाध्यत्वात् ब्रह्मण एव कालत्रयाबाध्यत्वम्। अतः पारमार्थिकसत्ता केवलं ब्रह्मणः। व्यावहारिकसत्तायाः लक्षणं तावत् ब्रह्मज्ञानेतरज्ञानाबाध्यत्वम् इति। यस्याः सत्ताया ब्रह्मज्ञानेनैव बाधो भवति, न तदितरैः शुक्तिरज्जुज्ञानादिभिः, सा हि व्यावहारिकसत्ता। शुद्धब्रह्मणि आरोपितानाम् अज्ञानतत्कार्याणां च व्यावहारिकसत्ता अङ्गीक्रियते। ब्रह्मज्ञानेनैव एतेषां बाधो जायते। प्रातिभासिकसत्तायाः लक्षणं तावत्



ब्रह्मज्ञानेतरज्ञानबाध्यत्वम्। तथाहि शुक्तौ प्रतीयमानं रजतं ब्रह्मज्ञानभिन्नेन शुक्तिज्ञानेन बाधितं भवति, अतः शुक्तौ प्रतीयमानस्य रजतस्य सत्ता प्रातिभासिकी।

यदा उपादानस्य तत्कार्यस्य च सत्ता समाना भवति, तदा उपादानात् कार्योत्पत्तिः परिणाम इत्युच्यते। तथाहि, दुग्धस्य सत्ता व्यावहारिकी। दुग्धाद् उत्पन्नस्य कार्यस्य दध्नोऽपि सत्ता व्यावहारिकी, अतो दुग्धदध्नोः उपादानकार्ययोः समानसत्ताविशिष्टत्वात् दुग्धस्य दध्नः समुत्पत्तिः परिणामः। कारणस्य कार्यस्य च सत्ता यदि समाना न स्यात्तदा उपादानात् कार्योत्पत्तिः विवर्त इत्युच्यते। यथा ब्रह्मणः जगत् समुत्पद्यते। ब्रह्मणः सत्ता पारमार्थिकी, जगतः सत्ता व्यावहारिकी। ब्रह्म-जगतोः उपादानकार्ययोः विषमसत्ताविशिष्टत्वात् ब्रह्मणो जगदुत्पत्तिः विवर्त एव।

अद्वैतवादे जगतः सत्तामाधारीकृत्य मतत्रयं सुप्रसिद्धम् – अजातवादः दृष्टिसृष्टिवादः सृष्टिदृष्टिवादश्चेति। मूलसिद्धान्तसाम्येऽपि एतेषां मतभेदो वर्तते। गौडपादप्रमुखानाम् अजातवादिनां मते जगत् अजातं, नैव कदापि उत्पन्नम्। एते पारमार्थिकसत्तामात्रम् अङ्गीकुर्वन्ति। प्रकाशानन्दप्रमुखानां दृष्टिसृष्टिवादिनां नये तु यदा जगतः ज्ञानं भवति तदैव जगत् अस्ति, अज्ञानकाले जगत् नास्ति। एते पारमार्थिक-प्रातिभासिकरूपसत्ताद्वयमेवाङ्गीकुर्वन्ति। शङ्कराचार्यप्रमुखानां सृष्टिदृष्टिवादिनां मते जगद् ईश्वरेण सृष्टं, जीवेन च अनुभूयते। सुषुप्त्यादिषु यदा जगतः अनुभवो न भवति तदापि जगत् तिष्ठति। एते सत्तात्रयवादिनः। विवर्तपरिणामयोर्ये लक्षणे प्रस्तुते ते दृष्टिसृष्टिवादे न सङ्गच्छेते। यतो हि यथा दुग्धदध्नोस्तथा रज्जुसर्पयोरपि समानसत्ता वादेऽस्मिन् आपतति। अतः परिणामविवर्तयोर्द्वितीयलक्षणमुक्तम् अप्पय्यदीक्षितेन।

द्वितीयं लक्षणं तावत् - कारणसलक्षणोऽन्यथाभावः परिणामः, कारणविलक्षणोऽन्यथाभावः विवर्तः इति। तथाहि, यदा उपादानकारणस्य सजातीयकार्यरूपेण अन्यथाभावः तदा परिणामः, यदा च उपादानकारणस्य विजातीयकार्यरूपेण अन्यथाभावस्तदा विवर्तः। यथा दुग्धं दधि उभयमेव अचेतनम्। दुग्धस्य अचेतनस्य तत्सजातीयेन अचेतनेन दधिरूपेण अन्यथाभावः परिणामः, ब्रह्मणः चेतनस्य तद्विजातीयेन अचेतनेन जगद्रूपेण अन्यथाभावः विवर्तः। अत्रेदमाक्षिप्यते यत् शुक्तेः रजतोत्पत्तिरपि तर्हि परिणाम एव स्यात् शुक्तिरजतयोः उभयोरपि अचेतनत्वात्। अत्रोच्यते, न हि शुक्तिः रजतस्य उपादानम्। शुक्तेः उपादानं तु शुक्त्यवच्छिन्नं चैतन्यम्। न हि अज्ञानं तत्कार्यं शुक्तिम् आवृणोति, अज्ञानं शुक्त्यवच्छिन्नं चैतन्यमावृणोति। अतो शुक्त्यवच्छिन्नचैतन्याद् विजातीयस्य अचेतनस्य रजतस्य समुत्पत्तिः विवर्त एव। शुक्तेः रजतोत्पत्तिरिति संक्षेपविवक्षया कथ्यते। लक्षणस्यास्य निर्दुष्टत्वेऽपि परिणामविवर्तयोः तृतीयं लक्षणमाकलितम् अप्पय्यदीक्षितेन।

तृतीयं लक्षणं तावत् - कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति। उपादानकारणेन सह अभिन्नं कार्यं यदा उत्पद्यते तदा तत् कार्यं परिणाम इत्युच्यते। तथाहि, मृत्तिकायाः घटोत्पत्तौ मृत्तिकाघटयोः नास्ति भेदः। यो घटः सा एव मृत्तिका इति व्यवहारो लोके प्रसिद्धः। अतो घटः मृत्तिकायाः परिणामः। उपादानकारणेन सह अभेदं विनैव प्रतीयमानम्, उपादानकारणव्यतिरेकेण निरूपणायोग्यं कार्यं विवर्तः। शुक्तिरजतोदाहरणे तावत् प्रतीयमानरजतस्य शुक्तेश्च अस्ति भेदः। न हि कश्चित् यदेव रजतं सा एव शुक्तिः इति ब्रूते। परन्तु अधिष्ठानं शुक्तिं



व्यतिरिच्य रजतस्य सत्ता नैव प्रतिपादयितुं शक्यते। अतः शुक्तिरजतयोरभेदं विनापि शुक्तिव्यतिरेकेण दुर्वचं रजतं विवर्त एव।



## पाठगतप्रश्नाः ४

२८. किं तावत् शुक्तिरजतस्य परिणाम्युपादानं, किं च विवर्तोपादानम्।
२९. सदानन्दयोगीन्द्रेण परिणामस्य किं लक्षणमुच्यते।
३०. सदानन्दयोगीन्द्रेण विवर्तस्य किं लक्षणमुक्तम्।
३१. वेदान्तपरिभाषायां परिणामविवर्तयोः किं लक्षणमुक्तम्।
३२. पारमार्थिकसत्तायाः किं तावल्लक्षणम्।
३३. व्यावहारिकसत्तायाः किं तावल्लक्षणम्।
३४. प्रातिभासिकसत्तायाः लक्षणं किम्।
३५. अद्वैतवादे जगतः सत्तामाधारीकृत्य के वादाः प्रसिद्धाः।
३६. सिद्धान्तलेशसङ्ग्रहे विवर्तपरिणामयोः तृतीयं लक्षणं किम्।



## पाठसारः

पाठेऽस्मिन् अध्यासवस्तूत्पत्तिप्रकारविषये अध्यासकारणविषये अध्यस्तुवस्तुस्वरूपविषये च वैशद्येन आलोचितम्। विषयचैतन्येन सह प्रमातृचैतन्यस्य अभेदे सत्येव विषयस्य ज्ञानं भवति। अन्तःकरणं यदा चक्षुर्द्वारा विषयदेशं प्रति गच्छति, विषयाकारेण च परिणमते, तदा अन्तःकरणवृत्तिरुत्पद्यते। अन्तःकरणवृत्तिः विषयावच्छिन्नचैतन्यस्य आवरकम् अज्ञानं नाशयति। तेन च चैतन्यस्वरूपयोः विषयचैतन्यस्य-प्रमातृचैतन्ययोः च अभेदो भवति, विषयश्च प्रत्यक्षो भवति। शुक्तौ रजतभ्रमकाले अन्तःकरणं यदा काचकामलादिदोषयुक्तचक्षुरिन्द्रियद्वारेण शुक्त्या सह सम्बध्नाति तदा इन्द्रियदोषवशात् इदमिति वस्तुमात्रस्य सामान्यज्ञानं भवति, शुक्तित्वरूपविशेषस्य ज्ञानं न भवति। तत्र च चाकचिक्यादिसादृश्यदर्शनकारणात् रजतस्य संस्कारः उद्बुद्धो भवति। तदा शुक्तिविषयिणी अविद्या उद्बोधितरजतसंस्कारसामग्रीसहिता काचकामलादिदोषसहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते।

शुक्तौ इदं रजतम् इति जायमानं ज्ञानम् भ्रमः एव। भ्रमज्ञाने अधिष्ठानैकदेशस्य आरोप्यस्य च तादात्म्येन भानं भवति। इदं रजतम् इति ज्ञाने इदमंशः शुक्तेः सामान्यांशं बोधयति, रजतमिति च आरोप्यं रजतं निर्दिशति। चक्षुरिन्द्रियेण सह शुक्तेः सन्निकर्षवशात् इदमाकारा अन्तःकरणवृत्तिः उदेति। अतः



इदमिति ज्ञानं यथार्थम् एव। तथापि अनिर्वचनीयेन आरोपितेन रजतेन सह अभेदेन प्रतीयमानत्वात् इदं रजतम् इति ज्ञानं भ्रमः। इदन्तादात्मापन्नं रजतम् इत चात्र भवति बोधः।शुक्तौ प्रतीयमानं रजतम् हि अनिर्वचनीयम् आविद्यकं तत्कालोत्पन्नम् अभिनवं चेति।

भ्रमस्थले प्रतीयमानवस्तुनः किं तावत् स्वरूपम् इति विषये बहवो वादाः सन्ति। तेषु मुख्यास्तावत् – आत्मख्यातिः, अख्यातिः, अन्यथाख्यातिः, असत्ख्यातिः अनिर्वचनीयख्यातिश्चेति। सौत्रान्तिक-वैभाषिक-योगाचारबौद्धानां नये विज्ञानमेव बाह्यवस्त्वाकारेण प्रतिभासते। एतेषां मतम् आत्मख्यातिः इति प्रसिद्धम्। अख्यादिवादिनो हि प्राभाकरमीमांसकाः। तेषां नये इदम् इति प्रत्यक्षज्ञानविषयः, रजतम् इति च स्मृतेः विषयः। तयोः भेदे सत्यपि, दोषकारणात् भेदस्य ग्रहणं न भवति। तेन च अभेदेन इदं रजतम् इति ज्ञानं जायते इति प्राभाकरमतम्। नैयायिकाः भाट्टमीमांसकाश्च अन्यताख्यातिवादिनः। एतेषां मते देशान्तरस्थं सत्यं रजतमेव ज्ञानलक्षणसन्निकर्षेण पुरोवर्तिनि शुक्तौ प्रत्यक्षं भवति। शून्यवादिनो बौद्धा हि असत्ख्यातिवादिनः। एतेषां मते इदं रजतम् इति ज्ञाने शुक्तौ हि अत्यन्तस्य असतः रजतस्य भानं भवति। अद्वैतवेदान्तिनो हि अनिर्वचनीयख्यातिवादिनः। एते हि भ्रमभूतरजतस्य सदसद्भ्याम् अनिर्वचनीयत्वम् अङ्गीकुर्वन्ति।

रजतं हि शुक्तिविषयकाज्ञानस्य परिणामः, शुक्त्यवच्छिन्नचैतन्य च विवर्तः। एवं जगत् अपि अज्ञानस्य परिणामः, ब्रह्मणश्च विवर्तः। कारणात् तत्समानसत्ताविशिष्टस्य कार्यस्य उत्पत्तिः परिणामः, कारणात् तद्भिन्नसत्ताविशिष्टस्य कार्यस्य उत्पत्तिः विवर्तः। यथा व्यावहारिकसत्ताविशिष्टायाः मृत्तिकायाः व्यावहारिकसत्ताविशिष्टस्य घटस्य उत्पत्तिः भवति, अतः घटः मृत्तिकायाः परिणामः। व्यावहारिकसत्ताविशिष्टात् शुक्त्यवच्छिन्नचैतन्यात् प्रातिभासिकस्य रजतस्य उत्पत्तिः भवति, अतः रजतं शुक्त्यवच्छिन्नस्य चैतन्यस्य विवर्तः। एवं कारणस्य तत्सजातीयस्य अन्यरूपस्य प्राप्तिः परिणामः, विजातीयस्य अन्यरूपस्य प्राप्तिश्च विवर्तः। यथा जडस्य अज्ञानस्य तत्सजातीय-जड-प्रपञ्चरूपताप्राप्तिः परिणामः, चैतन्यस्वरूपस्य च ब्रह्मणः तद्विजातीय-जड-प्रपञ्चरूपताप्राप्तिः विवर्तः। किञ्च, कारणेन अभिन्नं कार्यं परिणामः, उपादानकारणेन सह अभेदं विनैव प्रतीयमानं किन्तु उपादानव्यतिरेकेम दुर्वचं कार्यं विवर्तः। मृत्तिकायाः उत्पन्नः तदभिन्नः घटः परिणामः, परन्तु चैतन्यात् भिन्नः परन्तु चैतन्यं विना अभावमापन्नः प्रपञ्चः विवर्तः। एवं परिणामविवर्तयोः आलोचनं शास्त्रेषु विधीयते।

अतो ब्रह्मणो विवर्तभूतं जगत् मिथ्या इति विज्ञाय बुधाः वैराग्योपेताः सन्तः मोक्षाय श्रवणमननिदिध्यासनेषु निरन्तरं निरताः स्युः इति शास्त्रस्य प्रतिपिपादयिषितम्।



## पाठान्तप्रश्नाः

१. किमर्थं सर्वत्र ब्रह्मसत्ता अनुवर्तते।

२. रजतभ्रमकाले कुतो देशान्तरीयस्य रजतस्य न भानम्।

३. स्वाप्नजगत्प्रतीतौ दोषरूपेण किं वर्तते।

४. अद्वैतवेदान्ते ज्ञानस्थले विषयाकारा वृत्तिः किमर्थम् अङ्गीक्रियते।



५. प्रथमजगदुत्पत्तिः किमर्थं नाङ्गीक्रियते।

६. इदं रजतम् इति ज्ञाने देशान्तरस्थं रजतं न प्रतिभासते - कोऽत्र हेतुः।

७. शुक्तिरजतं सदसत् इति कुतः न स्वीक्रियते।

८. ख्यातिपदस्य व्युत्पत्तिर्लेख्या।

९. बौद्धनये आत्मा नाम कः।

१०. प्राभाकरमीमांसकनये इदं रजतम् इति ज्ञाने रजतम् इति कस्य अंशः।

११. सिद्धान्तलेशप्रोक्तं परिणामविवर्तयोः द्वितीयं लक्षणं किम्।

१२. कारणसलक्षणोऽन्यथाभावः परिणामः, कारणविलक्षणोऽन्यथाभावो विवर्तः – के अत्र उदाहरणे।



## पाठगतप्रश्नानामुत्तराणि

### पाठगतप्रश्नानामुत्तरम् १

१. प्रमायाः लक्षणं हि अनधिगताबाधितार्थविषयज्ञानत्वम् इति।

२. घटादिविषयावच्छिन्नं चैतन्यं हि विषयचैतन्यम्।

३. अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं हि प्रमाणचैतन्यम्।

४. अन्तःकरणावच्छिन्नं चैतन्यं हि प्रमातृचैतन्यम्।

५. शुक्तिरजतोत्पत्तौ काचकामलादिर्हि इन्द्रियदोषः।

६. आगन्तुकदोषजन्यत्वं प्रातिभासिकत्वे नियामकम्।

७. इदं रजतम् इति ज्ञाने इदमिति शुक्तेः सामान्यांशं निर्दिशति।

८. भ्रमभूतेन रजतेन सह तादात्म्येन प्रतीयमानात् तस्य मिथ्यात्वं कथ्यते।

९. काचकामलादिलोचनदोषकारणात् शुक्तेः शुक्तित्व-नीलपृष्ठत्वादीनां विशेषांशानां ज्ञानं न भवति।

१०. विषयचैतन्यावरकस्य अज्ञानस्य ज्ञानाय विषयाकारा अन्तःकरणवृत्तिः अपेक्षिता।

११. अविद्या यदा रजतसंस्कारेण सह वर्तते तदा रजतस्यारोपः, यदा च रङ्गसंस्कारेण सह वर्तते तदा रङ्गस्यारोपो भवति।

### पाठगतप्रश्नानामुत्तरम् २

१२. आगन्तुकदोषः, संस्कारः, अधिष्ठानसामान्यज्ञानम्, सादृश्यम् अविद्या इत्यादयः हेतुरूपेण तिष्ठन्ति।

१३. अविद्या एव अध्यस्तवस्तुनः उपादानं भवति।

१४. आगन्तुकदोष-संस्कारादयः अध्यस्तवस्तुनः निमित्तकारणम्।

१५. यस्मात् कार्यस्य उत्पत्तिः भवति, कार्यनाशे कार्यस्य लयश्च यत्र सञ्जायते तदेव उपादानकारणम्।



१६. सर्वमपि कार्यं तेषाम् उपादानकारणस्य अविद्याया अधिष्ठाने ब्रह्मणि आश्रितं तिष्ठति।

१७. येषाम् अध्यासानां बाधः शुक्तित्वादिविशेषदर्शनेन भवति तेषु अध्यासेषु सादृश्यज्ञानं कारणम्।

१८. अद्वैतवेदान्तमते आरोपितं वस्तु हि अनिर्वचनीयम् आविद्यकम् तत्कालोत्पन्नम् अभिनवञ्च।

१९. न, ब्रह्मणि प्रपञ्चाध्यासे सादृश्यं न हेतुः।

**पाठगतप्रश्नानामुत्तरम् ३**

२०. ख्यातिशब्दस्य व्युत्पत्तिगतः अर्थः ज्ञानम् इति। भ्रमज्ञाने अस्य प्रयोगः रूढितो भवति।

२१. सौत्रान्तिका वैभाषिका योगाचाराश्च आत्मख्यातिवादिनः।

२२. प्राभाकरमीमांसका हि असत्ख्यातिवादिनः।

२३. शून्यवादिनो बौद्धा हि असत्ख्यातिवादिनः।

२४. अनिर्वचनीयख्यातिरिति नाम्ना प्रसिद्धः।

२५. भाट्टाः नैयायिकाश्च अन्यथाख्यातिवादम् अङ्गीकुर्वन्ति।

२६. विपरीतख्यातिः इति।

२७. सत्ख्यातिः इति।

**पाठगतप्रश्नानामुत्तरम् ४**

२८. शुक्तिविषयकम् अज्ञानं हि शुक्तिरजतस्य परिणाम्युपादानम्, शुक्त्यवच्छिन्नचैतन्यं च विवर्तोपादानम्।

२९. सतत्त्वतोऽन्यथाप्रथा इति परिणामलक्षणं तेन प्रतिपादितम्।

३०. अतत्त्वतोऽन्यथाप्रथा इति विवर्तलक्षणमुक्तं सदानन्दयोगीन्द्रेण।

३१. परिणामो नाम उपादानसमसत्ताककार्यापत्तिः, विवर्तो नाम उपादानविषमसत्ताककार्यापत्तिः इति।

३२. पारमार्थिकसत्ताया लक्षणं तावत् कालत्रयाबाध्यत्वम् इति। ब्रह्मण एव पारमार्थिकसत्ता अस्ति।

३३. ब्रह्मज्ञानेतरज्ञानाबाध्यत्वम् इति व्यावहारिकसत्ताया लक्षणम्।

३४. ब्रह्मज्ञानेतरज्ञानबाध्यत्वम् इति प्रातिभासिकसत्ताया लक्षणम्।

३५. अद्वैतवादे जगतः सत्तामाधारीकृत्य अजातवादः, दृष्टिसृष्टिवादः सृष्टिदृष्टिवादश्चेति वादत्रयं सुप्रसिद्धम्।

३६. कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति।

॥ इति चतुर्दशः पाठः ॥



# १५

# सृष्टिविचारः

## प्रस्तावना -

प्रत्येकं दर्शनानाम् आलोचितेषु विषयेषु अन्यतमा तावत् सृष्टिः। कुतः अस्य विचित्ररचनात्मकस्य जगतः समुत्पत्तिः। कोऽयं जीवः। इत्येवं जिज्ञासा एव अध्यात्मवादस्य बीजम्। तथाहि आम्नायते ऋग्वेदीये नासदीयसूक्ते -

**को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।**
**अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव॥** इति।

समेषामेव दर्शनानां सृष्टिविषये भिन्नानि मतानि सन्ति। यथा सांख्यमते प्रकृतिरेव प्रपञ्चसृष्टेः बीजभूता, न्यायवैशेषिकमते तु नित्याः परमाणवः ईश्वरस्य सिसृक्षावशात् द्व्यणुकादिक्रमेण जगद्रूपेण परिणमन्ते। इत्थम् अद्वैतवेदान्तदर्शनस्यापि सृष्टिविषये स्वमतं विद्यते। अद्वैतवेदान्तमते अज्ञानाभिधेया अनिर्वचनीया माया एव प्रपञ्चसृष्टेः कारणम्। सृष्टिः इति अभ्युपगम्यमाने केषां कस्य वा सृष्टिः इति प्रश्नः उदेति। तथाहि दर्शनेऽस्मिन् सृष्टिर्वै जीव-जगदात्मकस्य प्रपञ्चस्य सृष्टिः इति अवगन्तव्यम्। अद्वैतवेदान्तदर्शनज्ञानाय तद्दर्शनसम्मतं सृष्टितत्त्वं नितरां ज्ञेयम्।



## उद्देश्यानि

इमं पाठं पठित्वा भवद्भिः -

- अद्वैतवेदान्तदर्शनस्य सृष्टितत्त्वविषये विस्तरेण परिचयः लप्स्यते।
- अद्वैतवेदान्ते परमार्थतः सृष्टिरेव नास्तीति विषयः सुस्पष्टो भविष्यति।
- अद्वैतवेदान्तमते सृष्टिश्रुतीनाम् आशयः विस्तरेण ज्ञायेत।
- अद्वैतवेदान्तमते सृष्टिः निष्प्रयोजना इति ज्ञायेत।
- अध्यारोपापवादविषये विस्तरेण ज्ञायेत।
- विवर्तवादविषये परिणामवादविषये च ज्ञायेत।
- सृष्टिश्रुतीनां प्रयोजनं ज्ञायेत।
- ईश्वरस्य सृष्टिकारणत्वं ज्ञायेत।
- अज्ञानस्य शक्तिद्वयविषये विस्तरेण परिचयः लप्स्यते।



- कार्यकारणयोरनन्यत्वविषये परिचयः लप्स्यते।

## १५.१) अद्वैतवेदान्तदर्शने परमार्थदृष्ट्या सृष्टिरेव नास्ति

इदमत्र ज्ञातव्यं यत् परमार्थदृष्ट्या अद्वैतवेदान्तदर्शने सृष्टिरेव नास्तीति। तथाहि अद्वैतसम्प्रदायविदां गौडपादानां कारिका-

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**

**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इति।**

श्लोकेऽस्मिन् निरुच्यते यत् प्रपञ्चस्य विनाशः नास्ति, उत्पत्तिरपि नास्ति, कश्चित् बद्धः अपि नास्ति, साधकः अपि नास्ति, मुमुक्षुरपि नास्ति, मुक्तः अपि नास्ति। बन्धसत्त्वे एव साधक-मुमुक्षु-मुक्तानां स्थितिप्रसङ्गः, बन्धाभावे मुक्तिरपि नास्तीति अवगन्तव्यम्। परमार्थतः सर्वे स्वस्वरूपे स्थिताः एव विद्यन्ते। इयं हि परमार्थदृष्टिः। व्यवहारदृष्ट्या तु बद्ध-मुक्तादिव्यवहारः समस्ति। तथाहि व्यवहारदृष्टिः परमार्थदृष्टिरिति द्विधा दृष्टिः अङ्गीकर्तुं शक्यते। व्यवहारदृष्ट्या सृष्टिः अङ्गीक्रियते अद्वैतवेदान्तदर्शने, न तु परमार्थदृष्ट्या। परमार्थदृष्ट्या तु अद्वैतं ब्रह्मैव केवलं विराजते, नास्ति तत्र सृष्ट्यादिकार्यजातम्।

ननु यदि सृष्टिरेव नास्ति अद्वैतदर्शनमते तर्हि पुनः सृष्टिविषयः दर्शने अस्मिन् आलोचितः आलोचयिष्यते वेति वक्तुं न शक्यते। किञ्च, सृष्टिः न अभ्युपगम्यते चेद् अस्माभिः दृश्यमानम् इदं जगत् कुतः आगतम् इति प्रश्नस्य उत्तरं न प्राप्यते। अतः व्यवहारसिद्धये अद्वैतिभिः अवश्यं सृष्टिः अभ्युपगन्तव्या, तत्कारणं च निरूपणीयम्। अन्यथा इदं दर्शनं व्यवहारसिद्धम् अनङ्गीकुर्वत् अलौकिकं कपोलकल्पितं च स्वीकुर्वत् प्रेक्षावताम् अनादरणीयताम् आप्नुयात्, सामान्यजनानां च हेयताम् अधिगच्छेत्। तस्मात् अद्वैतवेदान्तदर्शने सृष्टितत्त्वम् अङ्गीकरणीयम् इति चेदुच्यते अद्वैतदर्शने सृष्टिः अङ्गीक्रियते एव, तस्मात् नास्ति दर्शनेऽस्मिन् अलौकिकी काचित् कल्पना। परन्तु सृष्टेः अस्ति भिन्नं तात्पर्यम्। किं तदिति अग्रे प्रतिपादिष्यते।

## १५.२) सृष्टिश्रुतीनाम् आशयः

अद्वैतवेदान्तमते सच्चिदानन्दम् अद्वयं ब्रह्मैव वस्तु, तद्व्यतिरिक्तम् उपलभ्यमानं सर्वमपि मायाकल्पितम्। अतः सर्वजनप्रत्यक्षं जगत् मायाकल्पितम्। तथाहि उच्यते विवेकचूडामणौ-

**माया मायाकार्यं सर्वं महदादिदेहपर्यन्तम्।**

**असदिदमनात्मकं त्वं विद्धि मरुमरीचिकाकल्पम्॥ इति।**

अस्यार्थो हि सांख्यस्वीकृतात् अतिसूक्ष्मात् महत्तत्त्वात् आरभ्य अतिस्थूलदेहपर्यन्तं सर्वं मायाकार्यम्। अतः ब्रह्मव्यतिरेकेण सर्वं मरुमरीचिकातुल्यम् असदिति ज्ञातव्यम्। परन्तु इदं निष्प्रपञ्चं ब्रह्म न साधारणैः मनसापि कल्पयितुं शक्यम्। अतः यथा निष्प्रपञ्चस्य ब्रह्मणोः बोधः साधारणजनानां भवेत् तदर्थं सविशेषस्य ब्रह्मणःनिरूपणं शास्त्रकारैः आदौ क्रियते। तथाहि-



**निर्विकल्पं परं ब्रह्म साक्षात्कर्तुम् अनीश्वराः।**

**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ इति।**

ये मन्दाः ते निर्विकल्पं परं ब्रह्म साक्षात्कर्तुं न प्रभवन्ति, तस्मात् तेषां कृते भगवती श्रुतिः अनुकम्पया सविशेषं ब्रह्म उपदिशति इति श्लोकस्यास्य आशयः।

सविशेषं ब्रह्म निर्विशेषं ब्रह्म इति एकस्यैव ब्रह्मणः द्विविधरूपकल्पना। निर्विशेषं ब्रह्म हि नामरूपोपाधिविवर्जितं शुद्धं स्वरूपम् सत्यज्ञानानन्तादिपदलक्ष्यम्। न हि निर्विशेषं ब्रह्म सर्वैः कल्पयितुं शक्यते इति कारणात् नामरूपोपाधिसम्बन्धः तस्मिन् शुद्धे ब्रह्मणि कल्प्यते। तेन च नामरूपोपाधिविशेषसम्बन्धित्वात् ब्रह्म सविशेषमिति अभिधीयते। तदेव सविशेषं ब्रह्म सृष्टिस्थितिप्रलयकारित्वेन ईश्वरः इत्यभिधीयते।

ननु सविशेषेण ब्रह्मणा सह सृष्टेः कः सम्बन्धः इति चेत् सविशेषं ब्रह्म अर्थात् ईश्वरो हि प्रपञ्चस्य सृष्टि-स्थिति-प्रलयकारणम्। अतः जगतः सृष्टिकर्ता ईश्वर इति लभ्यते। निर्विशेषं ब्रह्मैव सृष्टिकर्तृत्वेन सविशेषं ब्रह्म अर्थात् ईश्वर इत्यभिधीयते। एवं सविशेषस्य ब्रह्मण उपदेशेन सृष्ट्यादिरपि अर्थतः उपदिष्टो भवति। सविशेषस्य च ब्रह्मण उपदेशेन निर्विशेषं ब्रह्मैव वस्तुतः निर्दिदिक्षितं श्रुत्या इति ज्ञातव्यम्। तस्मादेव सृष्ट्यादिकं वर्णयति श्रुतिरिति आशयः। ये तावत् सविशेषं ब्रह्म जानन्ति ते शुद्धचित्ताः सन्तः सविशेषात् ब्रह्मणः सृष्टिकर्तृत्वादिविशेषत्यागेन निर्विशेषं ब्रह्म वेदितुं शक्नुवन्ति।

सृष्टिश्रुतीनां तात्पर्यविषये श्रीशङ्करभगवत्पादैः शारीरकमीमांसाभाष्ये उच्यते- "न चेयं परिणामश्रुतिः (सृष्टिप्रतिपादिका श्रुतिः) परिणामप्रतिपादनार्था, तत्प्रतिपत्तौ फलानवगमात्। सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था हि सा।" इति। इतः ज्ञायते यत् सृष्टिप्रतिपादने अपि अस्ति अन्यत् किञ्चित् तात्पर्यं श्रुतेः। न केवलं सृष्टिप्रतिपादनार्था एव प्रपञ्चस्य सृष्टिः प्रदर्श्यते श्रुतौ, अपि तु ब्रह्म लक्षयितुं बोधयितुमेव श्रुतिः सृष्टिं प्रतिपादयति। केन प्रकारेण सृष्टिश्रुतयः ब्रह्म बोधयन्तीति चेदुच्यते - यस्मात् कारणात् सृष्टिः भवति तत् कारणं ब्रह्मैव इति कारणमुखेन सृष्टिश्रुतयः ब्रह्म बोधयन्ति। तथाहि बादरायणकृतं ब्रह्मलक्षणपरकं शारीरकमीमांसासूत्रं "जन्माद्यस्य यतः" इति। यस्मात् अस्य जगतः सृष्टिः, यस्मिन् स्थितिः प्रलयश्च सम्भवति तद् ब्रह्म इति सूत्रस्यास्य सामान्यार्थः। तथाहि सूत्रस्यास्य भाष्ये शङ्करभगवत्पादैः उच्यते - "अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति, तद्ब्रह्मेति" इति। तैत्तिरीयश्रुतौ अपि आम्नायते -

**"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति।**

**यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति।" (३.१.१) इति।**

अतः ब्रह्म निर्दिदिक्षुरेव श्रुतिः सृष्टितत्त्वं प्रतिपादयतीति अद्वैतवेदान्तिनाम् अभिप्रायः।



## १५.३) अध्यारोपापवादन्यायः -

सृष्टिविचारप्रसङ्गे अद्वैतवेदान्तिनाम् अध्यारोपापवादन्यायः प्रसिद्धः। तथाहि अद्वैतिनां प्रसिद्धः श्लोकः -

**अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।**

**शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः॥ इति।**

अस्यार्थो हि - निष्प्रपञ्चं ब्रह्म अल्पज्ञान् शिष्यान् बोधयितुमेव तत्त्वज्ञैः आचार्यैः अयम् अध्यारोपापवादन्यायः स्वीकृतः। तस्मादेव श्रुतौ सविशेषस्य ब्रह्मणः सृष्ट्यादीनां च वर्णनं प्राप्यते। निर्विशेषे ब्रह्मणि सृष्ट्यादिकर्तृत्वमारोप्य सविशेषं ब्रह्म विज्ञाते सति सृष्ट्यादिकर्तृत्वम् अपोद्य निर्विशेषं ब्रह्म निर्देष्टुम् इष्यते शास्त्रैः। अयम् आरोपः आहार्यारोपः, न तु वस्तुगत्या आरोपः।

ननु किं नाम अध्यारोपः, किं च अपवादः। तथाहि– अध्यारोपो नाम वस्तुनि अवस्त्वारोपः इति। सच्चिदानन्दम् अद्वयं ब्रह्म एव वस्तु, तद्विहाय अखिलम् अवस्तु। अतः सत्यभूते ब्रह्मणि अनित्यसर्ववस्तूनाम् मिथ्याभूतः आरोपः अध्यारोपः। तथाह्युच्यते वेदान्तसारकृता सदानन्दयोगीन्द्रेण– "असर्पभूतायां रज्जौ सर्पारोपवत् वस्तुनि अवस्त्वारोपः अध्यारोपः" इति। अल्पान्धकारे रज्जुं दृष्ट्वा सर्पः इति ज्ञानं भवति। तदा वस्तुतः रज्जुः रज्जुस्वरूपेण एव तिष्ठति, परन्तु अज्ञानवशात् द्रष्टा सर्परूपेण रज्जुं पश्यति। तदा स रज्जुस्वरूपम् अजानन् "अयं सर्पः" इति व्यवहरति। एवम् असर्पभूतायां रज्जौ यथा सर्पस्य मिथ्याभूतः आरोपः तद्वत् अकर्तरि ब्रह्मणि अपि सृष्ट्यादिकर्तृत्वस्य मिथ्याभूतः यः आरोपः सः अध्यारोपः। परन्तु अयम् आरोपः शास्त्रेण ब्रह्मतत्त्वावबोधाय क्रियते इति कारणाद् आहार्यारोपत्वेन ज्ञेयः।

अपवादो नाम "रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्तस्य अवस्तुनः अज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्" इति। अस्यार्थो हि – रज्जुस्वरूपापरित्यागेन सर्पाकारेण भासमानस्य रज्जुविवर्तस्य अपवादो नाशो नाम अधिष्ठानरज्जुमात्रतया अवस्थानम्। एवं ब्रह्मविवर्तस्य अज्ञानादिप्रपञ्चस्य नाशो नाम ब्रह्मस्वरूपमात्रेण अवस्थानम् इति। यदा रज्जौ सर्पारोपः मिथ्याभूतः इति यथार्थज्ञानं भवति तदा रज्जुः रज्जुस्वरूपेण एवावतिष्ठते, एवं यदा ब्रह्मविवर्तभूतोऽयं प्रपञ्चः मिथ्याभूतः अथवा ब्रह्मणि जगत्कर्तृत्वादिकं मिथ्याभूतमिति यथार्थज्ञानं भवति तदा निर्विशेषं ब्रह्म स्वस्वरूपेणैव अवतिष्ठते। अयं अधिष्ठानमात्रत्वेन स्वरूपावस्थितिरेव अपवादः।

विवर्तस्यास्य जगतः सन्मात्रत्वेन दर्शनम्।

अपवाद इति प्राहुरद्वैतब्रह्मदर्शिनः॥ इति।

एवं ब्रह्मणि अखिलं जगत् अध्यारोप्य अन्ते नास्ति ब्रह्मणि किञ्चिदपि इति अपोद्य निर्विशेषं ब्रह्म बोधयति श्रुतिः अद्वैतवेदान्तवादिनां मतम्।





## पाठगतप्रश्नाः-१

१. परमार्थदृष्ट्या अद्वैतदर्शने सृष्टिः नास्तीत्यत्र प्रमाणभूता गौडपादानां कारिका का।

२. अद्वैतवेदान्तमते सविशेषस्य ब्रह्मणः निरूपणं शास्त्रे केषां कृते क्रियते।

३. एकस्यैव ब्रह्मणः द्विविधं रूपं किम्।

४. निर्विशेषं ब्रह्म नाम किम्।

५. ब्रह्मणः सविशेषत्वं किमर्थम्।

६. सृष्टिश्रुतयः किमर्था।

७. सृष्टिविचारप्रसङ्गे अद्वैतवेदान्तिनां कः न्यायः प्रसिद्धः।

क) तृणारणिमणिन्यायः ख) शाखाचन्द्रमसन्यायः ग) अध्यारोपापवादन्यायः घ) तिलतण्डुलन्यायः।

८. अध्यारोपः नाम कः।

९. अपवादो नाम कः।

१०. अध्यारोपस्य एको दृष्टान्तः प्रदीयताम्।

## १५.४) विवर्तवादः परिणामवादश्च

ब्रह्मविवर्तस्य जगतः ब्रह्ममात्रत्वम् अपवादः इति अपवादविषये उक्तम्। परन्तु ब्रह्मणः विवर्तभूतमिदं जगत् आहोस्वित् परिणामभूतं जगदिति निःसंशयेन कथं ज्ञातुं शक्यते। अतः विवर्तवादविषये परिणामवादविषये च सामान्यं ज्ञानमादौ आवश्यकम्। यथास्वरूपेण अवस्थितस्य वस्तुनः अन्यथाभावो द्विधा भवति - परिणामभावः विवर्तभावश्चेति। ननु को नाम परिणामभावः इति चेदुच्यते - तत्र परिणामभावो नाम वस्तुनो यथार्थतः स्वरूपं परित्यज्य स्वरूपान्तरापत्तिः, यथा दुग्धमेव स्वस्वरूपं परित्यज्य दध्याकारेण परिणमते। ननु कः नाम विवर्तः इति चेदुच्यते - स्वस्वरूपापरित्यागेन स्वरूपान्तरेण मिथ्याप्रतीतिः विवर्तः इति। यथा - शुक्तिका स्वस्वरूपापरित्यागेन रजतरूपेण मिथ्या प्रतीयते, रज्जुश्च स्वस्वरूपापरित्यागेन सर्परूपेण मिथ्या प्रतीयते। तथाहि उच्यते विवर्तवादविषये -

**सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।**
**अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः॥** इति।

**सरलार्थः** - यदा कस्यचित् वस्तुनः वस्तुगत्या अन्यथारूपेण विकारः भवति तदा विकार इति उच्यते अर्थात् परिणामः इति उच्यते। यथा दुग्धं दधिरूपेण परिणमते। वस्तुगत्या एव दुग्धस्य दधिरूपेण परिणामः भवति। दुग्धं स्वं स्वरूपं परित्यज्य नूतनं दधिरूपं गृह्णाति। परन्तु यदा कस्यचित् वस्तुनः



वस्तुगत्या अन्यथारूपेण विकारः न भवति, वस्तु तेनैव रूपेण विराजते, परन्तु भ्रान्त्या वस्तु भिन्नरूपेण प्रतीयते तदा स विवर्तः इति उच्यते। यथा शुक्तौ इदं रजतमिति भ्रमज्ञाने सति रजतं स्वीकर्तुं भ्रान्तजनस्य प्रवृत्तिः भवति। वस्तुतः शुक्तिः शुक्तिरूपेण एव विराजते, न तु रजतरूपेण। रजतरूपं यत् कार्यं भ्रान्त्या प्रतिभाति, वस्तुगत्या तत् मिथ्याभूतम्। एवं कारणस्य वस्तुतः तथात्वेनैव स्थितिः, भ्रान्त्या च कारणस्य मिथ्याकार्यत्वेन प्रतीतिः एव विवर्तः। एतन्मते कारणमेव कार्यस्वरूपेण भासते इति कारणस्यैव सत्यत्वं, न तु कार्यस्य सत्यत्वम्। एका कारणसत्ता एव विविधकार्याकारेण भासिता भवति, सुवर्णं कुण्डलाकारेण भासते, मृच्च घटाकारेण। कुण्डलं यथा सुवर्णस्यैव आकारभेदः, घटश्च मृत्तिकायाः तथा परिदृश्यमानं जगदपि सद्वस्तुनः विविधाकारमात्रम्। प्राक् सृष्टेः सन्मात्रमेव इदमासीत्, नातिरिक्तं किञ्चिदप्यासीत्। घटशरावादयः यथा परस्परं विभिन्ना अपि मृत्तिकातः नातिरिच्यन्ते, पिण्डस्य घटात् घटस्य च पिण्डात् भेदेऽपि मृत्तिकातो द्वयोरपि अभिन्नत्वात्, तथैव विविधसृष्टपदार्थाक्रान्तः संसारोऽपि वस्तुतः सद् नातिरिच्यते, अपि तु सतः एव रूपान्तरं संसारः, यत् सद् वस्तु तद् ब्रह्मैव। अद्वैतवेदान्तमते अविद्याकारणाद् इदं मिथ्याभूतं जगत् परमार्थसत्यभूते ब्रह्मणि अध्यस्यते, ब्रह्मज्ञाने सति अविद्यायाः नाशः भवति, तेन मिथ्याभूतं जगदपि ब्रह्मणि बाधितं भवति। अयमेव विवर्तवादः अनिर्वचनीयकारणवादः सत्कारणवादः वेति अभिधीयते।

अप्पय्यदीक्षितेन परिणामविवर्तयोः किञ्चिद् भिन्नप्रकारेण उपस्थापनं कृतम्। तन्मते समसत्ताकोऽन्यथाभावः परिणामः, विषयसत्ताकोऽन्यथाभावः विवर्तः इति। तथाहि त्रिविधा सत्ता अद्वैतवेदान्ते अङ्गीक्रियते – प्रातिभासिकी च सत्ता, व्यावहारिकी सत्ता, पारमार्थिकी सत्ता चेति। प्रतिभासमात्रं यस्य वस्तुनः सत्ता सा प्रातिभासिकी सत्ता, यथा रज्जौ सर्पस्य या सत्ता सा प्रतिभासमात्रत्वात् प्रातिभासिकी सत्ता, अथवा स्वप्नस्य या सत्ता सा प्रातिभासिकी सत्ता। सा च सत्ता व्यवहारेण बाध्यते। व्यवहारबाध्यत्वं प्रातिभासिकत्वम् इत्यपि प्रातिभासिकस्य लक्षणं कर्तुं शक्यते। व्यावहारिकस्य प्रपञ्चस्य या सत्ता सा व्यावहारिकी सत्ता। सा च पारमार्थिकेन ब्रह्मज्ञानेन बाध्यते। अतः पारमार्थिकसत्ताबाध्यत्वं व्यावहारिकत्वमिति। पारमार्थिकी सत्ता हि नित्या। एवं किञ्चिद् वस्तु यदा समानसत्ताकम् अन्यथाभावं प्राप्नोति तदा स परिणामः इत्युच्यते। यथा मृद् घटरूपेण यदा अन्यथाभावं प्राप्नोति तदा मृद्घटयोः व्यावहारिकत्वेन समानसत्ताकत्वात् परिणामः ज्ञेयः, न तु विवर्तः। यदा च रज्जुः सर्परूपेण अन्यथाभावं प्राप्नोति तदा रज्ज्वाः व्यावहारिकत्वेन सर्पस्य च प्रातिभासिकत्वेन विषमसत्ताकत्वात् रज्जुसर्पयोः विवर्तः ज्ञेयः।

## १५.५) सृष्टिप्रयोजनम् -

सांख्यदर्शने यथा त्रिगुणात्मिकायाः प्रकृतेः भोगार्थं, पुरुषस्य च कैवल्यार्थं प्रकृतेः प्रवृत्तिः सप्रयोजना अवलोक्यते, तद्वत् अद्वैतवेदान्तदर्शने अस्ति वा सृष्टेः किञ्चित् प्रयोजनम्, येन प्रयोजनेन प्रेरितः ईश्वरः प्रपञ्चं सृजति इति चेदुच्यते - अविद्याकल्पितनामरूपव्यवहारविषया सृष्टिः इति कारणात्



सृष्टिश्रुतयः न परमार्थविषयाः इति अद्वैतवेदान्तिभिः अङ्गीकारात् परमार्थतः न किञ्चित् प्रयोजनम् अन्वेष्टव्यम् सृष्टेः। किञ्च, सृष्टिश्रुतीनां ब्रह्मबोधने एव तात्पर्यम् इति स्वीकारात् ब्रह्मप्रतिपादनार्था सृष्टिश्रुतयः इति व्यवहारदृष्ट्या सृष्टिश्रुतीनाम् अस्ति तावत् प्रयोजनवत्त्वम्।

ननु काचित् प्रवृत्तिः विद्यते चेत् तस्य प्रयोजनम् अङ्गीकर्तव्यमेव। तथाहि प्रसिद्धोक्तिः - प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति। जगत्सृष्टिरूपा महती प्रवृत्तिः अस्ति चेत् तस्याः प्रवृत्तेरपि प्रयोजनम् अङ्गीकरणीयमेव, अन्यथा यथा उन्मत्तस्य निष्प्रयोजना प्रवृत्तिः अवलोक्यते तद्वत् ईश्वरस्यापि निष्प्रयोजनत्वेन प्रवृत्तिमत्त्वाद् उन्मत्तताप्रसङ्गः समापतति इति चेदुच्यते लीलारूपा एव इयम् जगत्सर्जनरूपा प्रवृत्तिः ईश्वरस्य, न तु सप्रयोजना। तथाहि बादरायणकृतं ब्रह्मसूत्रं - "लोकवत्तु लीलाकैवल्यम्" इति। यथा लोके कश्चित् आप्तकामः राजा किञ्चित् प्रयोजनम् अनभिसन्धाय एव क्रीडा-विहारादिषु प्रवर्तते, यथा वा श्वासप्रश्वासौ बाह्यं किञ्चित् प्रयोजनम् अन्तरेण स्वभावादेव सम्भवति, तद्वद् ईश्वरस्यापि अनपेक्ष्य किञ्चित् प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिः सम्भवति। ईश्वरस्य प्रवृत्तिः सप्रयोजना इति युक्तितः श्रुतितः वा नैव सम्भवति। आप्तकामस्य ईश्वरस्यापि सप्रयोजनत्वं स्वीक्रियते चेत् तस्य आप्तकामत्वमेव न सिध्यति, आप्तकामत्वं स्वीक्रियते चेत् सप्रयोजनत्वं नैव सिध्यति। श्रुतौ हि ईश्वरस्य आप्तकामत्वं पुनः पुनः उपदिश्यते इति कारणात् आप्तकामस्य ईश्वरस्य लीलारूपा निष्प्रयोजना एव जगत्सृष्टिरूपा प्रवृत्तिः इत्यवगन्तव्यम्। यद्यपि अस्माकं कृते इयं जगद्बिम्बरचना महतीति भाति तथापि अपिरिमितशक्तिमत्त्वात् ईश्वरस्य तु लीलारूपैव जगत्सृष्टिः। यदि नाम लोके लीलास्वपि किञ्चित्सूक्ष्मं प्रयोजनम् अस्तीति उत्प्रेक्ष्येत, तथापि ईश्वरस्य जगत्सृष्टिविषये नैव किञ्चित् प्रयोजनम् उत्प्रेक्षितुं शक्यते, तस्य आप्तकामत्वश्रुतेः। तथाह्युच्यते गौडपादाचार्येण माण्डूक्यकारिकायाम् -

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।**

**देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा॥ इति।** [१.९]

अतः ईश्वरस्य स्वभावरूपेयं प्रवृत्तिः। ननु अप्रयोजनत्वात् मास्तु सृष्टिप्रवृत्तिः इति चेन्न, सृष्टिरस्तीति श्रुतिः स्वयं प्रतिपादयतीत्यतः सृष्टिप्रवृत्तिः मास्तु इति श्रुतिविरुद्धं नैव शक्यते अङ्गीकर्तुम्। उन्मत्तप्रवृत्तिवत् निष्प्रयोजनत्वाद् ईश्वरस्य उन्मत्तताप्रसङ्गः इत्यपि वक्तुं नैव शक्यते ईश्वरस्य सर्वज्ञत्वश्रुतेः। अतः लीलारूपा निष्प्रयोजना एव जगत्सृष्टिरूपा प्रवृत्तिः ईश्वरस्य।

## १५.६) ईश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गविचारः -

ईश्वर एव जगत्स्रष्टा इति अभ्युपगम्यते चेत् ईश्वरस्य वैषम्यं नैर्घृण्यं च आपतति। तथाहि दृश्यते हि लोके केचिद् देवादयः आजन्मनः सुखिनः, पश्वादयश्च दुःखिनः, मनुष्याश्च कदाचित् सुखिनः कदाचित् दुःखिनः, केचित् धनिकाः, केचन दरिद्राः, केचिद् अन्धबधिराः, केचन अतीवसुन्दरदर्शनाः, केचित् कुत्सितदर्शनाः इति। एवं विषमां सृष्टिं निर्मिमाणस्य ईश्वरस्य खलजनस्य इव रागद्वेषौ सम्भवतः,



अन्यथा एतादृशस्य वैषम्यस्य कारणं किं वा स्यात्। अपि च, क्रूरजनः यथा सुखिनः अपि जनान् दुःखेन संयुनक्ति तथैव ईश्वरः अपि घृणावशात् दुःखयोगविधानेन मनुष्यान् दुःखभाजः करोति इति विषमसृष्टिकारित्वेन दुःखयोगविधानेन च ईश्वरस्य वैषम्यं नैर्घृण्यं च आपतति। परन्तु शुद्धस्वभावः ईश्वरः वैषम्यनैर्घृण्यदोषभाक् भवितुं नार्हति, अतः नास्ति ईश्वरः विषमायाः सृष्टेः कारणम् इति चेदुच्यते न ईश्वरः एव जगत्स्रष्टा। न हि ईश्वरः निरपेक्षः सन् विषमां सृष्टिं निर्मिमीते, अपि तु सापेक्षः एव ईश्वरः विषमां सृष्टिं निर्माति। तथाहि बादरायणकृतं सूत्रं – "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति" [२.१.३४] इति। किम् अपेक्ष्यते ईश्वरः इति चेद् धर्माधर्माख्यानि कर्माणि इत्यर्थः। तथाहि उच्यते भाष्यकारैः श्रीमच्छङ्करभगवत्पादैः – "सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः; ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः – यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतानि एवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति, देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतानि एवासाधारणानि कर्माणि कारणानि भवन्ति; एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति" इति। ईश्वरो हि प्राणिनां फलदानाय उन्मुखानि कर्माणि अपेक्ष्य एव सृष्टिं करोति। यस्य कर्मफलं यादृशं स तादृशमेव जन्म प्राप्नोति, तादृशं सुखदुःखादिकं च प्राप्नोति। अतः कर्मापेक्षत्वात् न विद्येते वैषम्यनैर्घृण्यदोषौ ईश्वरस्य। कथं पुनरवगम्यते यत् सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति। तथा हि दर्शयति श्रुतिः — 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' (कौषितकीब्राह्मणम् ३.८) इति, 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृहदारण्यकोपनिषत् ३.२.१३) इति च। स्मृतिरपि प्राणिकर्मविशेषापेक्षम् एवेश्वरस्य अनुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति। तथाह्युच्यते भगवता वासुदेवेन श्रीमद्भगवद्गीतासु —

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥ इति।** [४.११]



## पाठगतप्रश्नाः-२

११. को नाम परिणामः।

१२. को नाम विवर्तः।

१३. अप्पय्यदीक्षितमते को नाम परिणामः, कश्च विवर्तः।

१४. अद्वैतवादिनां सत्तात्रयं किम्।

१५. किं नाम व्यावहारिकत्वम्।

१६. अद्वैतमते परमेश्वरस्य सृष्टिप्रवृत्तिः किंरूपा।



क) सप्रयोजना ख) लीलारूपा ग) भोगरूपा घ) मोक्षरूपा

१७. किमपेक्ष्य सृष्टौ प्रवर्तते ईश्वरः।

१८. विषमा सृष्टिः किमर्था।

## १५.७) ईश्वरः एव जगतः सृष्टिकारणम् -

अद्वैतवेदान्तमते ईश्वरः एव जगतः सृष्टिकारणम्। स च ईश्वरः स्वीयाम् मायाशक्तिम् अवलम्ब्य जगत् सृजति। मायाशक्तिरेव अज्ञानमिति उच्यते। तस्य अज्ञानस्य लक्षणं निगदितं सदानन्दयोगीन्द्रेण वेदान्तसारे - "अज्ञानं तु सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चित्" इति। पञ्चदशीकारेण विद्यारण्यस्वामिना तु सत्त्वगुणस्य तारतम्यानुसारेण अविद्या माया चेति अज्ञानस्य द्विरूपता कल्पिता। पञ्चदशीकारमते अविशुद्धसत्त्वात्मिका अविद्या हि जीवस्योपाधिः, विशुद्धसत्त्वात्मिका माया हि ईश्वरस्य। तस्मात् मायोपाधिकः ईश्वरः, अविद्योपाधिकश्च जीवः। यद्यपि माया ईश्वरस्य उपाधिः तथापि माया ईश्वरस्य अधीने तिष्ठति इति ईश्वरो न मायापरतन्त्रः। अविद्योपाधिकः जीवस्तु अविद्यायाः अधीने तिष्ठति इति कारणात् अविद्यापरतन्त्रः। इत्थम् मायाविद्ययोः भेदः अवगन्तव्यः। तथाह्युच्यते पञ्चदश्याम् -

**सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते।**

**मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः॥**

**अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा। इति।**

पुनश्च तदज्ञानं समष्टि-व्यष्टिभेदेन द्विधा। समष्ट्यज्ञानोपहितं चैतन्यम् ईश्वरः इति, व्यष्ट्यज्ञानोपहितं चैतन्यं प्राज्ञः जीवः इति व्यवह्रियते।

यद्यपि अज्ञानमाश्रित्य ईश्वरः सृजति तथापि केवलम् अज्ञानं न प्रपञ्चस्य कारणम्। अपि तु स्वयम् ईश्वर एव जगतः निमित्तकारणम् उपादानकारणं च। यथा चेतनः कुम्भकारः घटं प्रति निमित्तकारणं तथैव ईश्वरः चैतन्यप्रधानतया जगतः निमित्तकारणम्। यथा मृत्तिका घटं प्रति उपादानकारणं तथैव ईश्वरः स्वोपाधिमायाप्रधानतया जगतः उपादानकारणं च भवति। एकमेव वस्तु उपादानकारणं निमित्तकारणं चेत्यत्र दृष्टान्तो हि लूता। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतया च उपादानकारणं भवति तथैव ईश्वरोऽपि चैतन्यप्रधानतया जगतः निमित्तकारणम्, अचेतनमायाप्रधानतया च उपादानकारणमिति जगतः अभिन्नं निमित्तोपादनकारणम् अवगन्तव्यम्। तथाह्युच्यते सर्ववेदान्तसारसंग्रहे –

**यथा लूता निमित्तञ्च स्वप्रधानतया भवेत्।**

**स्वशरीरप्रधानत्वेनोपादानं तथेश्वरः॥**



**निमित्तमप्युपादानं स्वयमेव भवन् प्रभुः।**

**चराचरात्मकं विश्वं सृजत्यवति लुम्पति॥ इति।**

ननु ईश्वरस्य अभिन्ननिमित्तोपादानकारणत्वे अस्ति वा किञ्चित् श्रुतिप्रामाण्यमिति चेत् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिवाक्यमेव ब्रह्मणः अभिन्ननिमित्तोपादानकारणतां ज्ञापयति। सृष्टिकर्तृत्वेन ईश्वरः जगतः निमित्तकारणं, परन्तु ईश्वरः न केवलं सृजति सृज्यमानपदार्थेषु अपि सः अनुवर्तते इति अनुप्रवेशश्रुत्या तस्य उपादानकारणत्वम् आम्नायते। ननु अचेतनस्य जडस्य प्रपञ्चस्य उपादानकारणं चेतनः ईश्वरः इति न सङ्गच्छते, कार्यकारणयोरनन्यत्वात्। यदि च ईश्वरस्य उपादानकारणत्वम् अभ्युपगम्येत तर्हि कार्यकारणयोरभेदनियमात् प्रपञ्चस्यापि चैतन्यरूपत्वप्रसङ्गः नित्यता च स्यादिति चेदुच्यते - प्रथमतः कार्यकारणयोरनन्यत्वेऽपि चेतनात् अचेतनस्य अचेतनात् च चेतनस्य उत्पत्तिः लोके दृश्यते इति कारणात् नायम् एकानन्तो नियमो यत् चेतनम् अचेतनस्य उपादानकारणं भवितुं नार्हतीति। तथाहि लोके अचेतनात् गोमयात् चेतनानां वृश्चिकादीनां, चेतनात् च मनुष्यशरीराद् अचेतनानां नखकेशादीनाम् उत्पत्तिः दृश्यते। द्वितीयतः, कार्यकारणयोरभेदे सत्यपि सर्वे एव कारणगुणाः कार्ये भवेयुरिति नास्ति नियमः। सर्वे कारणगुणाः कार्ये भवेयुरिति स्वीक्रियमाणे च इदं कारणम् इदं च कार्यमिति कार्यकारणयोः व्यवहारभेदः एव न स्यात्। तृतीयतः, चेतनः ईश्वरः तावत् प्रपञ्चस्य विवर्तोपादनकारणं न तु परिणाम्युपादानकारणं, जगतः परिणाम्युपादानकारणं तु अज्ञानाभिधेया मायैव। ईश्वरस्य विवर्तोपादानत्वात् नास्ति जगतः चेतनत्वप्रसङ्गः नित्यता च। अतः चेतनस्य ईश्वरस्य उपादानकारणत्वे नास्ति कश्चिद् दोषः। चतुर्थतः, यथा अयस्कान्तसन्निधाने जडमपि लोहं चेष्टते, तथा चैतन्यसन्निधाने जडमज्ञानं चेष्टते इति अज्ञानविकारं प्रति चेतनस्य निमित्तत्वं, जडाकाशादिकार्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविनः ईश्वरस्यापि परम्परया गौणतया उपादानत्वं न विरुद्ध्यते।

## १५.८) अज्ञानस्य शक्तिद्वयम् –

अज्ञानस्य शक्तिद्वयम् अङ्गीक्रियते अद्वैतिभिः। आवरणशक्तिः विक्षेपशक्तिश्च। आवरणशक्त्या वस्तुस्वरूपम् आच्छाद्यते, विक्षेपशक्त्या च नूतनं वस्तु प्रतीयते। तथाहि - भ्रान्तिवशात् यत्र रज्जौ सर्पः प्रतीयते तत्र प्रथमतः आवरणशक्या रज्जुस्वरूपम् आच्छाद्यते। ततः विक्षेपशक्त्या रज्जौ सर्पः इति नूतनं वस्तु प्रतीयते। यत्र च भ्रान्त्या शुक्तौ रजतमिति प्रतीयते तत्र अज्ञानस्य आवरणशक्त्या शुक्तिस्वरूपम् आच्छादितं भवति, अज्ञानस्य विक्षेपशक्त्या च शुक्तौ रजतमिति नूतनं वस्तुं प्रतीयते। एवं प्रकृते आत्मनि आवरणशक्त्या स्वस्वरूपम् आच्छादितं भवति, विक्षेपशक्त्या च आत्मस्वभावविरुद्धं कर्तृत्व-भोक्तृत्वादिकम् आत्मनि प्रकाशते। अतः एव हस्तामलके उच्यते -

**घनच्छन्नदृष्टिः घनच्छन्नमर्कं**

**यथा निष्प्रभं मन्यते चातिमूढः।**

**तथा बद्धवत् भाति यः मूढदृष्टेः**



स नित्योपलब्धिस्वरूपोऽहमात्मा॥ इति।

**श्लोकस्य सरलार्थस्तावत्** – मेघेन यस्य मूढस्य दृष्टिः आवृता वर्तते, स मूढः यथा प्रकाशमानं सूर्यं मेघावृतं निष्प्रभं च मन्यते, तथैव यस्य ज्ञानम् अज्ञानेन आच्छादितं तस्य सकाशे नित्यः चैतन्यस्वरूपः आत्मा अज्ञानेन बद्धः प्रतीयते। तादृशः नित्यज्ञानस्वरूपः आत्मा एव अहम्। अज्ञानम् हि आवरणस्वभावं भवति। अज्ञानस्य तादृशम् आच्छादनसामर्थ्यम् एव आवरणशक्तिरिति निगद्यते। वस्तुतस्तु अधिष्ठानस्वरूपं ब्रह्म कदापि अज्ञानेन आवृतं न भवति। अतः एव "घटः सन्", "पटः सन्" चेत्यादिप्रतीतिषु सदनुविद्धं सत् एव घटपटादिकं भासते।

अधुना संशयो जायते यत् अपरिच्छिन्नं चैतन्यस्वरूपम् असीमम् आत्मानं कथं ससीमं परिच्छिन्नम् अज्ञानम् आवृणोतीति। तदा समाधानमुच्यते यत् वस्तुतस्तु अज्ञानं स्वप्रकाशं सर्वव्यापकं ब्रह्म न आवृणोति। यदा परिच्छिन्नस्य जीवस्य आवरकं भवति अज्ञानं तदा ब्रह्म आवृतमस्ति इति भ्रमवशादेव जीवः मन्यते। अनात्मपदार्थस्य धर्माः यदा अकर्तृत्वाभोक्तृत्वसुखदुःखादिहीने आत्मनि आरोपिताः भवन्ति तदा "अहं कर्ता", "अहं भोक्ता", "अहं सुखी", "अहं दुःखी" च इत्येवं मन्यते मूढः जीवः। आवरणशक्त्या एव अपरिच्छिन्नस्य परमात्मनः कर्तृत्वभोक्तृत्वादिकं सम्भाव्यते। यथा अज्ञानवशादेव असर्पभूतायां रज्जौ सर्पत्वं सम्भाव्यते। अतः एव सदानन्दयोगीन्द्रेण वेदान्तसारे उच्यते "अनया एव आवरणशक्त्या अवच्छिन्नस्य आत्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारसम्भावना अपि सम्भाव्यते, यथा स्वाज्ञानेन आवृतायां रज्ज्वां सर्पत्वसम्भावना" इति। शक्तिमत्कारणादेव कार्यम् उत्पद्यते। प्रपञ्चरूपकार्यस्य कारणे अज्ञाने कार्यजननानुकूलशक्तिरवश्यम् अस्ति। सृष्टिशक्तिरेव विक्षेपशक्तिः। अज्ञानं यया शक्त्या स्वावृतात्मनि आकाशादिप्रपञ्चम् उद्भावयति सा विक्षेपशक्तिः। वाक्यसुधायाम् उक्तम् – "विक्षेपशक्तिः लिङ्गादिब्रह्माण्डान्तं जगत् सृजेदिति" इति। गुणत्रयस्य मध्ये यदा रजोगुणेन सत्त्वगुणेन वा तमः अभिभूतं न भवति तदा आवरणशक्तेः प्राधान्यं भवति। यदा रजोगुणः गुणान्तरेण अभिभूतो न भवति तदा विक्षेपशक्तेः प्राधान्यं ज्ञेयम्। अद्वैतामोदे उच्यते "रजस्तमोभ्यामनभिभूतं तमः आवरणशक्तिः। ... तमःसत्त्वाभ्याम् अनभिभूतं रजः विक्षेपशक्तिः।" इति। इत्थं तमोगुणप्राधान्येन अज्ञानेन वस्तुस्वरूपस्य आवरणं जायते, रजोगुणप्राधान्येन अज्ञानेन आवृते वस्तुनि नूतनं मिथ्याभूतं वस्तु प्रतीयते इति अवधेयम्।

## १५.९) कार्यकारणयोरनन्यत्वम्

कार्यं कारणाद् किम् अत्यन्तं विलक्षणम् आहोस्वित् कार्यं कारणसजातीयम् इति प्रश्नः दर्शनसम्प्रदायेषु आबहोः कालाद् विचार्यते। तत्र कार्यं कारणाद् अत्यन्तमेव विलक्षणम् इति नैके मन्यन्ते। अनेके तु कार्यं कारणसजातीयम् इति पक्षं समर्थयन्ति। अद्वैतवेदान्तिनस्तु कार्यकारणयोः अनन्यत्वम् अभ्युपगच्छन्ति।



दृश्यते हि लोके भोक्ता भोग्यं च भिन्नम्। किञ्च, व्यवहारे प्रपञ्चस्य नानात्वेन प्रतीतिः सर्वलोकप्रत्यक्षीभूता। अस्य कार्यभूतस्य प्रपञ्चस्य कारणं हि ब्रह्म इति अद्वैतवेदान्तिनो मन्यन्ते। अतः कारणं ब्रह्म कार्यं च जगदिति, तयोः कार्यकारणयोः जगद्ब्रह्मणोः सजातीयत्वम् उत अत्यन्तविलक्षणत्वमिति संशयः। सजातीयत्वे जगद्ब्रह्मणोः कार्यकारणभावः युक्तः, विलक्षणत्वे तु कार्यकारणभावः न सङ्गच्छते। ब्रह्म हि नित्यं चेतनं शुद्धं, जगत् च अनित्यम् अचेतनम् अशुद्धं चेति ज्ञायते। अतः तयोः विलक्षत्वमेव अभ्युगन्तव्यम्। न च विलक्षणत्वे कार्यकारणभावो दृश्यते। न हि रुचकादयो विकारा मृत्कारणकाः भवन्ति, शरावादयो वा सुवर्णकारणकाः। यथा मृदा एव मृदन्विता विकाराः क्रियन्ते, सुवर्णेन च सुवर्णान्विताः, तथा इदमपि जगदचेतनं सुखदुःखमोहान्वितं सद् अचेतनस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति, न विलक्षणस्य ब्रह्मणः। ब्रह्मविलक्षणत्वं चास्य जगतः अशुद्ध्यचेतनत्वदर्शनाद् अवगन्तव्यम्। अशुद्धं हीदं जगत्, सुखदुःखमोहात्मकतया प्रीतिपरितापविषादादिहेतुत्वात् स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च। अतः विलक्षणत्वाद् ब्रह्मजगतोः कार्यकारणभावो न सङ्गच्छते इति चेत् न, विलक्षणत्वान्नेदं जगद् ब्रह्मप्रकृतिकम् इति यदुक्तं तन्न सङ्गच्छते। नायम् अव्यभिचरितो नियमो यत् कार्यकारणयोः विलक्षणत्वं न स्यादिति। दृश्यते हि लोके — चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः, अचेतनत्वेन च प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम्। ननु अचेतनानि एव पुरुषादिशरीराणि अचेतनानां केशनखादीनां कारणानि, अचेतनान्येव च वृश्चिकादिशरीराणि अचेतनानां गोमयादीनां कार्याणीति इति चेदुच्यते — एवमपि किञ्चिद् अचेतनं चेतनस्य आयतनभावम् उपगच्छति किञ्चिन्न इत्यस्त्येव वैलक्षण्यम्। महान् चायं पारिणामिकः स्वभावविप्रकर्षः पुरुषादीनां केशनखादीनां च स्वरूपादिभेदात्, तथा गोमयादीनां वृश्चिकादीनां च। अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत। अतः विलक्षणत्वेऽपि जगद्ब्रह्मणोः कार्यकारणभावो न शक्यते हातुम्। श्रुतयो हि प्रपञ्चस्य ब्रह्मकारणतां पुनः पुनः निगदन्ति– "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः" इत्यादिभिः।

ननु विलक्षणत्वेऽपि यदि जगद्ब्रह्मणोः कार्यकारणभावोऽभ्युपगम्यते तर्हि अलं कार्यकारणयोरनन्यत्वस्वीकारेण इति चेन्न, कार्यकारणयोः व्यवहारतः वैलक्षण्ये सत्यपि परमार्थतः अनन्यत्वमेव अवगन्तव्यम्। तथाहि बादराहयणकृतं शारीरकमीमांसासूत्रम् – "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति। सूत्रस्यास्य सामान्यार्थो हि कार्यस्य कारणानन्यत्वम् अवगन्तव्यम्, कुतः इति चेत् "वाचारम्भणं विकारो नामधेयम्" इति आरम्भणश्रुतिवशादिति। तथाहि उच्यते भाष्यकारेण शङ्करभगवत्पादेन सूत्रभाष्ये – "अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागम् 'स्याल्लोकवत्' इति परिहारोऽभिहितः; न त्वयं विभागः परमार्थतोऽस्ति, यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते। कार्यमाकाशादिकं बहुप्रपञ्चं जगत्; कारणं परं ब्रह्म; तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते। कुतः। आरम्भणशब्दादिभ्यः।" इति। कार्यकारणयोः अनन्यत्वमेव अवगन्तव्यमिति भाष्यकारस्याशयः। न अन्यः अनन्यः, तस्य भावः



अनन्यत्वम्, तत्समानमित्यर्थः। तेन कारणसमानं कार्यमित्यर्थो लभ्यते। किम् अयमेवार्थः भाष्यकारस्याभिप्रेतः इति चेन्न। भाष्यकारेण तु अनन्यत्वमिति पदस्यार्थः निगदितः व्यतिरेकेण अभावः इति। अस्यार्थो हि कारणव्यतिरेकेण कार्यस्याभावः इति। तथाहि घटस्य कारणं मृत्तिका। मृद्व्यतिरेकेण कार्यस्य घटस्य सत्ता एव न सम्भवति इति कारणात् मृद्घटयोः अनन्यत्वम्। तथा च रज्जौ यदा सर्पः प्रतीयते तदा रज्जुस्वरूपव्यतिरेकेण सर्पो नाम नास्ति किञ्चिदपि। रज्जुसत्ता एव वस्तुतः सर्पस्य सत्ता। अद्वैतिभिः अधिष्ठानसत्ताव्यतिरेकेण आरोपितसत्ता नाङ्गीक्रियते। तस्माद् अधिष्ठानभूतस्य कारणस्य सत्ता एव वस्तुतः मिथ्यारूपेण प्रतीयमानस्य विकारभूतस्य कार्यस्य सत्ता। रज्जुः नास्ति चेत् कदाचिदपि सर्पो न प्रतीयेत। एवं रज्जुव्यतिरेकेण प्रतीयमानस्य सर्पस्य यः अभावः तदेव कार्यकारणयोः अनन्यत्वमिति ज्ञेयम्। कार्यकारणयोरनन्यत्वे छान्दोग्यश्रुतिरेव प्रमाणभूता। तथाहि आम्नायते छान्दोग्योपनिषदि षष्ठाध्याये – "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा. उ. ६.१.४) इति। अस्यार्थः – यथा एकेन मृत्पिण्डेन परमार्थतो मृत्स्वरूपेण विज्ञातेन सर्वं मृन्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद् विज्ञातं भवेत्; तथैव एकेन ब्रह्मणा विज्ञातेन तद्विवर्तभूतं नामरूपात्मकं जगदपि विज्ञातं भवेद् इति अवधेयम्। यतो वाचारम्भणं विकारो नामधेयम् — वाचैव केवलम् अस्तीति आरभ्यते — विकारः घटः शराव उदञ्चनं चेति; न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति; नामधेयमात्रं ह्येतदनृतम्; मृत्तिकेत्येव सत्यम् — एवं कार्यभूतः प्रपञ्चोऽपि नामधेयमात्रम् अनृतम्, कारणं ब्रह्मैव सत्यमिति तात्पर्यम्। एवं ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति दृष्टान्तस्यास्य निष्कर्षः। वस्तुतः तेनैव एकविज्ञानेन सर्वविज्ञानम् इति प्रतिज्ञा उपपद्येत। यदि कार्यकारणयोः अनन्यत्वम् नाभ्युपगम्येत तर्हि एकविज्ञातेन सर्वविज्ञानमिति प्रतिज्ञा नैव उपपद्येत। तस्मात् स्वीकार्यं कार्यकारणयोः अनन्यत्वम्।



## पाठगतप्रश्नाः-३

१९. सत्त्वगुणस्य तारतम्यानुसारेण अविद्या माया चेति अज्ञानस्य द्विरूपता केन कल्पिता।

क) विद्यारण्यस्वामिना ख) सदानन्दयोगीन्द्रेण

ग) गौडपादाचार्येण घ) शङ्कराचार्येण

२०. अद्वैतवेदान्तमते ईश्वरः जगतः -

क) उपादानकारणमात्रम् ख) निमित्तकारणमात्रम्

ग) अभिन्ननिमित्तोपादानकारणम् घ) किमपि न।

२१. जगतः परिणाम्युपादानकारणं किम्।

२२. जगतः विवर्तोपादानकारणं किम्।

२३. अज्ञानस्य शक्तिद्वयं किम्।



२४. कार्यकारणयोरनन्यत्वं नाम किम्।

२५. कार्यकारणयोरनन्यत्वे श्रुतिप्रमाणं किम्।



## पाठसारः

दर्शनानाम् आलोचितविषयेषु अन्यतमत्वात् अद्वैतवेदान्तदर्शने सृष्टितत्त्वं विचार्यते। अद्वैतमते परमार्थतः सृष्टिरेव नास्ति, व्यवहारतः एव सृष्टिः। अद्वैतदृष्ट्या सृष्टिश्रुतीनां तात्पर्यं तु ब्रह्मतत्त्वावबोधने। तस्मादेव अध्यारोपापवादन्यायम् आश्रित्य सृष्टितत्त्वं वर्णयति श्रुतिरिति तेषामभिप्रायः। जगत्सृष्टिर्हि ईश्वरस्य लीलारूपा, न तु अत्र प्रयोजनं किञ्चिदन्वेष्टव्यम्। ईश्वरो हि प्राणिनां सृज्यमानकर्माणि अपेक्ष्य जगत्सृष्टिं करोतीत्यतः वैषम्यनैर्घृण्यदोषः तस्मिन् न आपपति। सृष्टेः मूलं कारणं तावद् अज्ञानाभिधेया माया। मायोपाधिकः ईश्वरः प्रपञ्चस्य अभिन्ननिमित्तोपादनकारणम्। माया तु परिणाम्युपादानकारणम्, ईश्वरस्तु विवर्तोपादानकारणमिति ज्ञेयम्। तस्याज्ञानस्य आवरणविक्षेपरूपं शक्तिद्वयं विद्यते। आवरणशक्त्या ब्रह्मस्वरूपम् आच्छाद्यते विक्षेपशक्त्या च प्रपञ्चः सृज्यते। आपाततः जगत् ब्रह्मभिन्नत्वेन प्रतीयते चेदपि ब्रह्मविवर्तत्वेन ब्रह्माभिन्नमेव जगदिति अङ्गीकर्तव्यं, कार्यकारणयोः अनन्यत्वनियमात्। कार्यकारणयोरनन्यत्वं नाम कारणव्यतिरेकेण कार्यस्याभावः। एवं ब्रह्मव्यतिरेकेण नास्ति जगतः सत्तेति अवधेयम्।



## पाठान्तप्रश्नाः

१. अद्वैतवेदान्तिनः परमार्थतः सृष्टिं किमर्थं नाङ्गीकुर्वन्ति इति विचारयत।

२. अद्वैतमते सृष्टिश्रुतीनाम् आशयं वर्णयत।

३. अध्यारोपापवादन्यायस्य तात्पर्यं लिखत।

४. विवर्तवादविषये परिणामवादविषये च लघुटिप्पणीं लिखत।

५. अद्वैतमते सृष्टेः प्रयोजनम् अस्ति न वेति विचारयत।

६. ईश्वरस्य अभिन्ननिमित्तोपादनकारणत्वम् प्रतिपादयत।

७. वैषम्यनैर्घृण्यदोषः ईश्वरे किमर्थं न आपततीति विचारयत।

८. अज्ञानस्य शक्तिद्वयम् आलोचयत।

९. कार्यकारणयोरनन्यत्वम् अद्वैतवेदान्तदृष्ट्या प्रतिपादयत।





## पाठगतप्रश्नानाम् उत्तराणि

**पाठगतप्रश्नाः-१**

१. न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ इति।

२. मन्दानां कृते।

३. सविशेषं निर्विशेषं चेति द्विविधं रूपम्।

४. निर्विशेषं ब्रह्म हि नामरूपोपाधिविवर्जितं शुद्धं स्वरूपम् सत्यज्ञानानन्तादिपदलक्ष्यम्।

५. नामरूपोपाधिविशेषसम्बन्धित्वात् ब्रह्मणः सविशेषत्वम्।

६. सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था।

७. ग) अध्यारोपापवादन्यायः।

८. अध्यारोपो नाम वस्तुनि अवस्त्वारोपः।

९. अपवादो नाम "रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्तस्य अवस्तुनः अज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्" इति।

१०. रज्जौ सर्पारोपः।

**पाठगतप्रश्नाः-२**

११. परिणामभावो नाम वस्तुनो यथार्थतः स्वस्वरूपं परित्यज्य स्वरूपान्तरापत्तिः, यथा दुग्धमेव स्वस्वरूपं परित्यज्य दध्याकारेण परिणमते।

१२. स्वस्वरूपापरित्यागेन स्वरूपान्तरेण मिथ्याप्रतीतिः विवर्तः इति। यथा - शुक्तिका स्वस्वरूपापरित्यागेन रजतरूपेण मिथ्या प्रतीयते।

१३. अप्पय्यदीक्षितमते समसत्ताकोऽन्यथाभावः परिणामः, विषयसत्ताकोऽन्यथाभावः विवर्तः चेति।

१४. पारमार्थिकी सत्ता, व्यावहारिकी सत्ता, प्रातिभासिकी च सत्ता।

१५. पारमार्थिकसत्ताबाध्यत्वम्।

१६. ख) लीलारूपा।

१७. धर्माधर्माख्यानि कर्माणि।

१८. सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिः।

**पाठगतप्रश्नाः-३**

१९. क) विद्यारण्यस्वामिना।

२०. ग) अभिन्ननिमित्तोपादनकारणम्।

२१. अज्ञानाभिधेया माया।

२२. ईश्वरः।



२३. आवरणशक्तिः, विक्षेपशक्तिश्चेति।

२४. कारणव्यतिरेकेण कार्यस्याभावः इति।

२५. "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति।

॥ इति पञ्चदशः पाठः ॥



# १६

# सृष्टिप्रलयविचारः

## प्रस्तावना

सृष्टिविचारप्रसङ्गे अद्वैतवेदान्तवादिनां प्रधानं तत्त्वं तावद् अज्ञानतत्त्वम्। तस्या एव नामान्तराणि अविद्या माया अव्यक्तम् अव्याकृतं चेत्यादीनि। ननु किं नाम अज्ञानम् इति चेदुच्यते वेदान्तसारकृता - अज्ञानं हि सदसद्भ्याम् अनिर्वचनीयं, त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिद् इति। ईश्वरो हि अनिर्वचनीयामिमां त्रिगुणात्मिकां मायां स्वशक्तित्वेन आश्रित्य लीलया जगद्बिम्बरचनायै प्रवर्तते। ईश्वरस्य ईक्षणमात्रेण यद्यपि जगत् सृज्यते इत्यस्ति श्रुतिप्रसिद्धिः तथापि अस्ति वा सृष्टेः कश्चित् क्रमः अद्वैतवेदान्तसम्मतः इति जिज्ञासूनां दार्शनिकानां ज्ञानाय सृष्टिक्रमः प्रतिपाद्यते वेदान्तिभिः। सृष्टितत्त्विषये सांख्यानां प्रकृतिमहत्तत्त्वादिक्रमः सुप्रसिद्धः, न्यायवैशेषिकाणां च द्व्यणुकादिक्रमः। अद्वैतवेदान्तिनां कः सृष्टिक्रमः, के च सृष्टाः पदार्थाः इति विषयः ज्ञातव्यः।



## उद्देश्यानि

इमं पाठं पठित्वा भवद्भिः -

- अद्वैतवेदान्तदर्शनस्य सृष्टितत्त्वविषये विस्तरेण परिचयः लभ्यते।
- अद्वैतवेदान्तसम्मतस्य सृष्टिक्रमस्य विषये ज्ञायते।
- सृष्टिक्रमविषये श्रुत्यविरोधः ज्ञायते।
- आकाशस्य सृष्टिः भवति न वेति ज्ञायते।
- पञ्चीकरणप्रक्रियायाः विस्तरेण परिचयः लभ्यते।
- प्रलयविषये विस्तरेण परिचयः लभ्यते।



## १६.१) सृष्टिक्रमः

ब्रह्मणः एव जगत्सृष्टिः जायते इति अद्वैतवेदान्तसिद्धान्तः। परन्तु यथा अन्यदर्शनेषु सृष्टेः क्रमः अभ्युपगम्यते तथा अद्वैतवेदान्ते अस्ति वा कश्चित् क्रमः इति विचारणीयम्। वस्तुतः परमेश्वरस्य ईक्षणमात्रेण सृष्टिः जातेति तत्र क्रमो नानुसन्धेयः। परन्तु बह्वीषु श्रुतिषु सृष्टेः कश्चित् क्रमः आश्रीयते, सा च क्रमसृष्टिः साधारणजनानां बोधाय उपयोगिनी भवति इति कारणात् अद्वैतवेदान्ते सृष्टेः क्रमः विचार्यते। तैत्तिरीयोपनिषदि आत्मस्वरूपं विचार्य "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मणः स्वरूपलक्षणं निगद्य तदेव ब्रह्म सृष्टिकारणत्वेन प्रतिपादयितुं सृष्टेः क्रमः आम्नायते -

**"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः।**

**आकाशाद्वायुः। वायोरग्निः। अग्नेरापः।**

**अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्।" इति।**

### १६.१.१) सूक्ष्मभूतानि

इत्थम् अज्ञानोपहितचैतन्यात् अर्थात् ईश्वरात् प्रथमम् आकाशः उत्पद्यते। आकाशाद् वायुः, वायोः अग्निः उत्पद्यते, अग्नेः आपः उत्पद्यन्ते, अद्भ्यः च पृथिवी उत्पद्यते इति पञ्चभूतानां सृष्टिक्रमः। एतानि पञ्चभूतानि प्रथमतः सूक्ष्मरूपेण उत्पद्यन्ते, तदा च तानि परस्परेभ्यः पृथग्भूतानि भवन्ति। तदा तानि अपञ्चीकृतभूतानि तन्मात्राणि वेत्युच्यन्ते। तदा ते व्यवहारयोग्यानि न भवन्ति। ततः पञ्चीकरणप्रक्रियया पञ्चभूतानि परस्परं मिश्रितानि सन्ति व्यवहारयोग्यताम् आपद्यन्ते। ननु का नाम पञ्चीकरणप्रक्रिया इति चेत् पञ्चभूतानां परस्परमेलनेन भूतानां स्थूलरूपतापादानमेव पञ्चीकरणम्, तदग्रे विस्तरेण प्रतिपादयिष्यते।

अपञ्चीकृतेभ्यः पञ्चसूक्ष्मभूतेभ्यः स्थूलभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च वायवः, बुद्धिः मनश्चेति उत्पद्यन्ते। श्रोत्रं, चक्षुः, त्वक्, जिह्वा, घ्राणं च इति पञ्च ज्ञानेन्द्रियाणि। वाक्, पाणिः, पादः, पायुः, उपस्थः चेति पञ्च कर्मेन्द्रियाणि। प्राणः, अपानः, व्यानः, उदानः, समानः चेति पञ्च वायवः।

### १६.१.२) ज्ञानेन्द्रियाणि

ज्ञानेन्द्रियाणि आकाशादीनां पृथक् पृथक् सात्त्विकांशेभ्यः क्रमेण उत्पद्यन्ते। तथाहि सात्त्विकांशादाकाशात् श्रोत्रमुत्पद्यते, सात्त्विकांशाद् वायोः त्वगिन्द्रियम्, सात्त्विकांशात्तेजसः चक्षुः, सात्त्विकांशाज्जलात् जिह्वा, सात्त्विकांशायाः पृथिव्याश्च घ्राणेन्द्रियं क्रमेण उत्पद्यन्ते।

### १६.१.३) कर्मेन्द्रियाणि

कर्मेन्द्रियाणि आकाशादीनां पृथक् पृथक् रजोंऽशेभ्यः क्रमेण उत्पद्यन्ते। तथाहि रजोगुणप्रधानाद् आकाशाद् वागुत्पद्यते, रजोगुणप्रधानाद् वायोः पाणीन्द्रियम्, रजोगुणप्रधानाद् अग्नेः पादेन्द्रियं, रजोगुणप्रधानात् जलात् पाय्विन्द्रियं, रजोगुणप्रधानायाः पृथिव्याः उपस्थेन्द्रियं च उत्पद्यते।



## १६.१.४) मिलितानां सूक्ष्मभूतानां कार्याणि

**पञ्च वायवः**

पञ्च वायवः आकाशादीनां रजोंऽशेभ्यः मिलितेभ्यः उत्पद्यन्ते। क्रियाभेदेन एव तेषां भेदः, वायुत्वेन तु ते समानाः। ते हि प्राणः, अपानः, व्यानः, उदानः, समानः चेति। एतेषु ऊद्ध्वगमनशीलो नासाग्रस्थयी वायुः प्राणः इत्यर्थः। अधोगमनशीलः पाय्वाादिस्थायी वायुरपानः। सर्वनाडीगमनशीलः अखिलशरीरस्थायी वायुः व्यानः। ऊर्ध्वम् उत्क्रमणशीलः कण्ठस्थायी वायुः उदानः। शरीरमध्यगतानाम् अन्नरसादीनां नेता वायुः समानः। तथाहि उच्यते सदानन्दयोगीन्द्रेण वेदान्तसारे -

"प्राणो नाम प्राग्गमनवान् नासाग्रवर्ती। अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्ती। व्यानो नाम विष्वग्गमनवान् अखिलशरीरवर्ती। उदानो नाम कण्ठस्थानीयः ऊद्ध्वगमनवान् उत्क्रमणवायुः। समानो नाम शरीरमध्यगताशीतपीतादिसमीकरणकरः। समीकरणं तु परिपाककरणं रसरुधिरशुक्रपुरीषादिकरणम्" इति।

केचित् नाग-कूर्म-कृकल-देवदत्त-धनञ्जयाख्याः पञ्च अन्ये वायवः सन्ति इति वदन्ति। तत्र नागः उद्गिरणकरः, कूर्मः उन्मीलनकरः, कृकलः क्षुत्करः, देवदत्तः जृम्भणकरः, धनञ्जयः पोषणकरः। तथाह्युच्यते गोरक्षाशकते -

**उद्गारे नाग आख्यातः कूर्मस्तून्मीलने स्मृतः।**
**कृकलस्तु क्षुधि ज्ञेयो देवदत्तो विजृम्भणे।**
**न जहाति मृतश्चापि सर्वव्यापी धनञ्जयः॥ इति।**

एतेषां प्राणादिषु अन्तर्भावात् प्राणादयः पञ्च एव इति केचित्।

**अन्तःकरणम्**

आकाशादीनां सात्त्विकांशेभ्यः मिलितेभ्यः अन्तःकरणम् उत्पद्यते। अन्तःकरणस्यैव वृत्तिभेदेन बुद्धिः मनः चित्तम् अहङ्कारः इति चतुर्धा विभागः। तथाहि उच्यते -

**आकाशादिगताः पञ्च सात्त्विकांशाः परस्परम्।**
**मिलित्वैवान्तःकरणमभवत् सर्वकारणम्॥**
**तदन्तःकरणं वृत्तिभेदेन स्याच्चतुर्विधम्।**
**मनो बुद्धिरहङ्कारश्चित्तं चेति तदुच्यते॥ इति।**

एतेषु मनो नाम संकल्पविकल्पात्मिका अन्तःकरणवृत्तिः। बुद्धिर्नाम निश्चयात्मिका अन्तःकरणवृत्तिः। अभिमानात्मिका अन्तःकरणवृत्तिः अहङ्कारः, स्मरणात्मिका अन्तःकरणवृत्तिः चित्तम् इति। एतासु वृत्तिषु बुद्धिमनसोरेव प्रसिद्धिः विद्यते। तस्माद् अनेके अहङ्कारं चित्तं च पृथक्त्वेन नाभ्युपगम्य बुद्धिमनसोरेव अन्तर्भावयन्ति। तस्माद् अन्तःकरणस्य द्विरूपतैव विद्यारण्यस्वामिना पञ्चदश्यां निगदिता -



**तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा।**

**मनो विमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका॥ इति।**

अस्मिन् श्लोके मनसः विमर्शरूपता निगदिता। विमर्शो नाम विशेषरूपेण आलोचनं विचारो वा। स च विचारः इदम् इत्थं न वेति संकल्पविकल्पाभ्यां न पृथक्। तस्मात् विमर्शो नाम सङ्कल्पविकल्पात्मक एवेति ज्ञेयम्।

## १६.१.५) सूक्ष्मशरीरम्

पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च वायवः, बुद्धिः मनश्चेति सप्तदशावयवाः मिलित्वा सूक्ष्मशरीरम् सृजन्ति। अतः सप्तदशावयवयुक्तानि सूक्ष्मशरीराणि इति कथ्यते। सूक्ष्मशरीरस्य अपरं नाम लिङ्गशरीरम्। लिङ्ग्यते ज्ञाप्यते प्रत्यगात्मसद्भावः एभिः इति लिङ्गानि। लिङ्गानि च शरीराणि चेति लिङ्गशरीराणि। अस्यार्थः सूक्ष्मशरीरेण जीवात्मा लिङ्ग्यते ज्ञाप्यते इति कारणात् सूक्ष्मशरीरम् लिङ्गशरीरमिति अभिधीयते। सूक्ष्मशरीरविषये विद्यारण्यस्वामिना पञ्चदश्यां निगद्यते -

**बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया।**

**शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते॥ इति।**

संक्षेपेण सृष्टिक्रमः अधः प्रदर्श्यते -

निर्गुणं ब्रह्म

----------------------------------------------------(माया/अज्ञानम्)

ईश्वरः (सोपाधिकं ब्रह्म)



आकाशः ► वायुः ► अग्निः ► आपः ► पृथिवी (सूक्ष्मभूतानि)

---------------------------------------------------------------------------(पञ्चीकरणम्)

     

पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च स्थूलभूतानि, पञ्च वायवः, मनः, बुद्धिः



## पाठगतप्रश्नाः-१

१. पञ्चभूतानां सृष्टिप्रतिपादिका तैत्तिरीयश्रुतिः का।

२. अज्ञानोपहितात् चैतन्यात् प्रथमं किम् भूतम् उत्पद्यते।

क) वायुः ख) आकाशः ग) जलम् घ) तेजः

३. पञ्च ज्ञानेन्द्रियाणि कानि।

४. पञ्च कर्मेन्द्रियाणि कानि।



५. पञ्च वायवः के।

६. ज्ञानेन्द्रियाणि उत्पद्यन्ते -

क) सूक्ष्मभूतानां सात्त्विकांशेभ्यः ख) सूक्ष्मभूतानां रजोंऽशेभ्यः ग) सूक्ष्मभूतानां तमोंऽशेभ्यः

७. कर्मेन्द्रियाणि उत्पद्यन्ते -

क) सूक्ष्मभूतानां सात्त्विकांशेभ्यः ख) सूक्ष्मभूतानां रजोंऽशेभ्यः ग) सूक्ष्मभूतानां तमोंऽशेभ्यः

८. उदानो नाम कः।

९. अन्तःकरणम् उत्पद्यते -

क) सूक्ष्मभूतानां मिलितेभ्यः सात्त्विकांशेभ्यः ख) सूक्ष्मभूतानां मिलितेभ्यो रजोंऽशेभ्यः
ग) सूक्ष्मभूतानां मिलितेभ्यः तमोंऽशेभ्यः घ) सूक्ष्मभूतानां पृथक् पृथक् सात्त्विकांशेभ्यः

१०. अद्वैतमते सूक्ष्मशरीरे कति अवयवाः विद्यन्ते।

क) एकादश ख) त्रयोदश ग) सप्तदश घ) षोडशः

११. सङ्कल्पविकल्पात्मिका अन्तःकरणवृत्तिः -

क) मनः ख) बुद्धिः ग) चित्तम् घ) अहङ्कारः

१२. निश्चयात्मिका अन्तःकरणवृत्तिः -

क) मनः ख) बुद्धिः ग) चित्तम् घ) अहङ्कारः

१३. प्राणो नाम कः।

१४. जृम्भणकरः वायुः कः।

---

## १६.२) भूतसृष्टिक्रमे विरोधपरिहारः, आकाशस्य उत्पत्तिविचारश्च

पञ्चभूतानि अज्ञानोपहितात् चैतन्यादुत्पद्यते इति पूर्वमुक्तम्। परन्तु इदानीं पञ्चभूतानां मध्ये कस्योत्पत्तिरादौ इति विषये विचारणा प्रवर्तते। तत्रादौ आकाशः उत्पद्यते न वेति प्रश्नः पूर्वपक्षिणः। छान्दोग्योपनिषदि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६.२.१) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत' 'तत्तेजोऽसृजत' (छा. उ. ६.२.३) इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते। श्रुतिर्हि अतीन्द्रियार्थप्रतिपत्तौ अस्माकं प्रमाणम्। छान्दोग्यश्रुत्या आकाशस्योत्पत्तिः न प्रतिपाद्यते इत्यतः नास्त्येव आकाशस्योत्पत्तिरिति चेन्न, अस्ति हि उत्पत्तिश्रुतिराकाशस्य। तथाहि तैत्तिरीयोपनिषदि "सत्यं ज्ञानमनन्तं ब्रह्म" (२.१.१) इति प्रकृत्य, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (२.१.१) इति आत्मनः आकाशोत्पत्तिः वर्णिता।

ननु तर्हि प्राप्नोति श्रुत्योर्विप्रतिषेधः — क्वचित्तेजःप्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति। एकवाक्यता तु अनयोः श्रुत्योर्युक्ता। अपि च, "तत्तेजोऽसृजत" इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धः न उपपद्यते - "तत्तेजोऽसृजत" "तदाकाशमसृजत" इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन सम्बन्धो दृश्यते — यथा सूपं पक्त्वा ओदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजत



इति योजयिष्यामि; नैवं युज्यते; प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते; तैत्तिरीयके च आकाशस्य; न च उभयोः प्रथमजत्वं सम्भवति। किञ्च, छान्दोग्ये सदाख्यात् आत्मनः तेजसः सृष्टिः समाम्नाता, तैत्तिरीयके तु "वायोरग्निः" इति वायुरेव तेजसः उपादानत्वेन वर्णित इत्यपि श्रुतिविरोधः।

ननु छान्दोग्यश्रुतेरेव ज्ञायते यत् नास्ति वियत उत्पत्तिः। अतः या वियदुत्पत्तिवादिनी श्रुतिः विद्यते सा सर्वापि गौणत्वेन अवगम्या। कस्मादिति चेत् असम्भवादेव। न ह्याकाशस्योत्पत्तिः सम्भावयितुं शक्या। नैयायिकानां मते हि कारणसामग्र्यः एव कार्यं जनयितुं शक्याः। कारणसामग्र्यभावात् आकाशस्योत्पत्तिः नैव शक्यते सम्भावयितुम्। समवाय्यसमवायिनिमित्तकारणेभ्यो हि सर्वमुत्पद्यमानं समुत्पद्यते; द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति; न चाकाशस्य एकजातीयकम् अनेकं च द्रव्यमारम्भकमस्ति; यस्मिन्समवायिकारणे सति, असमवायिकारणे च तत्संयोगे, आकाश उत्पद्येत। समवाय्यसमवायिकारणाभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेव आकाशस्य भवति। अपि च, उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः सम्भाव्यते — प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव, पश्चाच्च भवतीति। आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यते। किं हि प्रागुत्पत्तेः अनवकाशम् अच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्। पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणात् आकाशस्य अजत्वसिद्धिः। तस्माद्यथा लोके 'आकाशं कुरु', 'आकाशो जातः' इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च - घटाकाशः, करकाकाशः, गृहाकाशः इत्येकस्याप्याकाशस्य एवंजातीयको भेदव्यपदेशो गौणो भवति तद्वत् श्रुतौ आकाशस्योत्पत्तिः गौणतया द्रष्टव्या। श्रुतिरपि आकाशस्य नित्यत्वं श्रावयति। तथाहि - "वायुश्चान्तरिक्षं चैतदमृतम्" (बृ. उ. २.३.३) इति, "आकाशवत्सर्वगतश्च नित्यः" (शतपथब्राह्मणम् १०.६.३.२) इति च। न हि अमृतस्य नित्यस्य च उत्पत्तिः अभ्युपगन्तुं शक्यते। अतः नास्ति आकाशस्योत्पत्तिरिति चेदुच्यते सिद्धान्तिना - अस्ति हि आकाशस्य उत्पत्तिः।

आकाशस्य उत्पत्त्यनभ्युपगमे प्रतिज्ञाहानिः स्यात्। आत्मविज्ञानेन सर्वविज्ञानं भवतीति प्रतिवेदान्तं प्रतिज्ञा क्रियते। तथाहि श्रुतयः - "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छा. उ. ६.१.३) इति, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" (बृ. उ. ४.५.६) इति, "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" (मु. उ. १.१.३) इति। ब्रह्मणः यदि आकाशस्योत्पत्तिः न स्यात्तर्हि ब्रह्मविज्ञानेन आकाशविज्ञानं न स्यादिति एकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत। छान्दोग्योपनिषदि "येनाश्रुतं श्रुतं भवति" इति प्रतिज्ञाय, मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते; तत्साधनायैव चोत्तरे शब्दाः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. उ. ६. २.१) "तदैक्षत" "तत्तेजोऽसृजत" (छा. उ. ६.२.३) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्य, अव्यतिरेकं प्रदर्शयन्ति "ऐतदात्म्यमिदं सर्वम्" (छा. उ. ६.८.७) इत्यारभ्य आ प्रपाठकपरिसमाप्तेः; तद्यद्याकाशं न ब्रह्मकार्यं स्यात्, न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत। ततश्च प्रतिज्ञाहानिः स्यात्; न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। तथा हि प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति "इदं सर्वं यदयमात्मा" (छा. उ. २.४.६) "ब्रह्मैवेदममृतं पुरस्तात्" (मु. उ. २.२.१२) इत्येवमादयः; तस्माद् अग्न्यादिवदेव गगनमप्युत्पद्यते।





यदुक्तं पुनः - छान्दोग्ये आकाशस्य उत्पत्त्यश्रवणात् न आकाशस्य उत्पत्तिः विद्यते इति तदयुक्तम् तैत्तिरीयोपनिषदि आकाशोत्पत्तेः दर्शितत्वात् - "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै. उ. २.१.१) इति। ननु सत्यं दर्शितम्, परन्तु विरुद्धं तत् "तत्तेजोऽसृजत" इत्यनेन श्रुत्यन्तरेण; इति चेन्न एकवाक्यत्वात् सर्वश्रुतीनाम्। ननु भवतु तावत् एकवाक्यत्वम् अविरुद्धानाम्; इह तु विरोध उक्तः। सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धः न सम्भवति, द्वयोश्च प्रथमजत्वं न सम्भवति, आकाशं सृष्ट्वा तेजः ससर्ज इति विकल्पोऽपि न सम्भवति इति सन्ति विरोधाः। अतः एकवाक्यत्वं नैव सम्भवतीति चेन्न, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः" इति तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् सम्भवत्येव एकवाक्यत्वं श्रुतयोः। अशक्या हीयं तैत्तिरीयश्रुतिः अन्यथा परिणेतुम्; शक्या तु परिणेतुं छान्दोग्यश्रुतिः - तदाकाशं वायुं च सृष्ट्वा "तत्तेजोऽसृजत" इति। न हीयं छान्दोग्यश्रुतिः तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धाम् आकाशस्योत्पत्तिं वारयितुं शक्नोति, एकस्य वाक्यस्य व्यापारद्वयासम्भवात्; स्रष्टा त्वेकोऽपि क्रमेण अनेकं स्रष्टव्यं सृजेदिति एकवाक्यत्वकल्पनायां सम्भवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या। किञ्च, सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसम्बन्धो न सम्भवतीति यदुक्तं तन्न सङ्गतम्, श्रुतौ ब्रह्मण एव सर्वं सृज्यते इति एकस्मात् स्रष्टुः सर्वसृष्ट्युपदेशात्। एवम् आकाशस्य तेजसश्च ब्रह्मजत्वात् श्रुतिः न श्रुत्यन्तरविहितं तेजःप्रमुखम् उत्पत्तिक्रमं वारयति, न च श्रुत्यन्तरविहितं नभःप्रमुखम् उत्पत्तिक्रमं वारयितुमर्हति। अपि च "तत्तेजोऽसृजत" इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति; अर्थात्तु क्रमो गम्यते; स च "वायोरग्निः" (तै. उ. २.१.१) इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते। किञ्च, आकाशस्य प्रथमजत्वाभ्युपगमे आकाशं सृष्ट्वा तेजः सृजति इति विकल्पोऽपि सुतरां सङ्गच्छते इति नास्ति श्रुत्योर्विप्रतिषेधः।

यत्तूक्तं समानजातीयमनेकं कारणद्रव्यम् आकाशस्य नास्तीति, तत्प्रत्युच्यते - न तावत्समानजातीयम् एवारभते, न भिन्नजातीयमिति नियमोऽस्ति। न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति, तन्तोः द्रव्यत्वात्, संयोगस्य च गुणत्वात्; न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति। ननु समवायिकारणविषय एव समानजातीयत्वाभ्युपगमः, न कारणान्तरविषय इति चेत् तदपि अयुक्तम्; सूत्रगोवालैः हि अनेकजातीयैः एका रज्जुः सृज्यमाना दृश्यते; तथा सूत्रैः ऊर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते। ननु द्रव्यत्वं सत्त्वं च उभयत्रापि समानमिति सजातीयत्वमिति चेत् तथा सति सजातीयत्वाभ्युपगमः व्यर्थः, सर्वस्य सर्वेण समानजातीयत्वात्।

नापि अनेकमेवारभ्यते, नैकम् इति नियमोऽस्ति, अणुमनसोः आद्यकर्मारम्भाभ्युपगमात्। एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते, न द्रव्यान्तरैः संहत्य इत्यभ्युपगम्यते नैयायिकैः। ननु द्रव्यारम्भे एव अनेकारम्भकत्वनियम इति चेन्न, परिणामाभ्युपगमात्। भवेदेष नियमः — यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्य आरम्भकम् अभ्युपगम्येत; तदेव तु द्रव्यं विशेषवदवस्थान्तरम् आपद्यमानं कार्यं नाम अभ्युपगम्यते; तच्च क्वचिदनेकं परिणमते मृद्बीजादि अङ्कुरादिभावेन; क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन। तस्मात् नेश्वरशासनमस्ति यद् अनेकमेव कारणं कार्यं जनयतीति।

यदपि उक्तं श्रुतौ आकाशस्य नित्यत्वाभ्युपगमात्, अमृतत्वकथनाच्च नास्ति उत्पत्तिः इति तदपि अयुक्तम्। आसृष्टिप्रलयान्तं हि आकाशस्य नित्यत्वम्। प्रलये तु आकाशस्यापि नाशो भवति।



तस्मात् परमार्थतः अनित्यत्वमेव आकाशस्य। यद् यद् उत्पद्यते तत् सर्वम् अनित्यमिति नियमात् आकाशस्यापि उत्पत्तिश्रवणात् अनित्यमिति ज्ञेयम्। न हि आकाशस्य सृष्टिश्रुतिः गौणी इति शक्यते अभ्युपगन्तुम्, तदभ्युपगमे कारणाभावात्, प्रतिज्ञाहानेश्चेति उपपादितं पूर्वम्। अतः अस्ति आकाशस्य उत्पत्तिः इति उपपन्नम्। एवम् ब्रह्मणः आकाशस्य, आकाशात् वायोः, वायोः तेजसः, तेजसः अपां, अद्भ्यः पृथिव्याः च सृष्टिः भवतीति क्रमः अनुसन्धेयः। ननु आत्मनः तेजसः उत्पत्तिः छोन्दोग्ये आम्नायते, इह तु वायोः तेजसः उत्पत्तिः इति असङ्गतमिति चेन्न, सृष्टिक्रमे सर्वत्रापि आत्मभावापन्नादिति अनुवृत्तिः कर्तव्या, अन्यथा अचेतनात् अचेतनस्य उत्पत्तिः अपरिहर्तव्या स्यात्। तेन आत्मभावापन्नाद् वायोः तेजसः उत्पत्तिः जातेति नास्ति असामञ्जस्यं किञ्चित्।



## पाठगतप्रश्नाः-२

१५. कस्याम् उपनिषदि तेजःप्रमुखा सृष्टिः प्रतिपाद्यते।

क) तैत्तिरीयोपनिषदि ख) कठोपनिषदि ग) बृहदारण्यकोपनिषदि घ) छान्दोग्योपनिषदि

१६. कस्यामुपनिषदि आकाशप्रमुखा सृष्टिः प्रतिपाद्यते।

क) तैत्तिरीयोपनिषदि ख) कठोपनिषदि ग) बृहदारण्यकोपनिषदि घ) छान्दोग्योपनिषदि

१७. अद्वैतसिद्धान्ते आकाशस्य उत्पत्तिरस्ति न वा।

१८. आकाशस्य नित्यत्वं कथं सङ्गच्छते।

## १६.३) पञ्चीकरणम्–

अपञ्चीकृतानि पञ्च सूक्ष्मभूतानि पञ्चीकरणप्रक्रियया त्रिवृत्करणप्रक्रियया वा स्थूलताम् अवाप्य पञ्च स्थूलभूतरूपेण परिणतानि। ततः एव वस्तुतः कृत्स्नः स्थूलः प्रपञ्चः आविर्भवति। तस्मात् सृष्टिविचारप्रसङ्गे पञ्चीकरणम् अपि ज्ञातव्यम्। सृष्टिसमये अनुक्रमेण उत्पन्नानि अपञ्चीकृतानि सूक्ष्मभूतानि व्यवहारसमर्थानि न भवन्ति इति कारणात् तानि एव भूतानि पञ्चीकृतानि भवन्ति। इदानीं पञ्चीकरणप्रक्रिया विस्तार्यते।

आकाशः वायुः तेजः आपः पृथिवी च पञ्च स्थूलभूतानि। एतानि भूतानि प्रत्येकं द्विधा विभज्यते। ततः परं दश भागाः प्राप्यन्ते। पुनः तेषु दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा विभज्यते। पुनः तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु संयोजनम् एव पञ्चीकरणम्। उच्यते च वेदान्तसारकारेण - "पञ्चीकरणं तु आकाशादिपञ्चसु एकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु संयोजनम्।" इति। तथाहि उच्यते पञ्चदश्याम् -

**द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः।**





**स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥ इति।**

**सुरेश्वराचार्यैः पञ्चीकरणं वैशद्येन उच्यते -**

**पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा।**

**एकैकं भागमादाय चतुर्धा विभजेत् पुनः॥**

**एकैकं भागमेकस्मिन् भूते संवेशयेत् क्रमात्।**

**ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि॥**

**वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत्।**

**पञ्चीकरणमेतत् स्यादित्याहुस्तत्त्ववेदिनः॥ इति।**

वस्तुतः पञ्चीकरणं नाम पञ्चभूतानां परस्परसंमिश्रणम्। ईश्वरेच्छया भोगायतनानां स्थूलशरीराणां सृष्टये पञ्चीकरणं सम्भवति। पञ्चीकरणकारणात् सर्वेषु भूतेषु सर्वेषां भूतानाम् अंशः विद्यते इत्यतः कथम् एकस्मिन् भूते आकाशादिव्यपदेशः स्यादिति चेदुच्यते - यस्मिन् यस्य भूतस्य अंशः अधिकः तिष्ठति तद्भूतं तन्नाम्ना एव व्यपदिश्यते। तथाहि न्यायो - 'वैशेष्यात्तु तद्वादस्तद्वादः' इति। अस्यार्थः - यस्मिन् यस्य विशेषः अर्थाद् आधिक्यमस्ति तमाश्रित्यैव व्यपदेशः भवतीति। तस्माद् आकाशे तदीयांशस्य आधिक्यवशाद् आकाश इति व्यवहारः सिध्यति। एवम् अन्येषु भूतेष्वपि द्रष्टव्यम्।

**पञ्चीकृतभूतानाम् अंशाः**

| पञ्चीकृतभूतानि | आकाशः | वायुः | तेजः | जलम् | पृथिवी |
|---|---|---|---|---|---|
| १ आकाशः = | **१/२** | १/८ | १/८ | १/८ | १/८ |
| १ वायुः = | १/८ | **१/२** | १/८ | १/८ | १/८ |
| १ तेजः = | १/८ | १/८ | **१/२** | १/८ | १/८ |
| १ जलम् = | १/८ | १/८ | १/८ | **१/२** | १/८ |
| १ पृथिवी = | १/८ | १/८ | १/८ | १/८ | **१/२** |

पञ्चीकरणात् स्थूलभूतोत्पत्तेरनन्तरम् आकाशे शब्दः अभिव्यज्यते, वायौ शब्दस्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाः अभिव्यज्यन्ते।

अस्य पञ्चीकरणस्य अप्रामाण्यं न आशङ्कनीयम्। अस्ति हि छान्दोग्यश्रुतिः त्रिवृत्करणस्य प्रामाण्याय - "तासां त्रिवृतं त्रिवृतम् एकैकं करवाणि" इति। त्रिवृत्करणं नाम तेजसः आपः पृथिव्याः च विशेषनियमेन संमिश्रणम्। पञ्चीकरणवदेव एषा प्रक्रिया। एषैव त्रिवृत्करणश्रुतिः पञ्चीकरणस्य ज्ञापिका



भवति। अतः एव सदानन्दयोगीन्द्रेण वेदान्तसारे उच्यते - “अस्य अप्रामाण्यं न आशङ्कनीयं त्रिवृत्करणश्रुतेः पञ्चीकरणस्यापि उपलक्षणत्वात्” इति।

एवं पञ्चीकरणाद् अनन्तरं व्यवहारयोग्यानि स्थूलभूतानि उत्पद्यन्ते। एतेभ्यः पञ्चीकृतभूतेभ्यः चतुर्दश भुवनानि लोकाः वा उत्पद्यन्ते। तानि हि भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम् इति सप्त क्रमेण ऊद्ध्र्वलोकाः। सप्त च क्रमेण अधोलोकाः अतल-वितल-सुतल-रसातल-तलातल-महातल-पातालाः इति। न केवलं चतुर्दशभुवनानाम्, अस्य ब्रह्माण्डस्य, ब्रह्माण्डान्तर्गतानां च चतुर्विधस्थूलशरीराणाम् अन्नपानादीनां च उत्पत्तिरपि पञ्चीकृतभूतेभ्यो जायते। जरायुजं स्वेदजम् अण्डजम् उद्भिज्जं चेति चतुर्विधानि स्थूलशरीराणि। जरायुभ्यः जातानि मनुष्यपश्वादीनि जरायुजानि। अण्डेभ्यः जातानि पक्षिसर्पादीनि अण्डजानि। स्वेदेभ्यः जातानि यूकमशकादीनि स्वेदजानि। मृत्तिकाम् उद्भिद्य जातानि लतावृक्षादीनि उद्भिज्जानि। इत्थं पञ्चभूतानां समुत्पत्तिः, तेभ्यः भूतेभ्यः भौतिकानां च समुत्पत्तिः।

## १६.४) प्रलयविचारः–

### १६.४.१) नित्यप्रलयः

प्रलयः नाम त्रैलोक्यनाशः। प्रलयः चतुर्विधः - नित्यः प्राकृतः नैमित्तिकः आत्यन्तिकः च। नित्यप्रलयः नाम सुषुप्तिः। यस्याम् अवस्थायां सुप्तः पुरुषः न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति सा सुषुप्त्यवस्थेति कथ्यते।नित्यं हि जीवाः सुषुप्तिं गच्छन्ति इति कारणात् सुषुप्तिर्हि नित्यप्रलयः। तस्यां सुषुप्तौ पुरुषः परेण ब्रह्मणा सह ऐकात्म्यं प्राप्नोति, तेन च अखिलकार्याणि विनाशम् आप्नुवन्ति। ननु सुषुप्तौ प्राणस्पन्दनं तिष्ठतीत्यतः अखिलकार्यविनाशः नैव भवतीति चेदुच्यते अन्तःकरणस्य द्वे शक्ती स्तः। ज्ञानशक्तिः क्रियाशक्तिः चेति। ज्ञानशक्तिविशिष्टस्य अन्तःकरणस्य सुषुप्तौ नाशः भवति। किन्तु क्रियाशक्तिविशिष्टस्य अन्तःकरणस्य नाशः न भवतीति कारणात् प्राणः तस्यामवस्थायां तिष्ठति एवेति अद्वैतिनां मतम्। क्रियाशक्तिविशिष्टस्य अन्तःकरणस्य तु नाशः शरीरविनाशे भवति। सुषुप्तौ प्राणः जागर्ति इत्यत्र श्रुतिप्रमाणं हि - “यदा सुप्तः न कञ्चन स्वप्नं पश्यति, अथास्मिन् प्राण एव एकधा भवति, अथैनं वाक् सर्वैर्नामभिः सहाप्यति” (कौषितक्युपनिषत्-३/२) इति। सुषुप्तौ सत्सम्पन्नत्वात् सर्वम् विनाशं गच्छतीत्यत्र छान्दोग्यश्रुतिर्हि - “सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति”( ६/८/१) च इति।

### १६.४.२) प्राकृतप्रलयः

प्राकृतप्रलयः नाम हिरण्यगर्भविनाशनिमित्तकः अखिलकार्यानां नाशः। हिरण्यगर्भः अशेषब्रह्माण्डस्य अधिकारी प्रथमः जीवः। ब्रह्मणः अपरोक्षज्ञानत्वात् स जीवन्मुक्तः इति उच्यते। ब्रह्मापरोक्षज्ञाने सत्यपि तस्य प्रारब्धकर्मणः नाशः न अभवत्। अतः स जीवन्मुक्तः कथ्यते। यदा तस्य प्रारब्धकर्मणः अशेषतया विनाशः भवति तदा तस्य विदेहमुक्तिः भवति। तत्र प्रमाणभूता श्रुतिर्हि -

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मनः प्रविशन्ति परं पदम्॥ इति।



प्राकृतप्रलये पुराणवचनं तावत् -

द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः।
तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि॥
एष प्राकृतिको राजन् प्रलयो यत्र लीयेते॥ इति।

## १६.४.३) नैमित्तिकप्रलयः

कार्यब्रह्मणः हिरण्यगर्भस्य दिवसावसाननिमित्तकः त्रैलोक्यमात्रनाशः नैमित्तिकः प्रलयः कथ्यते। चतुर्युगसहस्राणि ब्रह्मणः दिनमुच्यते। नैमित्तिकप्रलये पुराणवचनं तावत् -

**एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्।**
**शेते अनन्तासने नित्यमात्मसात्कृत्य चाखिलम्॥ इति।**

## १६.४.४) आत्यन्तिकप्रलयः

ब्रह्मसाक्षात्कारकारणात् अशेषमोक्षः एव आत्यन्तिकः प्रलयः कथ्यते। आत्यन्तिकप्रलयस्य अपरं नाम तुरीयप्रलयः। "सर्वे एकीभवन्ति" इति श्रुतिरत्र मानम्। येन क्रमेण भूतानां भौतिकानां च सृष्टिः भवति तद्विपरीतक्रमेण लयः भवति। यथा पृथिव्याः अप्सु लयः भवति। अपां तेजसि, तेजसः वायौ, वायोराकाशे, आकाशस्य जीवाहङ्कारे, तस्य जीवाहङ्कारस्य हिरण्यगर्भाहङ्कारे, तस्य हिरण्यगर्भाहङ्कारस्य अविद्यायां लयः भवति। विष्णुपुराणे निगदितम् अस्ति यत्

**जगत्प्रतिष्ठा देवर्षे ! पृथिव्यप्सु प्रलीयते।**
**तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते॥**
**वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते।**
**अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते॥ इति।**

यादृशो वा प्रलयः अस्तु नाम सर्वः एव व्युत्क्रमेण भवति अर्थात् येन क्रमेण सृष्टिः तद्विपरीतक्रमेण प्रलयः। प्रलये कार्याणि कारणभावं प्राप्नुवन्ति। तथाहि भोगायतनं चतुर्विधसकलस्थूलशरीरजातं भोग्यरूपान्नपानादिकम् एतदायनतभूतानि भूरादिरचतुर्दशभुवनानि, एतदायतनभूतं ब्रह्माण्डं चैतत् सर्वम् एतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति। शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि, ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि, वायवः, अन्तःकरणं चैतत् सर्वम् एतेषां कारणरूपम् अपञ्चीकृतभूतमात्रं भवति। एतानि सत्त्वादिगुणसहितानि अपञ्चीकृतानि भूतानि एतत्कारणभूतम् अज्ञानोपहितचैतन्यमात्रं भवति। एतद् अज्ञानम् अज्ञानोपहितं चैतन्यं च ईश्वरादिकम् एतदाधारभूतम् अनुपहितचैतन्यरूपम् निर्विशेषं निर्गुणं ब्रह्ममात्रं भवति। आत्यन्तिकप्रलये तु ब्रह्म स्वस्वरूपमात्रेण विराजते।



## पाठगतप्रश्नाः-३

१९. किं नाम पञ्चीकरणम्।

२०. पञ्चीकरणप्रतिपादकः पञ्चदशीश्लोकः कः।

२१. पञ्चीकृते वायौ वायोः कियान् अंशः तिष्ठति।

२२. चतुर्दशभुवनानि कानि।

२३. चतुर्विधानि स्थूलशरीराणि कानि।

२४. प्रलयः कतिविधः। के च ते।

२५. नित्यप्रलयः नाम कः।

२६. आत्यन्तिकप्रलयः नाम कः।



## पाठसारः

सर्वेषां दर्शनानामिव अद्वैतवेदान्तिनां सृष्टिक्रमः इति वेदितव्यः। अद्वैतवेदान्तमते अज्ञानोपहितात् चैतन्यात् आकाशस्य, ततः वायोः, ततः अग्नेः, ततः आपः, ततश्च पृथिव्याः समुत्पत्तिरभूत्। एतानि सूक्ष्माणि भूतानि व्यवहारासमार्थानि अपञ्चीकृतभूतानि इत्युच्यन्ते। एतेभ्यः अपञ्चीकृतेभ्यः पञ्चसूक्ष्मभूतेभ्यः पञ्चीकरणप्रक्रियया पञ्च स्थूलभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च वायवः, बुद्धिः मनश्चेति उत्पद्यन्ते। ननु किं नाम पञ्चीकरणमिति चेदुच्यते - पञ्चीकरणं नाम एका प्रक्रिया, यया प्रत्येकं भूतानाम् द्वितीयांशः अन्येषां चतुर्णां भूतानां अष्टमांशेन मिलित्वा एकं पूर्णं व्यवहारयोग्यं स्थूलभूतं निर्माति। ज्ञानेन्द्रियाणि आकाशादीनां पृथक् पृथक् सात्त्विकांशेभ्यः क्रमेण उत्पद्यन्ते। कर्मेन्द्रियाणि आकाशादीनां पृथक् पृथक् रजोंऽशेभ्यः क्रमेण उत्पद्यन्ते।पञ्च वायवः आकाशादीनां रजोंऽशेभ्यः मिलितेभ्यः उत्पद्यन्ते। आकाशादीनां सात्त्विकांशेभ्यः मिलितेभ्यः अन्तःकरणम् उत्पद्यते। अन्तःकरणस्यैव वृत्तिभेदेन बुद्धिः मनः चित्तम् अहङ्कारः इति चतुर्धा विभागः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च वायवः, बुद्धिः मनश्चेति सप्तदशावयवोपेतं सूक्ष्मशरीरम्। तस्य अपरं नाम लिङ्गशरीरमिति। यद्यपि नैयायिकानां नये आकाशः नित्यः तथापि वेदान्तिनां मते आकाशः ब्रह्मणः उत्पद्यते अर्थात् अनित्यः इति अङ्गीक्रियते। येन क्रमेण सृष्टिः प्रतिपाद्यते अद्वैतिभिः तद्विपरीतक्रमेण प्रलयम् अङ्गीकुर्वन्ति ते। प्रलयो नाम त्रैलोक्यविनाशः। स च नित्य-प्राकृत-नैमित्तिकात्यन्तिकभेदेन चातुर्विध्यं भजते। एतेषु ब्रह्मसाक्षात्कारेण अशेषप्रपञ्चविनाशः आत्यन्तिकप्रलयः इत्युच्यते।





## पाठान्तप्रश्नाः

१. सृष्टिक्रमविषये लघुटिप्पणीमेकां लिखत।

२. सप्तदशावयवविशिष्टस्य लिङ्गशरीरस्य परिचयः दीयताम्।

३. मिलितानां सूक्ष्मभूतानां कार्याणि संक्षेपेण लिखत।

४. पञ्चीकरणप्रक्रियां विस्तरेण प्रतिपाद्यताम्।

५. अद्वैतवेदान्तमते आकाशस्य उत्पत्तिः सम्भवति न वेति विचारयत।

६. चतुर्विधप्रलयानां संक्षेपेण परिचयः दीयताम्।



## पाठगतप्रश्नानाम् उत्तराणि

**पाठगतप्रश्नाः-१**

१. "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्।" इति।

२. ख) आकाशः

३. श्रोत्रं, चक्षुः, त्वक्, जिह्वा, घ्राणं च इति पञ्च ज्ञानेन्द्रियाणि।

४. वाक्, पाणिः, पादः, पायुः, उपस्थः चेति पञ्च कर्मेन्द्रियाणि।

५. प्राणः, अपानः, व्यानः, उदानः, समानः चेति पञ्च वायवः।

६. क) सूक्ष्मभूतानां सात्त्विकांशेभ्यः।

७. ख) सूक्ष्मभूतानां रजोंऽशेभ्यः।

८. उदानो नाम कण्ठस्थानीयः ऊद्ध्र्वगमनवान् उत्क्रमणवायुः।

९. क) सूक्ष्मभूतानां मिलितेभ्यः सात्त्विकांशेभ्यः

१०. ग) सप्तदश।

११. क) मनः।

१२. ख) बुद्धिः।

१३. प्राणो नाम प्राग्गमनवान् वायुः नासाग्रवर्ती।

१४. देवदत्तः

**पाठगतप्रश्नाः-२**

१५. घ) छान्दोग्योपनिषदि।

१६. क) तैत्तिरीयोपनिषदि।

१७. आकाशस्य उत्पत्तिरस्ति।



१८. प्रयलपर्यन्तं हि आकाशस्य नित्यत्वमिति नित्यता सङ्गच्छते।

**पाठगतप्रश्नाः-३**

१९. व्यवहारासमर्थानां पञ्च सूक्ष्मभूतानां परस्परसंमिश्रणेन व्यवहारयोग्य-स्थूलभूतोत्पत्तिप्रक्रिया एव पञ्चीकरणम्।

२०. द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥ इति।

२१. १/२।

२२. भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम् इति सप्त ऊद्‌र्ध्वलोकाः, अतल-वितल-सुतल-रसातल-तलातल-महातल-पातालाः इति सप्त च अधोलोकाः इति चतुर्दश भुवनानि।

२३. जरायुजं स्वेदजम् अण्डजम् उद्भिज्जं चेति चतुर्विधानि स्थूलशरीराणि।

२४. प्रलयः चतुर्विधः। नित्यः प्राकृतः नैमित्तिकः आत्यन्तिकः चेति।

२५. नित्यप्रलयः नाम सुषुप्तिः।

२६. ब्रह्मसाक्षात्कारकारणात् अशेषमोक्षः एव आत्यन्तिकः प्रलयः।

॥ इति षोडशः पाठः ॥



# १७

# अवस्थात्रयविचारः

## प्रस्तावना

दर्शनानानि आस्तिकानि नास्तिकानि चेति द्वेधा व्यवह्रियन्ते। आस्तिकदर्शनेषु अन्यतमो भवति वेदान्तः। वेदानामन्तिमो भागः भवति वेदान्तः। वेदः कर्मकाण्डः ज्ञानकाण्डश्चेति द्विविधः। कर्मकाण्डे यागादिकर्मणां विचारः तथा ज्ञानकाण्डे ब्रह्मविचारश्च स्तः। तत्र ब्रह्मविचारपरस्य ज्ञानकाण्डस्य विचारः वेदस्यान्तिमभागे विद्यतेति तस्य वेदान्त इति नामधेयम्। वेदान्त इति मुख्यतया उपनिषदां नाम। उपनिषदां तात्पर्यविचारः यैः ग्रन्थैः क्रियते ते वेदान्तपदबोध्याः भवन्ति। तथाच ब्रह्मसूत्रं भगवद्गीता तद्भाष्यादिकञ्च। वेदान्तो नाम उपनिषद्प्रमाणं तदुपकारीणि शरीरकसूत्रादीनि चेति उक्तं वेदान्तसारे। मतभेदेन वेदान्तः बहुधा व्यवह्रियते। तत्र अद्वैतं भेदाभेदं विशिष्टाद्वैतं द्वैतं शुद्धाद्वैतम् इत्यादयः मुख्याः सम्प्रदायाः भवन्ति। एतेषां यथाक्रमं प्रवर्तकाः भवन्ति शङ्कराचार्यः भास्कराचार्यः रामानुजाचार्यः मध्वाचार्यः वल्लभाचार्यश्च।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- वेदान्तस्य सामान्यज्ञानं लभ्यते।
- अद्वैतवेदान्तशब्दस्य विशेषार्थः अवगम्यते।
- वेदान्तस्य इतरविभागानां परिचयः प्राप्यते।
- वेदान्तप्रतिपाद्यानां मुख्यतत्त्वानां ज्ञानम् उपलभ्यते।
- शङ्कराद्याचार्याणां परिचयः सामान्यतया उपलभ्यते।
- अवस्थात्रयविषये सुष्ठु बोधः लभ्यते।
- आत्मनः चतुष्पात्त्वं सम्यगवगम्यते।
- विश्ववैश्वनरादिस्वरूपमवबुद्ध्यते।

## १७.१) अद्वैतशब्दार्थः

न विद्यते द्वैतं यस्मिन् तत् अद्वैतमिति तस्यार्थः। तत अद्वैतशब्दस्य अर्थविशेषः विचार्यते। द्वाभ्याम् इतं द्वीतम्। जीवजगद्भ्यामितं विशिष्टं ब्रह्मैव द्वीतम्। द्वीतस्य भावः द्वैतम्। द्वैतस्याभावः अद्वैतम्। न द्वैतम् अद्वैतम्। एवञ्च ब्रह्मणः जीवजगद्भ्यां विशिष्टत्वं ये नानुमन्यन्ते त एवाद्वैतिनः।



**द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते।**

**तन्निषेधेन चाद्वैतं प्रत्यग् वस्त्वभिधीयते॥ (बृहदारण्यकभाष्यवार्तिकम् - ४.३.१९०७)**

एवञ्च शुद्धं चैतन्यमेव अद्वैतम्। चैतन्यस्यैव प्रत्यक्त्वेनात्र अवधानात्। ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर इति भवति अद्वैतस्य मुख्यं प्रतिपाद्यम्। दर्शनेषु वेदान्तस्य तत्राद्वैतस्य च स्थानम् अतीवप्राधान्यमर्हति।

## १७.२) आत्मनः त्रीणि रूपाणि

वेदान्तशास्त्रस्य मुख्यः विषयो भवति जीवब्रह्मणोरैक्यम्। अथवा जीवात्मनः परमात्मनश्च अभेदज्ञानम्। तस्य अभेदस्य प्रतिपादनं कर्तुं शास्त्रे नैके उपायाः स्वीकृताः वर्तन्ते। तत्र एकस्योपायस्य प्रदर्शनार्थम् अयं विचारः स्वीकृतो वर्तते। तथा च परमात्मनः अधिदैवतं सविशेषाणि त्रीणि रूपाणि सन्ति। तथैव जीवात्मनः अध्यात्मं च सविशेषाणि त्रीणि रूपाणि सन्ति। अधिदैवतम् इत्यस्य देवतात्मकमित्यर्थः। अध्यात्मम् इत्यस्य जीवात्मकमित्यर्थः। तथा च अधिदैवतं त्रीणि रूपाणि भवन्ति ईश्वरः, हिरण्यगर्भः विराट् च। अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन त्रीणि रूपाणि। तत्र वैश्वानरस्य स्थानं भवति जाग्रत्। तैजसस्य स्थानं भवति स्वप्नः। प्राज्ञस्य स्थानं सुषुप्तिश्च।

## १७.३) तिस्रः अवस्थाः

शरीरस्थस्य जीवात्मनः तिस्रः अवस्थाः सन्ति। ताश्च जाग्रत् स्वप्नः सुषुप्तिः च। परपस्परविलक्षणाः भवन्ति एता अवस्थाः। जाग्रदवस्थायां स्वप्नः नास्ति। स्वप्नावस्थायां जाग्रदपि नास्ति। ते द्वे अपि सुषुप्तौ न स्तः। निरुपाधिकस्य ब्रह्मणः स्वरूपम् अवगन्तुमेव एताः अवस्थाः निरूप्यन्ते शास्त्रे। सर्वोपाधिवर्जितं ब्रह्म एताभ्यः अवस्थाभ्यः अपि मुक्तं भवततीति अनेन प्रतिपाद्यते। एताभ्यः अवस्थाभ्यः भिन्ना काचिदवस्था जीवस्य नास्ति एव। अवस्थात्रयमपि शरीरस्थः जीव एव अनुभवति। कोऽयं जीवः? अवस्थाश्च काः?

## १७.४) जीवस्वरूपम्

जीवो नाम अन्तःकरणावच्छिन्नं चैतन्यमिति ज्ञेयम्। ब्रह्मादिवत् जीव अपि विभुः नित्यः सन्मात्रचैतन्यमस्ति। स एवास्य नामरूपात्मकस्य जगत आधारभूत आस्ते। इन्द्रियमनोऽहंकाराद्युपाधिभिः पृथक् पृथक् अविच्छिन्नः आत्मैव जीवः। आत्मा तु सदेकः तथापि उपाधिभेदेन अनेकजीवस्वरूपेण प्रतीयते। एवम् अकर्ता आत्मा कर्ता भवति। अभोक्ता आत्मा भोक्ता च भवति। सुखी दुःखी च भवति। कर्तृत्वभोक्तृत्वादिकम् उपाधिकृतं न तु वास्तविकम्। जीवः परमात्मनः न अंशः अस्ति। नैव तस्य परिणामः अस्ति। किन्तु तस्य विवर्तरूपप्रतीतिमात्र एव। जीव एव संसारी भवति। तस्यैव बन्धमोक्षौ च। जीव एव पापपुण्यादीनि उपार्जयति तत्फलं भुङ्क्ते च। जीवस्य जीवत्वं वह्नेः उष्णत्ववत् न स्वाभाविकम् किन्तु कल्पितमेव। मोहान्धकारे अहमिति भ्रान्तिबुद्ध्या जीवत्वं भजति। तत्त्वमस्यादिजन्यज्ञानेन जीवः अज्ञानं विनाशयित्वा स्वस्वरूपमाप्नोति। ब्रह्मविदाप्नोति परम् इति तैत्तिरीयश्रुतेः।





## पाठगतप्रश्नाः-१

१. वेदान्तो नाम कः?

२. वेदः कतिविधः?

३. ज्ञानकाण्डस्य अपरं नाम किम्?

४. अद्वैतवेदान्तप्रवर्तकः कः?

५. द्वैतवेदान्तप्रवर्तकः कः?

६. विशिष्टाद्वैतस्य प्रवर्तकः कः?

७. वेदान्तस्य मुख्यः विषयः कः?

८. आत्मनः कति रूपाणि?

९. जीवस्य अवस्थाः कति?

१०. जीवो नाम कः?

## १७.५) जाग्रदवस्था

जागरणं नाम इन्द्रियैः अर्थोपलब्धिः। इन्द्रियाणि ज्ञानकर्मभेदेन दश। तैरिन्द्रियैः विषयैः साकं सन्निकर्षं प्राप्य जीवः यदा सुखदुःखे अनुभवति तदा जीवः जागर्ति इति वक्तुं शक्यते। जीवस्य स्थूलविषयोपभोगः भवति जाग्रदवस्थायाम्। जाग्रत्काले जीवः यद्यद्विषयविशेषम् अनुभवति तस्य सर्वस्यापि चित्ते वासनारूपेण स्थितिर्भवति। लौकिकवैदिककर्मणां सुखदुःखादिफलभोगाय धर्माधर्मयोश्च तथा बन्धमोक्षप्राप्तये च एतद्वासनायुक्तं जाग्रदेव आश्रयं भवति।

जाग्रति प्रमातृप्रमाणप्रमेयव्यवहाराः भवन्ति। तत्र प्रमाणैः यः अर्थं प्रमिणोति स प्रमाता। येन प्रमिणोति तत् प्रमाणम्। यत् प्रमीयते तत् प्रमेयमिति विवेकः। तत्र प्रमाता जीवश्चेतनो भवति। जाग्रदवस्थायां जीवस्य वैश्वानर इति नाम भवति।

## १७.६) वैश्वानरः

आत्मनः चत्वारः पादाः सन्ति। सोऽयमात्मा चतुष्पात् इति माण्डूक्यवाक्यमेव तत्र प्रमाणम्। पद्यते गम्यते अवगम्यते ब्रह्मात्मैक्यम् एभिरिति पादाः विश्वादयः। विश्वः तैजसः प्राज्ञ ईश्वरः इति चत्वारः पादाः।

विश्व एव वैश्वानरो भवति। विश्वेषां नराणां नयनाद् वैश्वानरः यद्वा विश्वश्चासौ नरश्चेति विश्वानरो, विश्वानर एव वैश्वानरः इति। जाग्रदवस्थायां विद्यमानः आत्मा भवति प्रथमः पादः।

बाह्यविषयेषु एव अस्य प्रज्ञा अवभासते। अतः अयं बहिष्प्रज्ञः भवति। एवमेव अयं जागरितस्थानः सप्ताङ्गः एकोनविंशतिमुखः स्थूलभुक् च भवति। तथा च श्रुतिः

**जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्गो एकोनविंशतिमुखः**

**स्थूलभुग्वैश्वानरः प्रथमः पादः इति।**

मूर्धा सुतेजा, चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मात्मा, सन्देहो बहुलो, वस्तिरेवरयिः, पृथिव्येव पादौ, मुखम् आहवनीयाग्निः इत्येवं भवन्ति वैश्वानरस्य सप्ताङ्गानि। ज्ञानेन्द्रियपञ्चकं, कर्मेन्द्रियपञ्चकं, प्राणादिपञ्चकं, बुद्धिः, मनः, अहङ्कारः, चित्तम् इत्येवं तस्य नवदशमुखानि सन्ति। एतैः वैश्वानरः शब्दादिस्थूलविषयान् भुङ्क्ते। अनेन एव द्वितीयस्य पादस्य प्राप्तिर्भवतीति कारणात् अयं वैश्वानरः प्रथमः पादः। जाग्रदवस्थायां स्थूलशरीराभिमानी भवति विश्वः।

## १७.७) स्थूलशरीरम्

उपाधितन्त्रो भवति जीवः। शरीरं तत्र एक उपाधिः। शरीरञ्च त्रिविधम्। स्थूलशरीरं सूक्ष्मशरीरं कारणशरीरञ्च। त्रीणि शरीराणि आत्मनि कल्पितानि भवन्ति। तत्र कारणं भवति अज्ञानम्। जाग्रदवस्थायां स्थूलशरीरस्य प्राधान्यमस्ति। किन्नाम स्थूलशरीरमिति जिज्ञासा भवति। चक्षुषा वीक्षमाणाः हस्तपादमस्तकादयः स्थूदेहस्य अंशाः भवन्ति। मज्जास्तिमेदाः चर्मरक्तमांसादयश्च तस्यांशा एव। तदुक्तं-

**मज्जास्तिमेदः पलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम्**

**पादोरुवक्षो भुजपृष्ठमस्तकैरंगैरुपांगैरुपयुक्तमेतत्।**

**अहं ममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः॥७४॥ (विवेकचूडामणिः)**

अशितस्य अन्नस्य स्थूलमध्यमसूक्ष्मभेदेन त्रिधा विभागो ज्ञेयः। तेजसो घृतादेः मध्यमो भागः मज्जा। तस्य स्थविष्ठो भागः अस्थि। तस्य पूर्वपरिणामः मेदः। पलं मांसम्, अशितस्य अन्नस्य मध्यमो भागः लोहितं, पीतानाम् अपां मध्यमो भागः, चर्म स्थूलावरणं, त्वक् सूक्ष्मावरणम् आन्तरान्धातून् नाड्यादींश्च सप्तावरणानि आवृण्वन्ति। एतादृशैः अवयवैः युक्तं भवति स्थूलशरीरम्। स्थूल शरीरम् आत्मनः नास्ति। तथापि अज्ञानात् स्वकीयं मनुते। ततश्च तेषु अहं स्थूलः अहं कृशः अहं सुन्दरः इत्येवंविधः अहंत्वाभिमानः भवति। अहं ब्रह्मणः अहं क्षत्रियः इति तत्र विशेषः। तत्र मम पादौ मम हस्तौ मम देहः इत्येवविधः ममताभिमानश्च भवति। अज्ञानप्रयुक्ताध्यासादेव अहमिदं ममेदमिति नैसर्गिकः लोकव्यवहारः।

स्थूलशरीरं जीवस्य भोगायतनं भवति। जाग्रत्काले वैश्वानरः दिग्वातार्कवरुणाश्विभिः क्रमाद् नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमात् शब्दस्पर्शरूपरसगन्धान्तान् स्थूलविषयान् अनुभवति। अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमाद् नियन्त्रितेन वागादीन्द्रियपञ्चकेन क्रमाद् वचनादानगमनविसर्गानन्दान् स्थूलविषयान् अनुभवति। चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमाद् नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येन अन्तरिन्द्रियचतुष्केण क्रमात् सङ्कल्पविकल्पनिश्चयाहङ्कार्यचैत्तांश्च स्थूलविषयान् वैश्वानरः अनुभवति। इत्युक्तं वेदान्तसारे। स्थूलभुक् वैश्वानर इति तत्र प्रमाणम्।





## पाठगतप्रश्नाः-२

१.१ जागरणं किम्?

१.२ स्थूलविषयोपभोगः कदा भवति?

१.३ प्रमाता कः?

१.४ आत्मनः चत्वारः पादाः के?

१.५ जागरितस्थानः कः?

१.६ त्रिविधानि शरीराणि कानि?

१.७ जीवस्य भोगायतनं किम्?

## १७.८) स्वप्नः

स्वप्नो नाम जागरितसंस्कारप्रत्ययः सविषयः। जाग्रदवस्थातः अत्यन्तं भिन्ना काचिदवस्था भवति स्वप्नः। अत्र इन्द्रियाणां प्रवृत्तिर्नास्ति तेषां मनसि लीनत्वात्। इन्द्रियाणाम् अभावे स्वप्नस्थविषयाणां दर्शनं कथं सम्भवतीति जिज्ञासायामुच्यते साक्षिद्वारा इति। अन्तःकरणोपहितं चैतन्यमेव साक्षीत्युच्यते। तदा इन्द्रियाणाम् उपरमे सत्यपि मनसः प्रवृत्तिर्भवति। अतः जाग्रत्कालीनस्थूलविषयेभ्यः इन्द्रियाणाम् उपरमेऽपि मनः अनुपरतं सत् विषयान् सेवते। यद्यपि स्वप्नकाले स्थूलविषयाः न सन्ति तथापि सूक्ष्मविषयाः सन्त्येव। तथा च ज्ञायते-

**इन्द्रियाणाम् उपरमे मनोऽनुपरतं यदि सेवते**

**विषयानेव तद्विद्यात् स्वप्नदर्शनम्॥**

स्वप्नकाले शरीरस्य जडता नास्ति प्राणस्य सत्त्वात्। स्वप्नकाले जाग्रत्कालीनवत् सर्वोऽपि व्यवहारः सम्भवति। तत्र रथाः रथचालकाः अश्वाः मार्गाश्च सन्ति। कथं सन्ति इति चेत् जीवः एतत् सर्वं सृजति। अतः स्वप्नलोकः जीवस्य सृष्टिरिति श्रुतिर्वदति।

**न तत्र रथा रथयोगानपन्थानो भवन्त्यथ रथयोगान् पथः सृजते** -(बृह. ४.३.१०)

स्वप्नस्थविषयाः जाग्रत्कालीनवत् न परमार्थाः किन्तु मिथ्या एव। न परमार्थगन्धोऽप्यस्ति। (सू.भ.-३.२.३) अतः तत्र क्रियमाणेन पुण्येन पापेन वा जीवस्य सन्बन्ध एव नास्ति। यद्यपि स्वप्नः जाग्रदवस्थानुभूतविषयाणां स्मृतिः भवति। पूर्वदृष्टस्य स्मृतिर्हि प्रायेण स्वप्नः। (बृ.सू.भा.४.३.९) इह जन्मनि अनुभूतनानां विषयाणामेव स्वप्नदर्शनं भवतीति न मन्तव्यं तद्व्यतिरिक्तम् इह अननुभूतमपि स्वप्नस्य विषयो भवति। परलोकस्थविषयाणामपि दर्शनं स्वप्नकाले अस्ति। यद्यपि परलोकस्थसुखदुःखे साक्षान्नानुभवति तथापि तद्दर्शनं भवतीति सर्वेषामनुभवः।



स्वप्ने अनुभूताः अश्वगजादिविषायाः प्रातिभासिकाः भवन्ति। ते यावत्प्रतिभासमवतिष्ठन्ते। स्वप्नः स्वकाले सत्यवद्भाति प्रबोधे चासद्भवेत्। यथा स्वप्नकाले मनःकल्पितानि सुखदुःखाभयादिहेतूनि वस्तूनि सत्यवद्भान्ति प्रबोधे चासन्ति भवेयुः। तथाज्ञानकाले द्वैतमिदं जगत् सत्यवद्भात्वा सर्वव्यवहारास्पदं भूत्वा सुखदुःखाद्यनुभवान् भावयित्वा आत्मप्रबोधे च निश्शेषं निवर्तते। वस्तुतः जाग्रत्प्रपञ्चः मिथ्या भवति, किन्तु लोकानां तथा अनुभवः नास्ति। शास्त्राचार्योपदेशसिद्धः परोक्षानुभवस्तु केषाञ्चिदस्ति। स्वप्नविषये तथा नास्ति। तस्य मिथ्यात्वं सर्वानुभवगम्यमेव। स्वप्नस्थविषायाः प्रबोधकाले नानुभोक्तुं शक्याः तेषां कल्पितत्वेन प्रतीतिकालमात्रसत्ताकत्वात्। स्वप्ने कश्चन आत्मानं राजानं पश्यति। प्रबोधे च स दरिद्र एव भवति न तु राजा। स्वप्नस्थविषयाः क्षणिकाः न तु दीर्घकालिकाः। एवं जाग्रत्प्रपञ्च अपि स्वप्नतुल्यो द्रष्टव्यः।

## १७.९) तैजसः

तैजसः आत्मनो द्वितीयः पादः भवति। तेजोमयान्तःकरणोपहितत्वात् जीवस्य तैजस इति नाम। तेजोमयत्वञ्चात्र वासनामयत्वमेव। वासना च जाग्रदवस्थायाम् अन्तःकरणवृत्तिद्वारा तत्तदिन्द्रियैः ये ये शब्दादिविषयाः जीवेन स्थूलरूपेण अनुभूताः तेषां संस्काराः सूक्ष्मरूपेण मनसि वर्तन्ते, तेषां नाम भवति वासना इति। तैजसस्य स्थानं भवति स्वप्नः। अतः अयं स्वप्नस्थानः इत्यभिधीयते। स्वप्नसूक्ष्मशरीराभिमानी भवति तैजसः। स्वप्ने वासनारूपेणैव प्रज्ञायाः स्थितिर्भवति। वैश्वानरः स्थूलविषयान् साक्षादनुभवतीति हेतुना तस्य प्रज्ञा स्थूला भवति। किन्तु स्वप्नकाले जाग्रत्कालीनान् वासनाभूतान् सूक्ष्मविषयान् अनुभवति इति हेतुना तैजसस्य प्रज्ञा सूक्ष्मा भवति। तत्काले सूक्ष्मविषयान् अनुभवति इति स प्रविविक्तभुक् इति कथ्यते। जाग्रत्कालीनवत् स्वप्नस्थभोगाः न स्थूलाः, तेभ्यः अत्यन्तं विविक्ताः वर्तन्ते इति प्रविविक्तभुक्। अस्य प्रविविक्ताहारतरः इत्यपि नामान्तरमस्ति। स्वप्नलोके जीवस्य कृते अन्नस्य अतिसूक्ष्मांश एव आहारो भवति। अन्नस्य मध्यमांशद् अत्यन्तं विविक्तः इति। अतः अयं तैजसः प्रविविक्ताहारतरश्च भवतीति बृहदारण्यके अस्ति (बृ-४.२.३)।

स्वेन सम्पादितानां वासनानाम् अनुरोधेन मनोद्वारा अन्तः एव प्रज्ञा जीवस्य उत्पद्यते। अतः अयं तैजसः अन्तःप्रज्ञश्च भवति। एवं सप्ताङ्गः एकोनविंशतिमुखः प्रविविक्तभुक् च भवति। वैश्वानरस्य यथा सप्ताङ्गादयः वर्णिताः तथा अस्यापि द्रष्टव्याः। तथा च श्रुतिः

**स्वप्नस्थानोन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः**

**प्रविविक्तभुक् तौजसो द्वितीयः पाद इति।**

## १७.१०) सूक्ष्मशरीरम्

जाग्रति स्थूलशरीरं सम्यगवभासेत्युक्तम्। तर्हि स्वप्नकाले कस्य शरीरस्य भानमिति जिज्ञासायामुच्यते सूक्ष्मशरीरस्य इति। किन्नाम सूक्ष्मशरीरम्। सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि। तदुक्तमभिज्ञैः मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम् इति। लिङ्ग्यते ज्ञाप्यते



प्रत्यगात्मसद्भाव एभिरिति लिङ्गानि। अवयवास्तु ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं बुद्धिमनसी वायुपञ्चकञ्चेति। तदुक्तं शङ्कराचार्येण विविकचूडामणौ-

**वागादिपञ्च श्रवणादिपञ्च**

**प्राणादिपञ्चाभ्रमुखानि पञ्च।**

**बुद्ध्याद्यविद्यापि च कामकर्माणि**

**पुर्यष्टकं सूक्ष्मशरीरमाहुः॥** (वि.चू. ९८)

ज्ञानसाधनानीन्द्रियाणि ज्ञानेन्द्रियाणि। तानि च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि। यथाक्रमं शब्दस्पर्शरूपरसगन्धाः तेषां विषयाश्च भवन्ति। कर्मणः साधनानि इन्द्रियाणि कर्मेन्द्रियाणि। तानि च वाक्पाणिपादपायूपस्थाख्यानि। यथाक्रमं वचनादानगमनविसर्गानन्दसाधकत्वं भवति एतेषाम्। तथा च वागिन्द्रियं वचनं साधयति। वागिन्द्रियं विना कथने वयम् असमर्था एव। पाणिः आदानं साधयति। विना पाणिसाहाय्यं कस्यचित् वस्तुनः आदानं नैव सम्भवति। पादः गमनं साधयति। पद्भ्यां विना क्रमित्वा देशान्तरं प्रति गन्तुं न शक्नोति। पायुः विसर्जनं साधयति। शरीरस्थस्य मलस्य विसर्जनं पाय्वाख्येन इन्द्रियेणैव भवति। सुखसाधकमिन्द्रियं भवति उपस्थम्। मूत्रविसर्जनसाधकं तथा सुखसाधकञ्चेन्द्रियं भवति उपस्थम्। तथा च प्रश्नोपनिषद्वाक्यमस्ति।

**वाक् च वक्तव्यं च हस्तौ च दातव्यं च उपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च**

**पादौ गन्तव्यञ्च। इति।** (प्र.उप. ४.८ )

अथ बुद्धिमनसोश्च का गतिरिति चिन्त्यते। बुद्धिर्नाम निश्चयात्मिका अन्तःकरणवृत्तिः भवति। मनो नाम सङ्कल्पविकल्पात्मिका अन्तःकरणवृत्तिः भवति। चित्तस्य अहंकारस्य च अनयोरेव अन्तर्भावात् तयोः पृथक् विचारः नापेक्षते। तदुक्तं वेदान्तपारिभाषायाम्-

**मनो बुद्धिरहंकारश्चित्तं करणमान्तरम्।**

**संशयो निश्चयो गर्वः स्मरणं करणमान्तरम्॥ इति॥**

अन्तःकरणं चतुर्धा भवति। मनः बुद्धिः अहंकारः चित्तं च इति। तत्र संशयः- मनसः विषयो भवति। निश्चयः बुद्धेः विषयो भवति। गर्वः अहङ्कारस्य, स्मरणं च चित्तस्य विषयौ स्तः। अनुसन्धानात्माकान्तःकरणवृत्तिः चित्तम्। अभिमानात्मिकान्तःकरणवृत्तिः अहङ्करः। स्मृतिः अनुभवजन्या भवति। अनुभवशच निश्चयात्मकः। अतः निश्चयात्मिकायां बुद्धौ एव चित्तस्य अन्तर्भावः। अहङ्कारस्य सङ्कल्पविकल्पात्मकत्वात् सः मनसि चान्तर्भवति।

अथ पञ्च वायवः चिन्त्यन्ते। प्राणापानव्यानोदानसमानाः पञ्च वायवः। प्राणो हि प्राग्गमनवान् नासाग्रवर्ती। अपानो हि अवाग्गमनवान् पाय्वादिस्थानवर्ती। व्यानो हि विष्वग्गमनवान् अखिलशरीरवर्ती। उदानो हि कण्ठस्थानीय ऊर्ध्वगमनवान् उत्क्रणवायुः। समानो हि शरीरमध्यगताशितपीतान्नादिसमीकरणकरः इति उक्तं वेदान्तसारे। तदुक्तं विवेचूडामणौ



**प्राणापानव्यानोदानसमानाः भवत्यसौ प्राणः।**

**स्वयमेव वृत्तिभेदाद् विकृतिभेदात् सुवर्णसलिलादिवत्॥ (वि.चू. ९७)**

एवञ्च पूर्वोक्तं सप्तदशावयवोपेतं सूक्ष्मशरीरस्य भानं भवति स्वप्ने। अतः अस्य शरीरस्य विभक्त्यवस्था भेदकावस्था भवति स्वप्नः। अत्र स्थूलदेहाभावात् सूक्ष्मदेहे एव अभिमानो भवति।

## १७.११) प्राज्ञः

प्राज्ञः आत्मनो तृतीयः पादः भवति। व्यष्ट्यज्ञानोपहितं चैतन्यं प्राज्ञः इत्युच्यते। सुषुप्तिकारणशरीराभिमानी भवति प्राज्ञः। प्रकर्षेण अज्ञः इति प्राज्ञो भवति। एकाज्ञानावभासकत्वात् अस्य प्राज्ञत्वम्। प्राज्ञस्य स्थानं भवति सुषुप्तिः अथवा गाढनिद्रा। सुषुप्त्यवस्थायां विद्यमानः आत्मा प्राज्ञः भवति। सुषुप्तिकाले स्थूलविषयाः सूक्ष्मविषयाः वा न सन्ति। केवलम् अज्ञानमेव अवभासते। अतः सः अज्ञानमात्रसाक्षी भवति। अज्ञानावभासकत्वात् अस्य प्राज्ञ इति नाम इति केचित्। कारणशरीराभिमानी भवति प्राज्ञः। कारणशरीरवर्णनन्तु अग्रे भविष्यति। कारणशरीरे अभिमानवान् इत्यस्य तादात्म्याध्यासेन अहम् इत्यभिमानवान् भवति जीव इत्यर्थः। अविनाशिस्वरूपानुभवरूपा प्रज्ञा यस्य भवति सः प्रज्ञः, प्रज्ञ एव प्राज्ञः इति केषाञ्चित् मतम्।

**अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा।**

**सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवान्॥ (पञ्चदशी-१.१७)**

सुषुप्तौ प्राज्ञः आत्मना ऐक्यं प्राप्नोति। सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते छान्दोग्ये अस्ति। स्वपितीति अस्य जीवस्य लोकप्रसिद्धं नाम भवति। जाग्रति जीवस्य उपाधिर्भवति अन्तःकरणम्। अतः स अन्तःकरणोपाधिकः सन् विषयान् गृह्णाति। स्वप्ने तद्वासनाविशिष्टः सन् स्वप्नं पश्यन् मनःशब्दवाच्यो भवति। तदुपाधिद्वयमपि सुषुप्तौ नास्ति। अतः तदुपाधिकृतः विशेषोऽपि नास्ति। अतः आत्मनि तस्य लयो भवतीति तात्पर्यम्। ततश्च स आनन्दमनुभवति। अतः आनन्दभुक् भवति। आनन्दं भुङ्क्ते इति आनन्दभुक्। आनन्दः स्वरूपानन्दः। सुषुप्तस्थानः एकीभूतः प्रज्ञानघन एवानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः इति माण्डूक्ये अस्ति। आनान्दस्य भोगार्थं तत्र अन्तःकरणवृत्तिः नास्ति इति शङ्का न कार्या। तत्र तदभावेऽपि अज्ञावृत्तिरस्त्येव। तस्य जडत्वेऽपि चैतन्येन प्रदीप्ता भवति। तथा च चैतन्यप्रदीप्ताभिः अतिसूक्ष्माभिः अज्ञानवृत्तिभिः स आनन्दम् अनुभवति।

## १७.१२) सुषुप्तिः

सुषुप्तिः गाढनिद्रा एव। सुषुप्तिर्नाम सर्वविषयज्ञानाभावः। जाग्रत्प्रपञ्चात् स्वप्नप्रपञ्चाच्च अत्यन्तं भिन्ना सुषुप्तिरियं ज्ञेया। स्थूलविषयाः सूक्ष्मविषयाश्च न सन्ति। तत्र विषायाणां भानमेव नास्ति। इन्द्रियाणां मनसश्चात्रोपरमः ज्ञेयः।

प्रबोधकाले जीवः स्थूलसूक्ष्मशरीरद्वारा, स्वप्ने च अन्तःकरणद्वारा स्वकर्मणा भोगान् अनुभूतवान्। अत्र जीवः अत्यन्तम् आयासमनुभूतवान्। यथा पक्षिणः वियदि बहुदूरम् उड्डयनं कृत्वा



आयासात् विश्रान्तिमुद्दिश्य स्वकीयं पञ्जरमुपगत्य प्रविशति। तथा जीवः अपि अन्यत्रावस्थाद्वये स्वकर्मणा आयासेन श्रान्तः सन् विश्रान्तये सुषुप्तिं प्राप्नोति। तथा च श्रुतिः-

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावति।** (बृह.भा. ४.३.१९)

पक्षिणः परिपतनश्रमम् अपनोतुं स्वनीडं प्रति यथा आगच्छति, तथा जाग्रदवस्थायां स्वप्नावस्थायाञ्च कार्यकरणसंयोगजक्रियाफलैः संयुज्यमानस्य श्रमो भवति। तादृशं श्रमं निवर्तयितुं एव जीवः स्वाश्रयस्थानं सुषुप्तिं गच्छति। सर्वसंसारधर्मविलक्षणः सर्वक्रियाकारकफलायासशून्यश्च यः आत्मा तमात्मानं प्रविशतीति तात्पर्यम्। स्वप्नाभावेन या निद्रा भवति सा एव सुषुप्तिर्जीवस्य। जाग्रत्स्वप्नयोः मनः चञ्चलं भवति। सुषुप्तौ तु निश्चलं भवति।

अत्यन्तम् आश्चर्यम् एतदवस्थायाः किमिति चेत् अपृष्ट्वा एव कस्यचित् सुषुप्तिकालीनः अनुभवः ज्ञातुं शक्यते। किन्तु जाग्रत्स्वप्नयोः तथा नास्ति। जाग्रत्काले स्वप्नकाले च किं किम् अनुभूतमिति पृष्ट्वा एव ज्ञातुं शक्यते। जाग्रत्काले रुग्णः कश्चन कथयति वैद्यम्- भो वैद्य मम पादे वेदनास्तीति तच्च विना कथनेन अवगन्तुं न शक्यते। अपृष्ट्वा वैद्यः स्वयं न कथयति- तव पादे वेदना अस्तीति। एवं ह्यः अहमेकं स्वप्नं दृष्टवानति श्रुत्वा कीदृशः स्वप्नः इति प्रश्नः भवति। व्याघ्रस्य इति समाधानम्। व्याघ्रेण किं कृतम् इत्येवं पौनःपुन्येन आकाङ्क्षया प्रश्नान् कृत्वैव अपरस्य स्वप्नानुभवः सम्यगवबुध्यते। ह्यः मया सम्यक् सुप्तम् इति श्रुत्वा स्वापः कथमासीत् तत्र किं किमनुभूतमित्यादिप्रश्नाः न क्रियन्ते केनचिदपि। सुषुप्त्यनुभवः अत्यन्तं सुखकरः इति सर्वे जानन्ति एव। कोऽपि विशेषः तत्र नास्ति।

**कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वाशयीत।** (बृ-२.१.१९)

सुषुप्तौ संसारो नास्ति। बालको वा स्त्री वा पुरुषो वा महाराजो दरिद्रो वेति भेदं विना सर्वेषामपि सुखमित्येकैवावस्था भवति। अत्रत्यः आनन्दः अतिघ्नी इत्यभिधीयते। यतः दुःखगन्धोऽपि नास्ति तत्र।

सुषुप्तिकालीनानुभवः कीदृश इति जिज्ञासायामुच्यते अज्ञानानन्दयोरनुभव इति। सुप्तोत्थितस्य पुरुषस्य वाक्यमस्ति- सुखेन सुप्तः न किञ्चिन्मया ज्ञातम् इति। अनेन सुप्तोत्थितस्य स्मृत्या अवगम्यते यत् तेन सुषुप्तौ सुखम् अज्ञानञ्च अनुभूतमिति। न अननुभूतस्य कस्यचित् स्मृतिर्भवितुमर्हति। सुप्तोत्थितस्य वाक्यं स्मृतिरेव भवति। स्मृतिश्च अनुभवजन्या इति सुप्तस्य अज्ञानानन्दयोरनुभवः आसीदिति स्वीकरणीयम्।

**सुप्तोत्थितस्य सौषुप्ततमो बोधो भवेत् स्मृतिः।**

**सा चावबुद्धविषयावबुद्धं तत्तदा तमः॥** (पञ्चदशी-१.५)

## १७.१३) कारणशरीरम्

अविद्या एव आत्मनः कारणशरीरं भवति। अस्य कारणशरीरस्य असाधारणी अवस्था भवति सुषुप्तिः। स्थूलस्य जाग्रत्कालभानवत् कारणशरीरस्य सुषुप्तौ एव सम्यक् भानमस्ति। अज्ञानस्य नाशः भवति ब्रह्मज्ञानेन। शरीरमपि नश्यति। अतः नाशसाम्यात् अज्ञानस्यापि शरीरमिति नाम। स्थूलसूक्ष्मप्रपञ्चकारणं भवतीति कारणत्वम्। जीवस्य स्वयं क इति ज्ञानं नास्ति। एतदेव जीवस्य अज्ञानम्। अस्माद् अज्ञानात् भ्रान्तिर्भवति। स्वयं स्थूलदेहः इति मनुते। ततश्च अहं पुरुषः भवामि स्त्री भवामि ब्राह्मणो भवामि इत्येवं मूढविचारं करोति। ततश्च रागद्वेषादिवशात् भिन्नं भिन्नं कर्म करोति। तेषां कर्मणां फलं स्वान्तःकरणेन युक्तं भवति। तस्य फलस्य उपभोगाय पुनः पुनः जन्म सम्भवति। प्रति जन्म सूक्ष्मशरीरस्यायतनाय स्थूलशरीरं स्वीकरोति। अस्य सर्वस्यापि कारणम् अज्ञानमेव भवति।

अज्ञानं समष्ट्यभिप्रायेण एकं भवति वनवत्। व्यष्ट्यभिप्रायेण अनेकञ्च भवति वृक्षवत्। व्यष्टिः विशेषः, समष्टिः सामान्यञ्च। वस्तुतः अज्ञानमेकं भवति। तच्च प्रति जीवं भिन्नं भिन्नमस्ति। जीवगतं नानात्वेन भासमानम् अज्ञानं समष्ट्यभिप्रायेण एकं भवति। समष्ट्यज्ञानोपहितं चैतन्यं भवति ईश्वरः। ईश्वरस्य इयं समष्टिः अखिलकारणत्वात् कारणशरीरं भवति। आकाशादयः अत्रैव उपरमन्ते इति महासुषुप्तिः अथवा प्रलयो भवति।

व्यष्ट्यभिप्रायेण अज्ञानमनेकमित्युक्तम्। व्यष्ट्यज्ञानोपहितं चैतन्यं भवति प्राज्ञः। अहङ्कारादीनां सुषुप्त्यवस्थायां संस्कारावशेषेण स्थितस्य कारणत्वात् इयं व्यष्टिः कारणशरीरं भवति। इह हि जाग्रत्प्रपञ्चः स्वप्नप्रपञ्चो वा न स्तः। सर्वेषां विषयाणामिह उपरमत्वात् सुषुप्तरिति नाम।

## १७.१४) सुषुप्तौ जगद्भानाभावः

जाग्रत्काले स्थूलप्रपञ्चः अस्ति। स्वप्नकाले सूक्ष्मप्रपञ्चः अस्ति। सुषुप्तिकाले प्रपञ्चः नास्ति। वेदान्ते मनसः अतिरिक्ता अविद्या नास्ति। अतः संसारबन्धकारणभूता अविद्या मन एव। मनसः सत्त्वे एव देहादौ अभिमानरूपः बन्धः भवति, मनसः असत्त्वे स बन्धो नास्ति। एवं मनसः अन्वयव्यतिरेकेण बन्धकारणत्वं सिद्धम्। स्वप्ने मनसः जागरणात् जाग्रद्वासनायुक्तमनसा विजृम्भितः प्रपञ्चः जीवेन अनुभूयते। स्वप्नवत् जाग्रत्यपि मन एव सर्वं सृजति। अतः सर्वमेतत् मनसः विजृम्भणमात्रमेव।

**स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या**
**भोक्त्रादि विश्वं मन एव सर्वम्।**
**तथैव जाग्रत्यपि नो विशेषः**
**तत्सर्वमेतन्मनसो विजृम्भणम्॥** (वि.चू. १७२)

सुषुप्तिकाले मनसः लयसम्भवात् मनःकारणभूतः जाग्रत्प्रपञ्चः स्वप्नप्रपञ्चो वा न स्तः। कारणाभावे कार्याभावात्। मनसः अस्तित्वं जाग्रति स्वप्ने चैव भवति। तदा एव प्रपञ्चानुभवश्च। अतः दृश्यमानः प्रपञ्चः मनसा कल्पित एव। सुषुप्तौ मनसः विलयात् विषयः नास्ति। सर्वेषां प्राणिनाम् अयमेक



एवानुभव अस्ति सुषुप्तौ 'न किञ्चदवेदिषम्' इति। मनसः सत्त्वात् स्वप्नजाग्रतोः संसारोपलब्धिः, मनसः असत्त्वात् सुषुप्तौ तदनुपलब्धिश्च।

**सुषुप्तिकाले मनसि प्रलीने**

**नैवास्ति किञ्चित्सकलप्रसिद्धेः।**

**अतो मनःकल्पित एव पुंसः**

**संसार एतस्य न वस्तुतोऽस्ति॥** (वि.चू. १७३)

जाग्रति स्थूलशरीरस्य भानं स्पष्टमस्ति। स्वप्ने सूक्ष्मशरीरस्य भानञ्च स्पष्टमस्ति। सुषुप्तौ तु कारणशरीरस्य भानमेवास्ति स्पष्टतया। अज्ञानमेव कारणशरीरं भवति।

**अव्यक्तमेतत्त्रिगुणैर्निरुक्तं**

**तत्कारणं नाम शरीरमात्मनः।** (वि.चू. १२२)

सुषुप्तिः प्रलीनसर्वेन्द्रियबुद्धिवृत्तिर्भवति। सर्वाणि इन्द्रियाणि बुद्धिः तद्वृत्तयश्च तत्र न सन्तीति तात्पर्यम्। तथापि वासनानां नाशस्तु नास्त्येव। वासना बीजरूपेण अवतिष्ठते। तस्मात् पुनः जाग्रत्स्वप्नयोः सृष्टिर्भवति। वासनानां नाशाभावादेव कारणशरीरत्वमस्य।



## पाठसारः

अत्र जीवात्मनः तिस्रः अवस्थाः प्रतिपादिताः। तथा च जाग्रदवस्था स्वप्नावस्था सुषुप्त्यवस्था च। जाग्रवदवस्थायां जीवस्य वैश्वानर इति नाम। स तदा स्थूलविषयान् अनुभवति। अतः स स्थूलभुक् भवति। बाह्यविषयेषु प्रवृत्तत्वात् बहिष्प्रज्ञश्च। स्वप्नावस्थायाम् अयं तैजसो भवति। तत्र सूक्ष्मविषयान् अनुभवतीति कारणात् स प्रविविक्तभुक् भवति। बाह्यप्रपञ्चानुभवाभावात् स अन्तःप्रज्ञः भवति। सुषुप्त्यवस्थायाम् आत्मनः प्राज्ञ इति नाम। तदा सः अज्ञानात्मककारणशरीराभिमानी भवति। तदा आनन्दमात्रमनुभवतीति स आनन्दभुक् भवति। जाग्रत्कालीनः स्थूलप्रपञ्चः स्वप्नकाले नास्ति। तथापि तद्वासनायुक्ताभिः मनोवृत्तिभिः सूक्ष्मप्रपञ्चस्य भानं भवति। प्रपञ्चद्वयमप्येतत् सुषुप्तौ नास्ति। तदा आत्मना सह एकीभूतो भवति प्राज्ञः। स्थूलात्मकस्य जाग्रत्प्रपञ्चस्य स्वप्नस्थस्य सूक्ष्मप्रपञ्चस्य च सुषुप्तौ लयः भवति। अतः सुषुप्तिः स्थूलसूक्ष्मप्रपञ्चलयस्थानमित्युच्यते। जाग्रति स्थूलशरीरस्य स्वप्ने लिङ्गशरीरस्य सुषुप्तौ कारणशरीरस्य च भानमस्ति।



## पाठान्तप्रश्नाः

१. स्वप्नः कः?

२. स्वप्नप्रपञ्चः कीदृशः?



३. तैजसः कः?

४. किं सूक्ष्मशरीरम्?

५. अन्तःकरणस्य चातुर्विध्यम् किम्?

६. पञ्च वायवः के?

७. प्राज्ञस्य स्वरूपं किम्?

८. सुषुप्त्यवस्थां वर्णयत?

९. किं कारणशरीरम्?

१०. सुषुप्तौ जगतः भानं कुतो नास्ति ?



## पाठगतप्रश्नानामुत्तराणि

१. वेदान्तो नाम उपनिषद्प्रमाणं तदुपाकारीणि शारीकसूत्रादीनि च।

२. द्विविधः

३. उपनिषत्

४. शङ्कराचार्यः

५. मध्वाचार्यः

६. रामानुजाचार्यः

७. जीवब्रह्मणोरैक्यम्

८. त्रीणि

९. तिस्रः

१०. अन्तःकरणावच्छिन्नं चैतन्यम्

११. इन्द्रियैः अर्थोपलब्धिः

१२. जाग्रति

१३. तत्र प्रमाणैः यो अर्थं प्रमिणोति स प्रमाता

१४. विश्वः तैजसः प्राज्ञ ईश्वर इति चत्वारः पादाः।

१५. वैश्वानरः

१६. स्थूलं सूक्ष्मं कारणम्

१७. स्थूलशरीरम्

॥ इति सप्तदशः पाठः ॥

# १८

# पञ्चकोशविवेकः

## प्रस्तावना

वेदान्तस्य अन्यतमः विभागोऽस्ति अद्वैतवेदान्तः। तस्य प्रवर्तको भवति शङ्कराचार्यः। अद्वैतवेदान्तस्य मर्मभूतः प्रतिपाद्यः विषयो भवति जीवात्मनः परमात्मनश्च ऐक्यम्। विषयश्चायं सुलभेन अवगन्तुं न शक्यते। यतश्च अत्यन्तं दुर्विज्ञेयो भवति आत्मविचारः। लोके सत्यवस्तु किमस्ति इत्यन्वेषणं भवति वेदान्तशास्त्रस्य। तद्विषये आगमशास्त्रमेव अन्त्यं प्रमाणं भवति। आगमश्च कथयति ब्रह्म एव सत्यमेकं वस्तु तदतिरिक्तं सर्वमपि असत्यमेवेति। तदुक्तं शङ्कराचार्यैः *ब्रह्म सत्यं जगन्मिथ्या* इदं तु वेदान्तशास्त्रस्य तात्पर्यमिति। ब्रह्म च अद्वैतं भवति तत्र द्वैतस्य स्थानमेव नास्ति। किन्तु प्रत्यक्षप्रतीत्या द्वैतस्यैव मुख्यं भानमस्ति। द्वैतं न वास्तविकं किन्तु कल्पितमिति बोधयितुं शास्त्रं प्रवर्तते। अज्ञानकल्पितभेदनिवृत्तिपरत्वात् शास्त्राणामिति आचार्यवचनम्। परमात्मतत्त्वस्य सुष्ठु बोधाय बहवः उपायाः स्वीकृताः वर्तन्ते। तेषु एक उपायो भवति पञ्चकोशकल्पनम्। अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते इति न्यायस्तत्राधारः।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- अध्यारोपस्वरूपम् अवगम्यते।
- अपवादस्य तात्पर्यमवगम्यते।
- आत्मानात्मविवेकज्ञानं लभ्यते।
- कति कोशाः सन्तीति ज्ञानं लभ्यते।
- अन्नमयादिकोशानां लक्षणानि अवगम्यन्ते।
- ब्रह्मणः सोपाधिकनिरुपाधिकभेदः अवगम्यते।
- अरुन्धतीनक्षत्रनिदर्शनेन ब्रह्मप्रतिपादनमवगम्यते।

## १८.१) अध्यारोपापवादौ

वस्तुनि अवस्त्वारोपः अध्यारोप इति लक्षणम्। यथा असर्पभूतायां रज्जौ सर्पस्य आरोपः। आरोपो नाम कल्पनम्। रज्जुं दृष्ट्वा रूपसाम्यात् सर्प इति ज्ञानं भवति। वस्तुतः तत्र रज्जुरेव वर्तते न



सर्पः। रज्जुः सर्पभ्रान्तेः अधिष्ठानं भवति। अधिष्ठानस्य रज्ज्वंशस्य अज्ञानमेव सर्पप्रतीतेः कारणम्। प्रकृतदृष्टान्ते वस्तु भवति रज्जुः अवस्तु भवति सर्पश्च। सिद्धान्ते च ब्रह्म वस्तु अज्ञानादिसकलजडसमूह अवस्तु च भवति। रज्जुं दृष्ट्वा सर्पस्य भ्रान्तिः यथा भवति तथैव सर्पं दृष्ट्वा रज्जुभ्रान्तिरपि भवेत्। साम्यं तत्र कारणमिति ज्ञेयम्। एवञ्च अध्यासः वस्तुनोः परस्परं भवत्येव। रज्जोः सर्पस्य इव शिरः नास्ति, लाङ्गूलमपि नास्ति। तथापि तदुभयमपि कल्प्यते रज्जौ। एवञ्च सर्पे ये ये धर्माः वर्तन्ते शिरस्त्वादयः ते रज्जौ कल्प्यन्ते। तत्र कारणं भवति अज्ञानम्।

**अज्ञानञ्च अनिर्वचनीयं त्रिगुणात्मकं ज्ञाननिवर्त्यञ्च** भवति। अज्ञानस्य निवृत्तिः ज्ञानेनैव भवति। सूर्योदये तमसः यथा बाधः भवति तथा ज्ञानोदये अज्ञानस्य नाशः भवति। इयं रज्जुरिति ज्ञानं यदा उदेति तदा अयं सर्प इति भ्रान्तिज्ञानस्य निवृत्तिर्भवति। तदा वास्तविकस्य रज्जुपदार्थस्य ज्ञानमुदेति। एतदेवापवाद इत्युच्यते। वस्तुविवर्तस्य अवस्तुनः वस्तुमात्रत्वावधारणम् अपवादः। सत्यवस्तु असत्यवस्तुरूपेण परिणतं तस्य असत्यवस्तुनः निरासः। दृष्टान्ते वस्तु आसीत् रज्जुः। सः असत्यभूतसर्पाकारेण परिणतः, तस्य असत्यवस्तुनः निरासः। सिद्धान्ते तु ब्रह्म जगादाकारेण प्रतीतं, प्रतीतस्य असत्यवस्तुनः जगतः निरासः। नेह नानास्ति किञ्चन इति श्रुत्या ब्रह्मणि नानाभूतद्वैतस्य निषेधः क्रियते।

कुत एवं कश्चन उपाय इति जिज्ञासा भवति। संसारबन्धनात् मुक्तिं सर्वे इच्छन्ति। मुक्तेस्तावदेक एव उपायः ब्रह्मज्ञानम्। पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति इति आत्मबोधे आचार्येणोक्तम्। ब्रह्मज्ञानं सुलभं नास्ति। तस्य निर्गुणत्वात् निर्धर्मकत्वाच्च कस्यापि प्रमाणस्य विषयो न भवति। अतः मुमुक्षूणां कृते ब्रह्मज्ञानसम्पादनमुद्दिश्य सविशेषब्रह्मज्ञानद्वारा निर्विशेषस्य ज्ञानं भवति। एवं क्रमशः मुमुक्षवः सत्यज्ञानानन्तलक्षणद्वारा यथार्थतत्त्वं प्रति नीयन्ते। तथा च प्रथमं ब्रह्मजिज्ञासायां बुद्धिगोचराय सविशेषमिति प्रतिपाद्य अन्ते तन्निषेधः क्रियते। अस्यैव क्रमस्य अध्यारोपापवादन्यायः इत्युच्यते।

यद्यपि सृष्टिस्थितिलयाः ब्रह्मण एव उत्पद्यन्ते वस्तुतः ते ब्रह्मस्वरूपे न सन्ति। तच्च अन्ते एव ज्ञातुं शक्यते। मोक्षमार्गस्य प्रथमसोपाने अध्यारोपकाले वस्तुस्थितिः नावगम्यते। ब्रह्म सृष्टिकर्ता इति ज्ञात्वा ततः कर्तृत्वनिषेधः कार्यः। साधारणमानवाः अज्ञानिनः ब्रह्मणः भिन्नं स्वतन्त्रं किञ्चिद्भवति जगदिति चिन्तयन्ति। तेषां कृते जगतो निमित्तोपादानकारणे ब्रह्म इति प्रतिपादनीयं भवति। एवं जगतः स्वतन्त्रसत्ता नास्ति ब्रह्मणि एव तस्य स्थितिर्भवतीति दृढावबोधः जायते। ततश्च निर्धर्मके ब्रह्मणि जगत्कर्तृत्वं नैव सम्भवति, कार्यकारणरहिते तस्मिन् जगत्कारणत्वं नैव सम्भवतीत्यादिभिः विचारैः कल्पितानां सर्वेषां निषेधद्वारा निर्विशिषब्रह्मावगतिः भवति।

एवञ्च बुद्धेः स्थैर्यसम्पादनद्वारा लक्ष्यप्राप्तिपर्यन्तं यत्किञ्चित् परिकल्पनं कृत्वा साक्षात्कृते लक्ष्ये परिकल्पितस्य निषेधः कार्यः। एतदेव अध्यापोपापवादयोः प्रयोजनम्। तथा च ब्रह्मस्वरूपावगतये वक्ष्यमाणाः पञ्चकोशाः अपि ब्रह्मणि कल्पिताः वर्तन्ते। ब्रह्म तत्र अधिष्ठानं, पञ्चकोशाः आरोपिताश्च। पञ्चस्वपि कोशेषु ब्रह्मत्वबुद्धिं प्रथमं प्रकल्प्य पुनस्तन्निरसनद्वारा यथार्थब्रह्मावगतिः भवति।

विषयस्य स्पष्टीकरणार्थम् अरुन्धतीनक्षत्रन्यायः उच्यते। विवाहानन्तरं रात्रिकाले स्वभार्यां बहिरानीय भर्ता अरुन्धतीनक्षत्रं प्रदर्शयति। अरुन्धतीनक्षत्रम् अत्यन्तं सूक्ष्मं भवति। अत एव तस्य दर्शनं



दुष्करमपि। भर्ता तु पूर्वं दृष्टवानस्ति। किन्तु भार्या तु पूर्वं न दृष्टवती। अतः अत्यन्तं सूक्ष्मभूतस्य अरुन्धतीनक्षत्रस्य दर्शनं न सुलभम्। तदर्थं भर्त्रा तत्र कश्चन उपायः कृतः। स च उपायः उच्यते। भर्ता स्वाङ्गुल्या आकाशं प्रदर्श्य कथयति भार्याम्, उपरि अत्यन्तं प्रकाशमानं स्थूलं यत् नक्षत्रं वर्तते तत् दृष्टं किल इति। दृष्टं तद्वा अरुन्धतीनक्षत्रमिति भार्या पृच्छति। तदा कथयति तन्न अरुन्धतीनक्षत्रमिति। तत्समीपे अन्यदेकं प्रकाशमानं लघुभूतं यत् वर्तते तदेव इति। तदपि मया दृष्टमिति भार्या कथयति। तत्र पुनः भर्तुः वचनमस्ति तन्न अरुन्धतीनक्षत्रमिति। तस्य समीपे यत् अत्यन्तं लघुभूतमस्ति तदेव इति। एवं स्थूलानि नक्षत्राणि प्रथमं प्रदर्श्य ततः लघुभूतानि प्रदर्श्य तदुत्तरम् अन्ते अत्यन्तं सूक्ष्मम् अरुन्धतीनक्षत्रं प्रदर्श्यते। एवं येषां नक्षत्राणां दर्शनं सुलभं भवति तेषां नक्षत्राणां प्रथमम् अरुन्धतीत्वेन परिचयं कृत्वा ततश्च एकैकस्य निरासं कृत्वा अन्ते मुख्यस्य अरुन्धतीनक्षस्य प्रदर्शनं क्रियते। तेन च अनेन उपायेन दुर्विज्ञेयमपि सुविज्ञेयमभवत्।

एवं दुर्विज्ञेयम् आत्मानं उपदेष्टुं शास्त्रम् अरुन्धतीनक्षत्रनिदर्शनवत् लोकबुद्धिम् अनुसरति। अन्नमयं शरीरम् आत्मा इति मूढाः चिन्तयन्ति। तदनुसारम् अन्नमयः आत्मा भवतीति प्रथमं बोधयति। अन्नमय आत्मा इति यदा मूढस्य बोधः भवति तदा तस्य निरासः क्रियते। तदुत्तरम् अन्नमयः नात्मा भवितुमर्हति, तदन्तः विद्यमानः प्राणमयकोश एव आत्मा इति बोधयति। तदुत्तरं प्राणमयः अपि नात्मा इत्युक्त्वा तदन्तः वर्तमानः मनोमय आत्मा इति बोधयति। ततश्च क्रमेण तदन्तः तदन्तः विद्यमानः विज्ञानमयः आनन्दमयश्च आत्मा इति बोधयति। अन्ते च एते पञ्चकोशाः अपि आत्मा भवितुं नार्हति इत्युक्त्वा यथार्थम् आत्मस्वरूपं उद्बोधयति। स च प्रकारः प्रपञ्च्यते अग्रे।



## पाठगतप्रश्नाः-१

१. वेदान्तस्य विषयः कः?

२. आत्मविषये अन्त्यं प्रमाणं किम्?

३. वेदान्तशास्त्रस्य तात्पर्यं किम्?

४. अध्यारोपापवादाभ्यां प्रपञ्च्यते कः?

५. अध्यारोपः कः ?

६. सर्पभ्रान्तेः अधिष्ठानं किम् ?

७. सिद्धान्ते वस्तु किम् ?

८. सिद्धान्ते अवस्तु किम् ?

९. किन्नाम अज्ञानम् ?

१०. अपवादः कः?

११. मुक्तेः एक एव उपायः कः?

१२. केन न्यायेन दुर्विज्ञेयस्य आत्मनः प्रतिपादनं क्रियते?



## १८.२) पञ्चकोशाः

अनात्मविषयेभ्यः आत्मस्वरूपं विवेचनीयमस्ति। तत्र नैके उपायाः सन्ति शास्त्रे। पूर्वस्मिन् पाठे तदर्थम् अवस्थात्रयविचारः शरीरत्रयविचारश्च कृतौ। इह तु पञ्चकोशविचारः क्रियते।

जीवस्य वास्तविकं रूपं ब्रह्म एव। सत्यज्ञानान्तम् अद्वितीयं वस्तु स्वशरीरे हृदयगुहायामेव अवगन्तव्यं भवति। यतः तस्य तत्रैवोपलब्धिरस्ति। तत्र गीतावचनं प्रमाणम्-

**ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिषठति।**

**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥** (भ.गी. १८.६१)

अत्रोक्तहृदयगुहां परितः पञ्चकोशाः सन्ति। तथा च अन्नमयकोशः प्राणमयकोशः मनोमयकोशः विज्ञानमयकोशः आनन्दमयकोशश्च। तदुक्तं पञ्चदश्याम्-

**अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्च ते।**

**कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत्॥** प.द. १.३३

अन्नं प्राणो मनो बुद्धिरानन्दश्चेति पञ्चकोशाः। बुद्धिरत्र विज्ञानं भवति। एतैः पञ्चभिः कौशैः आत्मा आवृतो वर्तते। आवृत इत्यस्य आवृत इव इति तात्पर्यम्, नतु वस्तुतः आवरणं तत्र विवक्षितम्। एवं आत्मा आवृत इति कारणात् स्वस्वरूपं अनवगम्य विस्मृत्या संसारी भवति जीवः। पञ्चकोशविषये तैत्तिरीयश्रुतिः प्रमाणमस्ति।

**तस्माद्वा एतत्स्मादन्नरसमयादन्योन्तर आत्मा प्राणमयः।**

**तस्माद्वा एतस्मात्प्राणमयादन्योन्तर आत्मा मनोमयः।**

**तस्माद्वा एतत्स्मान्मनोमयादन्योन्तर आत्मा विज्ञानमयः।**

**तस्माद्वा एतत्स्माद्विज्ञानमयादन्योन्तर आत्मा आनन्दमयः॥ इति।** (तै.उ.२.१-४)

विश्वस्य व्यष्टिस्थूलशरीरम् अन्नमयकोशो भवति। प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत् प्राणमयकोशो भवति। मनस्तु ज्ञानेन्द्रियैः सहितं मनोमयकोशो भवति। बुद्धिः ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशः। अविद्यापरिणामरूपा वृत्तिः आनन्दमयश्च। कोशवदाच्छादकत्वात् कोश इति नाम। लोके खड्गस्य कोशः यथा आच्छादयति तथैव अन्नमयादयः कोशा अपि आत्मानम् आच्छादयति।

यदा अन्नमयकोशे अभिमतः जीवस्य भवति तदा सः अन्नमायात्मा भवति। यदा प्राणमये अभिमानः तदा जीवः प्राणमय आत्मा भवति। एवं तत्तत्कोशेषु कल्पिताभिमानात् मनोमायात्मा विज्ञानमयात्मा आनन्दमयात्मा च भवति जीवः।



### १८.२.१) अन्नमयकोशः

शरीरत्रयं भवति कारणशरीरम्, सूक्ष्मशरीरम्, स्थूलशरीरं च। एतेषु स्थूलशरीरम् अन्नमयकोश इत्युच्यते। पञ्चीकृतभूतेभ्यः उत्पन्नः स्थूलदेह एव आन्नमयकोशः भवति। पञ्चीकृतस्थूलोत्थः देहो अन्नसंज्ञिक इति पञ्चदशीकारः। शरीरम् अन्नस्य विकारः भवति। अतः अन्नविकारत्वात् अन्नमयः। स्थूलभोगस्य आयतनं भवतीति कारणात् स्थूलशरीरमपि भवति। मातृपितृभुक्तात् अन्नविकारात् उत्पद्यते। ततश्च स्वेन भुक्तेन अन्नेन शरीरस्य स्थितिर्भवति। यदि अन्नं नास्ति तर्हि शरीरस्य नाशः भवति। अतः अन्नमयः इति शरीरस्य नाम अन्वर्थ एव।

अन्नमयेकोशे तन्मयो भूत्वा जीवः संसरति। अहं स्थूलः अहं कृशः सुन्दरः इत्येवं भ्रान्तिग्रस्तः भवति। अहं शब्दस्य आत्मेति अर्थः भवति। एवञ्च अहं स्थूलः इत्यस्य आत्मनः स्थूलत्वं बुद्ध्यते। अथवा स्थूलत्वं कृत्वं सौन्दर्यमित्यादिधर्माः आत्मनः इति चिन्तयन्ति। वस्तुतः स्थूलत्वादिधर्माः देहस्यैव नतु आत्मनः। शरीरस्य क्लेशः आत्मनः इति विचिन्त्य दुःखमनुभवति।

### १८.२.२) प्राणमयकोशः

अथ प्राणमयकोशः निरूप्यते। सप्तदशावयवोपेतं सूक्ष्मशरीरमधिकृत्य पूर्वं विचारितम्। तत्र प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत् प्राणमयकोशो भवति। वृत्तिभेदेन पञ्चप्राणाः। प्राणः अपानः व्यानः उदानः समानश्च। एवं कर्मेन्द्रियाणि पञ्च वाक् पाणि पाद पायु उपस्थभेदेन। एवं दशांशानां समूहः प्राणमयकोशः। अन्नमयकोशः अत्यन्तं स्थूलः भवति। तावान् स्थूलः न भवति प्राणमयकोशः। किन्तु अत्यन्तं सूक्ष्म इत्यपि वक्तुं न शक्यते। अन्नमयापेक्षया किञ्चित् सूक्ष्मं भवति।

### १८.२.३) मनोमयकोशः

अथ मनोमयकोशो निरूप्यते। तृतीयः भवति अयं कोशः। मनस्तु ज्ञानेन्द्रियैः सहितं मनोमयकोशो भवति। पञ्चज्ञानेन्द्रियाणि मनश्च मिलित्वा षडंशेन मनोमयकोशो भवति। एवं श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणं तथा मनश्च मनोमयकोशे अन्तर्भवति। तथापि श्रोत्रमयः चक्षुर्मय इति कोशस्य नाम नास्ति। तत्र कारणं भवति। सर्वेषामपि इन्द्रियाणां मनः अध्यक्षः भवति। मनोधीनतया एव इन्द्रियाणां प्रवृत्तिः। श्रोत्रेन्द्रियं स्वतन्त्रतया शब्दं ग्रहीतुं न समर्थम्। मनसः साहाय्यं तत्रापेक्षते। एवं चक्षुः मनसा विना रूपं न गृह्णाति। एवं सर्वत्र मनोधीनतया एव इन्द्रियाणां विषयग्रहणमस्ति। इत्थं मनसः इन्द्रियापेक्षया प्रधानत्वात् मनोमयकोश इति नाम। इन्द्रियाभावेपि स्वप्ने मनसः प्रवृत्तिरस्ति। सङ्कल्पविकल्पे मनसः विषयौ स्तः। देहेन्द्रियादिषु गेहादिषु च अहन्तां ममतां च मन एव उत्पादयति।

शब्दार्थव्यतिरिक्तः प्रपञ्चो नास्ति। अत एव प्रपञ्चः मनसि वर्तते। बन्धस्य मोक्षस्य च मनोधीनत्वं वर्तते। एवम् अन्नमयस्य प्राणमयस्य च ज्ञानशक्त्यभावात् ततो बलिष्ठत्वमपि अस्ति।

मनसः अतिरिक्ता काचिदविद्या नास्ति। मनः अविद्यायाः कार्यमस्ति। अतः संसारबन्धहेतुः मन एव। मनः बन्धस्य कारणमित्युक्तम्। मनः अस्ति चेदेव देहादिषु अभिमानरूपबन्धः भवति। मनः नास्ति



चेत् तदभिमानं नास्ति। एवं मनसः बन्धकारणत्वं सिद्धम्। मनसि विनष्टे सर्वं विनष्टं भवति। सुषुप्तौ मनोभावात् जगतः प्रतीतिरेव नास्ति।

**स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या**

**भोक्त्रादि विश्वं मन एव सर्वम्। वि.चू. १७२**

सुषुप्तिकाले मनसः लयः भवतीत्युक्तम्। अत एव जगतः भानमपि नास्ति। सुषुप्त्युत्थितस्य स्मृतिरप्यस्ति प्रमाणतया। न किञ्चिदवेदिषमिति। अतः संसारः मनःकल्पित एव। मनःकल्पितस्य संसारस्य वास्तविकता नास्ति स्वप्नवत्।

**सुषुप्तिकाले मनसि प्रलीने**

**नैवास्ति किञ्चित्सकलप्रसिद्धेः॥ वि.चू.१७३**

### मनसः बन्धमोक्षकारणत्वम्

मन एव कारणं मनुष्याणां बन्धमोक्षयोः। वायुना आनीयते मेघः तथैव लीयते च पुनः। एवं मनसा बन्धः आनीयते। ततः मनसा तस्य निरासश्च क्रियते। येन मनसा बन्धः कल्प्यते मोक्षः तेनैव कल्प्यते। उदाहरणेन स्पष्टं भवति। पशुः रज्ज्वा बद्धो भवति। अतः पशोः बन्धहेतुर्भवति रज्जुः। यया रज्ज्वा पशोः बन्धः जातः तयैव मोचनमपि भवितुमर्हति। रज्ज्वाः विमोचनेन पशुरपि मोचितो भवति। एवमेव मनः पुरुषे दृढं रागं जनयित्वा पुरुषं बध्नाति। रागपाशेन पुरुषं बध्नातीत्यर्थः। अस्य रागपाशस्य अयं स्वभावः देहादिषु विषयेषु रागम् उत्पादयतीति। अतः राग एव पाशः रागपाश इति ज्ञातव्यम्। एवं रागपाशेन बन्धः यस्य पुरुषस्य अभवत् सः विषयाधीनतया जीवति। रागपाशेन बन्धकारणं मनः यथा भवति तथा रागपाशस्य मोचनार्थमपि मनसः कारुण्यमपेक्षते। तदर्थं विषयेभ्यः मनसः विरक्तिः अपेक्षते। विरक्तिश्च नित्यानित्यवस्तुविवेकज्ञानेन भवति। विवेकश्च मनसा भवति। रागजननद्वारा मनः बन्धस्य कारणं तथा वैराग्यजननद्वारा मोक्षकारणञ्च भवतीति तात्पर्यम्। एवं बन्धनकारणं मोचनकारणमपि मन एव इति सिद्धम्।

**तस्मान्मनः कारणमस्य जन्तोर्**

**बन्धस्य मोक्षस्य च वा विधाने॥ वि.चू.१७६**

मनः कथं बन्धस्य मोक्षस्य च कारणं भवति। अशुद्धं मनः बन्धस्य कारणं भवति। शुद्धं मनः मोक्षस्य कारणञ्च भवति। मलिनं मन एव अशुद्धमित्युच्यते। त्रयः गुणाः सन्ति। सत्त्वगुणः रजोगुणः तमोगुणश्च। तत्र रजोगुणेन तमोगुणेन च सहितं यदा भवति मनः तदा अशुद्धं भवति। रजोस्तमोभ्यां रहितं यदा मनः भवति अथवा सत्त्वमात्रगुणयुक्तं भवति तदा शुद्धं भवति। एवं रजसा तमसा च नितरां रहितं मनः मोक्षस्य हेतुर्भवति। एवं मनसः एकत्वेपि गुणभेदेन विरुद्धयोः बन्धमोक्षयोश्च कारणं भवतीति स्पष्टम्।

### मनसः शुद्धिसम्पादनम्

शुद्धं मनः मोक्षस्य हेतुर्भवतीत्यक्तम्। कथं मनसः शुद्धिः सम्पादयितुं शक्यतेति चिन्त्यते। विवेकवैराग्याभ्यां मनः शुद्धं भवति। विवेको नाम अयमात्मा भवति अयमात्मा न भवतीति विवेचनज्ञानम्। आत्मानात्मविवेक इति तात्पर्यम्। अज्ञानादि सकलजडसमूहः अनात्मा भवति। आत्मा च



सच्चिदानन्दस्वरूपञ्च। सुखस्य प्राप्तिः आत्मनि एव वर्तते। आत्मभिन्नेषु वस्तुषु सुखं नास्ति दुःखमेव वर्तते। एवं यस्य बुद्धिरुद्पद्यते शास्त्राचार्योपदेशात्। तदा दुःखजनकेषु अनात्मसु तस्य विरक्तिर्भवति। विरक्तः पुनः देहादिविषयेषु रागं नोत्पादयति। एतदेव वैराग्यम्। एवं विवेकवैराग्याभ्यां मनः अन्तर्मुखं भवति। तेन च मनसः शान्तिः लभ्यते। एवं मनसः शुद्धिं सम्पाद्य प्रशान्तचित्तः सन् संसारात् मुक्तो भवेत्।

**विवेकवैराग्यगुणातिरेका-**

**च्छुद्धत्वमासाद्य मनो विमुक्त्यै।**

**भवत्यतो बुद्धिमतो मुमुक्षो-**

**स्ताभ्यां दृढाभ्यां भवितव्यमग्रे॥** वि.चू. १७७

विषयाः यदि अरण्यमिति स्वीकुर्मः। तर्हि मनः तत्र व्याघ्रः भवति। व्याघ्रात् मरणभयात् जनाः यथा अरण्यं न प्रविशन्ति तथा साधवः मोक्षं कामयमानाः मनोव्याघ्रभयात् विषयारण्यं न प्रविशेयुः। विषयं प्रति गमनं मनसः स्वभावः।

## १८.२.४) विज्ञानमयकोशः

अयं चतुर्थः कोशः। बुद्धिः ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशः। तदुक्तं विवेकचूडामणौ

**बुद्धिर्बुद्धीन्द्रियैः सार्धं सवृत्तिः कर्तृलक्षणः**

**विज्ञानमयकोशः स्यात्पुंसः संसारकारणम्॥** १८६

कोशेऽस्मिन् बुद्धिः प्रधानम् भवति। निश्चयात्मिका अन्तःकरणवृत्तिर्भवति बुद्धिः। एवं बुद्धेः विषयः निश्चयः। कर्तृलक्षणः अयं कोशः। अहं कर्ता इति कर्तृत्वाभिमानः बुद्धेः कार्यं भवति। कर्तृत्वं तु ज्ञानेच्छाकृतिमत्त्वम्। घटं निर्मातुं कुलालः इच्छति। केवलम् इच्छया घटः न उत्पद्यते। तत्र ज्ञानमपेक्षते। घटनिर्माणार्थं यद्यत् अपेक्षते एवं कथं निर्मातव्यं इत्येतत् सर्वमपि ज्ञातव्यम्। मृत् तत्र उपादानकारणं भवति। चक्रभ्रमणद्वारा घटः निर्मातव्यः। तस्य आकारः पृथुबुध्नोदरविशिष्टः स्यात्। एवं ज्ञानस्य स्थितिः। कृतिः प्रयत्नः।

मनः अन्तःकरणं भवति बुद्धिश्च। मनसः करणत्वं बुद्धेः कर्तृत्वञ्च इति विवेकः। विचारानन्तरं हि पुरुषस्य प्रवृत्तिः। एवं पूर्वापरीभाववत्वेन मनोबुद्ध्योः बहिरन्तर्भाव इति मनोमयानन्तरं हि विज्ञानमयस्य कथनम्। तस्माद्वा एतस्माद् मनोमयादन्योन्तर आत्मा विज्ञानमयः इति तैत्तिरीया श्रुतिरेव तत्र प्रमाणम्। परमात्मचैतन्यं बुद्धौ प्रतिबिम्बते। तदा स प्रतिबिम्बः जीव इत्युच्यते। एवं बुद्धिः परमात्मनः दर्पणमिव भवति। दर्पणं यदा अस्ति तदा एव प्रतिबिम्बः। दर्पणाभावे प्रतिबिम्बोपि नास्ति। सुषुप्तिकाले बुद्धिः नास्ति। अतः बुद्धिरूपदर्पणाभावात् जीवोपि नास्ति। तस्य परमात्मनि लयसम्भवात्। अत उच्यते बुद्धिः जीवमनुगच्छतीति। अनुव्रजच्चित्प्रतिबिम्बशक्तिः इति विवेकचूडामणौ। विशेषज्ञानं प्रति कारणं भवतीत्यतः बुद्धेः विज्ञानमयत्वम्। परमार्थं यत् ज्ञानमस्ति तस्मात् अन्यत् भवतीदं विज्ञानम्। मूलप्रकृतेः अवद्यायाः परिणामो भवत्ययम्। अविद्या त्रिगुणात्मिका। किन्तु अविद्यागतसत्त्वगुणस्य परिणामो भवति बुद्धिः। अत



एव निर्मला च भवति। एवं निर्मलत्वादेव दर्पण इव परमात्मनः प्रतिबिम्बः अत्र भवति। प्रतिबिम्बस्तु स्वच्छे पदार्थे खलु भवति। बिम्बगतधर्मेषु केचित् प्रतिबिम्बे अपि भवति। अत एव चित्प्रतिबिम्बभूतेन जीवेन किञ्चिदिव अवगन्तुं शक्यते। अहं स्थूलः कृशः इत्यादितादात्म्याभिमानात् अस्य ज्ञानत्वम्।

इतश्च तस्य क्रियात्वमुपपादयति। अविद्यायाः विकारः भवतीत्युक्तम्। तर्हि अविद्यावत् बुद्धेः अनादित्वम् अस्ति वेति संशयः। अस्तीति समाधानम्। पुर्वकृतकर्मवासनायाः आश्रयो भवति बुद्धिः। तादृशबुद्धेः नाशे कर्मानुगुणा सृष्टः नैव सम्भवति। आविदेहकैवल्यं संसारकारणभूतायाः बुद्धेः अनादित्वम् अवश्यं वक्तव्यम्। विज्ञानमयः सर्वव्यवहारेषु लोकिकेषु वैदिकेषु च कर्ता भवति। अस्यैव भवन्ति जाग्रतस्वप्नसुषुप्त्यवस्थाः समाधिश्च। स्वकर्मानुसारेण अयं संसरति।

विज्ञानमयः आत्मनः अत्यन्तं समीपं वर्तते। अतः अत्यन्तं प्रकाशमानः भवति। स्वयं जडश्चेदपि आत्मप्रतिबिम्बसम्भवात् चेतन इव प्रतीयते। देहादीनां भवति आश्रमधर्माः तदनुगुणकर्माणि च। किन्तु विज्ञानमयः तत्सर्वम् अहन्ताममताचिन्तया स्वीयमिति चिन्तयति। ततः कर्ता भोक्ता च भवति। एवमेव अस्य संसारदुःखं भवति। लौहित्यं स्फटिकस्य धर्मः नास्ति। तथापि लोहितः स्फटिक इति व्यवहारः अस्ति। तत्र कारणं हि स्फटिकस्य समीपे लोहितं पुष्पं वर्तते। एवञ्च पुष्पे रक्तिमा अस्ति। रक्तिमा पुष्पस्य धर्मः। तथापि समीप्यात् पुष्पस्य रक्तिमा स्फटिके प्रतिबम्बते। जनाः स्फटिके प्रतीयमानः रक्तिमा पुष्पस्य भवतीत्यज्ञात्वा अविवेकेन लोहतः स्फटिकः इति कथयन्ति। तथैव अहं कर्ता भोक्ता इति सर्वेषां व्यवहारः अस्ति। अथवा अहं ब्रह्मचारी अहं सन्यासी इति। अहंपदेन आत्मा विविक्षतः। एवञ्च कर्तृत्वभोक्तृत्वादिधर्माः आत्मनः भवन्तीति अविवेकिनः चिन्तयन्ति। तत्र कारणं भवति उपाधिसामीप्यम्। यथा पुष्पसामीप्यं स्फटिकस्य। प्रकृते आत्मनः उपाधिर्भवति बुद्धिः। एवं बुद्धिसामीप्यात् बुद्धिगतान् कर्तृत्वभोक्तृत्वादिधर्मान् आत्मनि आरोप्य अहं कर्ता अहं भोक्ता इत्येवं तादात्म्याभिमानात् चिन्तयन्ति। पुष्पस्य अपनयने स्फटिकस्य लौहित्यमपि अपगच्छति। तद्वत् बुद्ध्युपाधिनाशे तद्गताः कर्तृत्वादिधर्माः अपि बाध्यन्ते। तदुक्तं विवेकचूडामणौ-

**कूटस्थः सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः इति।** (१९१)

**उपाधिसम्बन्धवशात् परात्माप्युपाधिधर्माननुभाति तत्गुणः।** (१९३)

परमात्मनः जीवभावः उपाधिना भवतीत्युक्तम्। उपाधिश्च विज्ञानमयकोशः अनादिर्भवति। अनादेः नाशः नास्ति। तर्हि आत्मनः जीवभावोऽपि न नश्यति । तेन च जीवस्य न मोक्षश्च इति संदेहः स्यात्। अत्रोच्यते एतत्सर्वं भ्रान्त्या कल्पितं वर्तते। अतः न वास्तविकम्। विना भ्रान्तिम् असङ्गस्य निष्क्रियस्य निराकारस्य च आत्मनः विषयसम्बन्धः नैव भवति। एवं बुद्धितादात्म्यात् भ्रान्त्या प्राप्तः आत्मनः जीवभावः। अतः भ्रान्तिबाधे जीवत्वमपि बाध्यते। यावत्कालं भ्रान्तिः अवतिष्टते तावत्कालमेव जीवभावस्य सत्ता। यथा भ्रान्तिकाले एव रज्जौ प्रतीतस्य सर्पस्य सत्ता। भ्रान्तिनाशे सति रज्जौ कल्पितं सर्पत्वमपि नश्यति। अविद्याकार्यस्य अनादित्वे अपि विद्यायाः उदये सूर्योदये तमस इव अस्तमयो भवति। स्वप्ने यद्यत् दृष्टं तत्सर्वमपि प्रबोधे समूलं नश्यति। आत्मनः बुद्धिसम्बन्धः अविद्यानिमित्तः। सम्यग्ज्ञाने सति सा अविद्या नश्यति। सम्यग्ज्ञानं नाम ब्रह्मैकत्वज्ञानम्। अहं स्वम् आत्मा इति ज्ञानम्। तच्च ज्ञानं कथं उत्पद्यते इति चेत् आत्मानात्मविवेकेन इति ज्ञेयम्।



पङ्कसंयुक्तं जलं यथा स्पष्टं न प्रकाशते तथा आत्मा अपि उपाधियुक्तं सत् स्पष्टं न प्रकाशते। पङ्कापनयने सति जलं स्वयमेव शुद्धं भवति तथा उपाध्यपनयने सति आत्मा शुद्धतया अभिव्यज्यते।

### १८.२.५) आनन्दमयकोशः

कारणशरीरस्य भानं सुषुप्त्यवस्थायां भवतीत्युक्तम्। अविद्यात्मकं कारणशरीरमित्यर्थः। अविद्यायां त्रयः गुणाः सन्ति। सत्त्वगुणः रजोगुणः तमोगुणश्च। अविद्यायां रजोगुणेन तमोगुणेन च युक्तः भवति सत्त्वगुणः। अत एव सत्त्वगुणस्य अविशुद्धता भवति। सत्त्वगुणस्य शुद्धिः विनष्टा भवतीत्यर्थः। एवंविधः मलिनं यत् सत्त्वमस्ति तदेव आनन्दमयकोशः भवति। तस्य पुनः अस्ति वृत्तित्रयम्। प्रियं मोदः प्रमोदश्च।

इष्टवस्तुदर्शनजन्यं सुखं प्रियम्। तल्लाभे मोदः। तद्भोगे प्रमोदश्च भवति। अभीष्टवस्तुदर्शने या वृत्तिः उदेति सा प्रियमिति व्यवह्रियते। इष्टवस्तुनः दर्शनानन्तरं यदा तस्य प्राप्तिर्भवति तदा जायमाना वृत्तिः मोद इति कथ्यते। वस्तुनः दर्शनमभवत्। तस्य प्राप्तिरपि जाता। ततश्च तदनुभवः यदा भवति तदा जायमाना वृत्तिः प्रमोद इत्युच्यते। एवंविधैः त्रिभिः वृत्तिभिः आनन्दमयकोशस्य प्रसिद्धिर्भवति।

सुषुप्तौ आनन्दमयस्य सम्यक् स्फुरणं भवति। आनन्दानुभवः सम्यगस्तीत्यभिप्रायः। अज्ञानेनावृतमिति कारणात् सुषुप्तिकालीनः आनन्दः न मुख्यः। स्वप्नजागरणयोः आनन्दस्य अल्पमेव स्फुरणं भवति। सच आनन्दः प्रियमोदप्रमोदैः अनुभूयते।



## पाठगतप्रश्नाः-२

१३. कति कोशाः सन्ति?

१४. पञ्चकोशाः के ?

१५. प्रथमः कोशः कः ?

१६. ईश्वरः सर्वभूतानां कुत्र तिष्ठति?

१७. पञ्चभिः कोशैः कः आवृतो भवति ?

१८. अन्नरसमयादन्योन्तर आत्मा कः ?

१९. अन्नमयकोशः कः ?

२०. प्राणमयकोशः कः ?

२१. मनोमयकोशः कः ?

२२. विज्ञानमयकोशः कः?

२३. आनन्दमयकोशः कः?

२४. कोश इति नाम कथं युज्यते?

२५. अन्नमयकोशे तन्मयो भूत्वा कः संसरति?



२६. वृत्तभेदेन प्राणाः कति ?

२७. मनोमयकोशे कति अंशाः सन्ति ?

२८. गेहादिषु च अहन्तां ममतां च उत्पदयति कः?

२९. मनः कस्याः कार्यम् ?

३०. मनःकल्पित एव कः ?

३१. मन एव कारणं मनुष्याणां कयोः ?

३२. वैराग्यजननद्वारा मोक्षकारणं किम् ?

३३. रागजननद्वारा बन्धकारणं किम् ?

३४. विवेकवैराग्याभ्यां कम् शुद्धं भवति?

३५. निश्चयात्मिका अन्तःकरणवृत्तिः का ?

३६. कर्तृलक्षणः अयं कोशः, कः ?

३७. अविद्यागतसत्त्वगुणस्य परिणामो भवति का ?

३८. परमात्मनः जीवभावः केन भवति ?

३९. अविद्यायां कति गुणाः सन्ति?

४०. त्रयः गुणाः के?

४१. आनन्दमयकोशस्य वृत्तित्रयं किम् ?

४२. इष्टवस्तुदर्शनजन्यं सुखं किम्?

४३. मोदः कदा भवति ?

४४. आनन्दमयस्य सम्यक् स्फुरणं भवति कदा ?

## १८.३) अनात्मसु आत्मत्वबुद्धिः

अन्नमयादयः कोशाः भवन्ति। तेषां जीवबोधकत्वं कथमिति शङ्का स्यात्। नायं दोषः तादात्म्यात्। अन्नमयादीनां कोशपरत्वेपि तैः तादात्म्याध्यासात् तत्तन्मयो भवति। कोशेषु अभिमानात् स्वयं जीवः तत्तत्कोश इति मनुते। एवम् अन्नमये कोशे अभिमानात् स्वयं स्थूलशरीरमिति मनुते। व्यवहारकाले अन्नमयादीनां कोशानां प्राधान्यमस्ति। अतः अन्नमयादि शब्दवाच्यत्वं जीवस्य। तत्तन्मयत्वादेव जीवस्य बन्धः। तदुक्तं पञ्चदश्याम्

**तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत्। प.द. १.३६**

जीवः स्वरुपं परमात्मानं विस्मृत्य देहादिषु आत्मत्वबुद्धिं कल्पयति। यद्यपि जीवः स्थूलदेहादिभ्यः अथवा पञ्चकोशेभ्यः अत्यन्तं भिन्नः भवति। तथापि ते च स्वीयं स्वरूपमिति चिन्तयन्ति। यथा वा लोके दशजनाः नदीं तीर्त्वा ग्रामान्तरं प्राप्य दशजानाः अपि सन्तीति निर्णयार्थं समारब्धगणनायां गणनकर्ता आत्मानं दशमं विहाय अन्यत्र दशमम् अन्विषते। तथैव जीवः वास्तविकम् आत्मानं परित्यज्य



आत्मभिन्नेषु अनात्मभूतेषु कोशेषु आत्मानं अन्विषते। अविद्यया पञ्चकोशेभ्यः अहम् अभिन्न एव इति मनुते। अन्नमयाद्यनात्मभ्यः नान्योऽहमस्मीति अभिमन्यते। एवं स्वयं ब्रह्म भवति चेदपि स्वेन ब्रह्म अप्राप्तं भवति। एवमविद्यया अप्राप्तं यत् ब्रह्मस्वरूपमस्ति तस्य प्राप्तिस्तु भवति विद्यया। विद्या च आचार्योपेदेशात्।

## १८.४) पञ्चकोशविवेकः

अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते इत्युक्तमादौ। एतावता पञ्चकोशानां प्रतिपादनेन आत्मनि अनात्मभूतानां अन्नमयादिकोशानां अध्यारोपः अभवत्। अथ अपवाद आरभ्यते। अपवादश्च निरासः। आत्मनि कल्पितानां अतद्धर्माणां निरासः। तेन च आत्मस्वरूपस्य भानं भवति।

सर्वत्र सर्वेषु आत्मा वर्तते। किन्तु सुलभेन तस्य प्राप्तिः कस्यापि नास्ति। तत्र कारणं भवति आत्मा गूढरूपेण वर्तते। गूढत्वं नाम आच्छाद्यत्वम्। पञ्चकोशैः आत्मा आवृतो वर्तते इति आशयः। ब्रह्म च गुहाहितं भवति। गुहा च पञ्चकोशैः निर्मिता। तैरावृत्य वर्तते निर्गुणं ब्रह्म। प्रथमं अन्नमयकोशः तदन्तः प्राणमयकोशः तदन्तः मनोमयकोशः तदन्तः विज्ञानमयकोशः तदन्तश्च आनन्दमयकोशश्च। एवं आनन्दमयादपि अभ्यन्तरे यो वर्तते स आत्मा। एवं गुहाहितत्वं ज्ञेयम्। गुहाहितस्य ज्ञानं पञ्चकोशविवेकज्ञानेनैव भवति। नायमात्मा अन्नममयेकोशः, नायमात्मा प्राणमयकोशः, नायं मनोमयकोशः, नायं विज्ञानमयः, नायम् आनन्दमयश्च इति आत्मानात्मविवेकः कर्तव्यः। एवं पञ्चकोशानाम् अपवादं कृत्वा हेयोपादेयरहितं यत् ज्ञायते तदेव ब्रह्म इति बुध्यते।

### १८.४.१) अन्नमयस्य आत्मत्वनिरासः

स्थूलदेहः खलु अन्नमयकोशः। देहस्य वृद्धिः क्षयश्च भवतः अन्नविकारत्वात्। तदुभयमपि आत्मनो नास्ति। अतः देहः नात्मा। देहः जन्मनः प्राक् नास्ति मरणादूर्ध्वञ्च नास्ति। आत्मा तु सर्वदा अस्ति। अन्नविकारत्वात् अन्नस्य कार्यं भवति अन्नममयेकोशः। आत्मनः कार्यं कारणं वा न स्तः। एवं क्षणिकत्वादिधर्मविशिष्टः अन्नमयकोशः नित्यत्वादिधर्मलक्षितलक्षणः आत्मा नैव भवति। तदुक्तं पञ्चदश्याम्

**पितृभुक्तान्नजाद्वीर्याज्जातोन्नेनैव वर्धते।**
**देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः॥ प.द. ३.३**

शरीरस्य गुणः क्षणे क्षणे भिद्यते। अस्य नियतः स्वभावः नास्ति। एकरूपेण न व्यवस्थित इति तात्पर्यम्। एकस्मिन्नपि जन्मनि बाल्यकौमाराद्यवस्थासु अपि शरीरं भिन्नत्वेन ज्ञायते। बालकस्य शरीरं भिन्नमस्ति। तदपेक्षया कुमारस्य शरीरं भिन्नमस्ति। वार्धक्ये बाल्याद् कौमाराच्च शरीरम् अत्यन्तं भिन्नमस्ति। बाल्यकाले कोमलं सुन्दरञ्च गात्रं भवति। यौवनकालेपि सुन्दरं दृढञ्च भवति। किन्तु वार्धक्ये शरीरं सुन्दरं नास्ति। अपि च यौवनादिकाले यावत् बलमासीत् तावत् बलमपि न भविष्यति वार्धक्ये। अत्यन्तं दुर्बलं भवति। एतासु अवस्थासु शरीरस्य वृद्धिर्भवति क्षयश्च भवति। एवं आत्मा नैव भवति। आत्मनः अवयवाः न सन्ति। अतः गुणः दोषो वा न स्तः। अत एव शरीरवत् वृद्धिर्वा क्षयो वा न स्तः। शरीरं जडमस्ति। आत्मा तु चेतनः भवति।



घटपटादीनां चक्षुषा दर्शनं त्वचा स्पर्शनंञ्च भवति। एवं शरीरस्यापि स्पष्टं दर्शनमस्ति स्पर्शनञ्च। आत्मा चक्षुषा द्रष्टुं न शक्यते। तस्य रूपाभावात्। यतः चक्षुषः विषयो भवति रूपम्। त्वगिन्द्रियस्य विषयो भवति स्पर्शः। तदभावात् आत्मनः स्पर्शनमपि कर्तुं न शक्यते। एवं गन्धाद्यभावावात् इतरेन्द्रियाणामपि तत्र प्रवेशो नास्ति।

पादहस्तादयः स्थूलशरीरस्य अवयवाः भवन्ति। पादः नात्मा। पादाभावेपि कश्चन जीवति। एवं हस्ताभावेपि जीवति। विकलाङ्गजनाः जीवन्तीति अस्माकं प्रत्यक्षमस्ति। अतः अवयवेषु आत्मत्वबुद्धिः भ्रान्तिमात्रा एव। एतेषां स्वकर्मकरणे शक्तिप्रदायको भवत्यात्मा। आत्मा शरीरेन्द्रियाणां नियामको अस्ति चेतनत्वात्। शरीरञ्च नियम्यञ्च जडत्वात्। न खलु नियम्यनियामकयोरभेदः। आत्मा न पादः। पादस्य पादः भवति। पादस्य गमनार्थं शक्तिप्रदायक इति तात्पर्यम्। एवं हस्तस्य हस्तो भवत्यात्मा।

**पाणिपादादिमान् देहो नात्मा व्यङ्गेऽपि जीवनात्।**

**तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः॥ वि.चू.१५८**

देहः देहधर्माः देहस्य कर्माणि देहसम्बद्धाः अवस्थाश्च एतेषां सर्वेषामपि साक्षी भवत्यात्मा। जननं देहस्य धर्मः। मरणं देहस्य धर्मः। बाल्ययौवनादिकं देहस्य धर्मः। गमनागमनादिकं देहस्य धर्मः। अहं स्थूलः अस्मि, अहं कृशः अस्मि इत्यादिव्यवहाराः सन्ति। अहंपदस्य अर्थः भवति आत्मा। एवम् आत्मा स्थूलः आत्मा कृशः इति दुस्थितिः जायते। स्थूलत्वादिधर्माः देहस्यैव भवति। ते च अध्यासवशात् आत्मनि आरोप्य व्यवहरन्ति। अस्य सर्वस्यापि आत्मा साक्षी भवति। एवञ्च आत्मा देहादिवलक्षणः तत्साक्षित्वात्।

देहः नात्मा इत्यत्र अन्यत् कारणम् उच्यते। देहः अशुद्धः पदार्थः भवति। यतश्च सः देहः मांसेन लिप्तः पुरीषेण पूर्णश्च वर्तते। एवं स्वेददुर्गन्धादिभूयिष्ठतया अत्यन्तम् अशुद्धः भवति स देहः। एतद्विलक्षणः स्वयं निर्मलः आत्मा कदापि अशुद्धः देहः नैव भवितुमर्हति।

**शल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः।**

**कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः॥ वि.चू.१६०**

## १८.४.२) मूढामूढयोर्वैलक्षण्यम्

मूढः कः अमूढः अथवा पण्डितश्च क इति चिन्त्यते। त्वङ्मांसास्थिसहितम् अशुद्धं शरीरं यः आत्मा इति मनुते सः मूढः भवति। शरीरे अहमिति तादात्म्यबुद्धिं करोति मूढः इति तात्पर्यम्। अत्र विचारशीलः पुरुषस्तु देहविलक्षणः निर्मलः परमार्थस्वरूपं परमात्मानमेव स्वस्य आत्मानं जानाति। अहं देह एव न तद्विलक्षणः इति पामरः चिन्तयति। पण्डितम्मन्यमानस्तु देहे जीवे च आत्मबुद्धिं कल्पयति। नाम देहः जीवश्च अहंपदस्य अर्थौ इति। अस्य तु शास्त्रजन्यं किञ्चिदपरोक्षज्ञानमस्ति। लोकिकव्यवहारेषु देहे वैदिकव्वयहारेषु स्वर्गादिषु जीवे च अहंत्वबुद्धिं कल्पयति। शरीरविशिष्टः जीव इति एतेषां मतिः। विना शरीरं जीवस्य वा जीवात्मानं विना शरीरस्य वा स्थितिः नास्तीति वादस्तेषाम्। न किन्तु यो आत्मानात्मविवेकज्ञः विद्वान् भवति सः शरीरादिविलक्षणं परमार्थम् आत्मस्वरूपम् अवगच्छति।



अत्र शङ्कराचार्यस्य उपदेशोऽस्ति। स्थूलदेहस्थम् अहमिति आत्मत्वबुद्धिं त्यक्त्वा निर्विकल्पे शुद्धे ब्रह्मणि अहं ब्रह्मास्मीति बुद्धिं सम्पादयतु इति।

**आत्रात्मबुद्धिं त्यज मूढबुद्धे**

**त्वङ्मांसमेदोस्थिपुरीषराशौ।**

**सर्वात्मनि ब्रह्मणि निर्विकल्पे**

**कुरुष्व शान्तिं परमां भजस्व॥ वि.चू. १६३**

## १८.४.३) प्राणमयकोशस्य आत्मत्वनिरासः

देहे सर्वत्र व्याप्य वर्तमानः वायुरेव प्राणमयकोशः। स च जडः भवति। आत्मा तु चेतनः अतः जडत्वधर्मविशिष्टः प्राणमयकोशः न आत्मा। वायोः विकारः भवति अयं प्राणमयः। वायुः यथा आगच्छति निर्गच्छति च। एवं प्राणस्यागमनमेव उच्छ्वासः। निर्गमनं निश्वासश्च। अयं क्रियावान् परिच्छिन्नश्च। आत्मा निष्क्रियः अपरिच्छिन्नश्च। अयं प्राणः अचेतनः परतन्त्रश्च अस्ति। यतश्च इष्टमनिष्टं वा सुखं दःखं वा नायं जानाति। प्राणायामकाले अयं निरुद्ध्यते च। अस्य निरुद्ध्यमानत्वं प्रसिद्धमस्ति। प्राणः सुषुप्तौ जागर्ति। यदि अयं प्राणः आत्मा भवेत् तर्हि सुषुप्तिकालेपि तस्य जागरणात् चौरेण चौर्यादिकं न कुर्यात्। चौरे गृहं प्रविष्टे सति सः प्राणात्मा जानीयात्। किन्तु तथानुभवः नास्ति लोके। अतः नायं प्राणः आत्मा।

## १८.४.४) मनोमयकोशस्य आत्मत्वनिरासः

देहादिषु अभिमानकारणं यत् भवति तदेव मनः। एतत् मन एव मनोमयकोशः भवति। अहमिदं ममेदम् इत्यभिमानाविष्टो भवति मनोमयकोशः। अहं ब्राह्मणः अहं पण्डितः मम गृहं मम पुत्रः इत्येवम् अहन्तां ममतां च करोति। अभिमानमेव तत्र कारणम्। एवं कामक्रोधादयः मनसः विकाराः भवन्ति। आत्मा निर्विकारः निरभिमानी च भवति। अतः मनोमयः नात्मा।

## १८.४.५) विज्ञानमयकोशस्य आत्मत्वनिरासः

सुषुप्तौ लयं प्राप्य जाग्रति नखशिखान्तं व्याप्य शरीरे वर्तमाना निश्चयात्मिका बुद्धिः विज्ञानमयकोशः भवति। सुषुप्तिकाले विज्ञानमयस्य अस्तमयः पुनः जाग्रत्काले उदयश्च ज्ञायेते। विज्ञानमयवत् उदयः अस्तमयो वा आत्मनः नास्ति। अतः नात्मा विज्ञानमयः। निश्चयात्मिका अन्तःकरणवृत्तिर्भवति बुद्धिः। संशयात्मिकान्तःकरणवृत्तिर्भवति मनः। बुद्धिमनसी द्वयमपि अन्तःकरणस्यैव अंशो भवति। पुनः किमर्थं द्विधा कल्पनमिति नाशङ्कनीयम्। कर्तृत्वकरणत्वाभ्यां भेदसद्भावात्। मनः करणं भवति। बुद्धिस्तु कर्ता च। एवञ्च अन्तरिन्द्रियं अन्तःकरणं कर्तृरूपेण करणरूपेण च परिणमते। बुद्धिः अन्तः वर्तते तदपेक्षया मनः बहिश्च वर्तते इत्यपि भेदः वाच्यः। अतः कोशद्वयव्यवहारः उपपद्यते एव।

### १८.४.६) आनन्दमयकोशस्य आत्मत्वनिरासः

आनन्दः आत्मनः स्वरूपं भवति। तदेव भोगकाले किञ्चिदिव अनुभूयते। पुण्यकर्मणां फलानुभवकाले काचिद्धीवृत्तिःअन्तर्मुखा सती आनन्दप्रतिबिम्भभाक् भवति। सा एव पुनः भोगानन्तरं निद्रारूपेण लीयते। सा च वृत्तिः आनन्दमयः भवति। अयम् आनन्दमयः कादाचित्कः भवति। कदाचित् भवति कदाचिन्न भवति। कादाचित्कत्वं तस्य अनित्यत्वं बोधयति। नित्यश्चेत् सर्वदा एकरूपेण भवत्येव। अतः अनित्यत्वात् नित्यः आत्मा भवितुं नार्हति। बुद्ध्यादौ य आनन्दः प्रतीयते अथवा प्रतिबिम्बतया अवस्थितः तस्य आनन्दमयस्य कारणभूतो य आनन्दः अस्ति। स एव आत्मा। नाम सर्वस्यापि आनन्दस्य हेतुः आत्मा एव। एष ह्येवानन्दयति इति श्रुतिः। आनन्दयतीत्यर्थः। यः आनन्दयति स प्रचुरानन्दो भवतीति प्रसिद्धं लोके। यथा य अन्येषां कृते धनं यच्छति सः अधिकधनवान् स्यात्, तद्वत्। सुखदुःखयोः अनुभवः सर्वेषाम् अस्ति। तत्र दुःखं मनसः धर्मः सुखं आनन्दमयस्य धर्मश्च इति विविच्य ज्ञेयम्।

## १८.५) पञ्चकोशातिरिक्तः आत्मा

स्थूलशरीरादारभ्य सुषुप्तानन्दपर्यन्तं खलु कस्यचित् ज्ञानस्य सीमा। तन्मध्ये विद्यमानः न कोऽपि आत्मा भवतीत्युक्तम्। तर्हि स आत्मा क इति चिन्तनीयमस्ति।

पञ्चकोशाः तस्य धर्माश्च ज्ञायन्ते। अतः ज्ञानस्य विषयाः भवन्ति। यस्य ज्ञानस्य विषयाः भवन्ति तज्ज्ञानम् आत्मा भवति। सर्वमपि आत्मनो विषयो भवति। अतः आत्मना ज्ञायते सर्वमपि। किन्तु नात्मानं कोपि जानाति। न तस्यास्ति वेत्ता। उक्ताः पञ्चकोशाः येन प्रकाश्यन्ते तच्चैतन्यमेवात्मा।

परं ब्रह्म उपाधिवर्जितं शुद्धं च भवति। जन्मनाशरहितं भवति। अज्ञानेन अस्पृष्टमस्ति। मायाकृतं यत् द्वैतमस्ति तद्रहितं भवति। तस्य रूपं नास्ति। गन्धः नास्ति। रसः नास्ति। स्पर्शः नास्ति। शब्दश्च नास्ति। अतः प्रत्यक्षप्रमाणेन गृहीतुं न शक्यते। कस्यापि प्रमाणस्य विषयो न भवति। अतः अप्रमेयः। अस्य आदिर्नास्ति अन्तश्च नास्ति। अतः आद्यन्तरहितः आत्मा। आत्मा सर्वत्र अस्ति सर्वेषामस्ति। अतः अस्य त्यागः कर्तुं न श्क्यते। स्वस्यैव स्वरूपं भवतीत्यतः ब्रह्म हेयोपादेयरहितं भवति। एतादृशस्य आत्मनः बोधाय पञ्चकोशाः कल्पिताः।



## पाठगतप्रश्नाः-३

४५. कोशेषु जीवः तत्तन्मयो भवति कुतः ?

४६. गुहाहितं भवति किम् ?

४७. हेयोपादेयरहितं किम् ?

४८. चक्षुषः विषयः कः ?

४९. शरीरेन्द्रियाणां नियामकः कः ?



५०. शरीरे अहमिति तादात्म्यबुद्धिं करोति कः?

५१. वायोः विकारः कोषः कः भवति?

५२. विज्ञानमयवत् उदयः अस्तमयो वा नास्ति, कस्य?

५३. संशयात्मिकान्तःकरणवृत्तिर्भवति किम् ?

५४. सर्वस्यापि आनन्दस्य हेतुः कः?

५५. न तस्यास्ति वेत्ता, कस्य ?



## पाठसारः

पञ्चकोशविवेकः अस्ति अस्य पाठस्य विषयः। प्रथमं तावत् अध्यारोपः कः अपवादश्च क इति सुष्ठु विचारितमस्ति। तयोर्विचारं विना पञ्चकोशविवकः कर्तुं न शक्यते। ब्रह्मप्रतिपादनार्थं भवति पञ्चानां कोशानां कल्पनम्। ब्रह्म च निरुपाधिकं निर्गुणं निर्धर्मकञ्च भवति। ईदृशस्य ब्रह्मणः प्रतिपादनं कर्तुं न शक्यते। अतः निर्गुणस्य प्रतिपादनार्थं सगुणस्य प्रतिपादनमपेक्षते। एवं निरुपाधिकस्य प्रतिपादनाय सोपाधिकस्य प्रतिपादनञ्च अपेक्षते। सोपाधिकब्रह्मज्ञानेनैव निरुपाधिकस्य दुर्विज्ञेयस्य ज्ञानं भवतीति कारणात् पञ्चकोशाः कल्पिताः। तथा च अन्नमयकोशः प्राणमयकोशः मनोमयकोशः विज्ञानमयकोशः आनन्दमयकोशश्च। तत्र एकैककोशस्य लक्षणमुक्तं प्रथमम्। ततश्च एकैकः अपि विस्तरशः वर्णितः। कस्य कोशस्य जाग्रदादिषु कस्याम् अवस्थायां प्राधान्यमस्तीति विचारिम्। तदूर्ध्वम् एकैकः अपि कोशः आत्मव्यतिरिक्तः भवतीति आत्मानात्मविवेकः प्रदर्शितः। शरीरस्य नाशसम्भवात् अविनाशी नात्मा भवतीत्युक्त्वा अन्नमयस्य आत्मत्वनिरासः कृतः। प्राणः क्रियावान् भवति। अतः निष्क्रिय आत्मा प्राणमयकोशः न भवतीति तन्निरासः कृतः। कामक्रोधादयः मनसः विकाराः भवन्ति। अतः निर्विकारी आत्मा मनोमयकोशः कदापि न भवतित्युक्त्वा मनोमयस्य आत्मत्वनिरासः कृतः। विज्ञानमयवत् उदयः अस्तमयो वा आत्मनः नास्तीत्युक्त्वा विज्ञानमयस्य आत्मत्वनिरासः कृतः। अन्ते च आनन्दमयः नात्मा इति प्रतिपादितम्। आनन्दमयः कादाचित्कः भवति। तेन च अनित्यत्वमागतम्। आत्मा न अनित्यः। पाठान्ते च पञ्चकोशातिरिक्तस्य आत्मनः स्वरूपं प्रदर्शितम्।



## पाठान्तप्रश्नाः

१. अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते, कथम्

२. पञ्चकशानां स्वरूपं वर्णयत।

३. अरुन्धतीनक्षत्रनिदर्शनं वर्णयत।

४. अन्नमयकोशस्य अनात्मत्वं प्रतिपादयत।



५. प्राणमयकोश अनात्मत्वं प्रतिपादयत।

६. विज्ञानमकोशस्य आत्मत्वनिरासं कुरुत।

७. आनन्दमयकोशस्य आत्मत्वनिरासं कुरुत।

८. आत्मनः पञ्चकोशातिरिक्तत्वे प्रबन्धमारचयत।



## पाठगतप्रश्नानाम् उत्तराणि

१. जीवात्मपरमात्मनोरैक्यम्

२. आगमशास्त्रम्

३. ब्रह्मसत्यं जगन्मिथ्या

४. निष्प्रपञ्चः

५. वस्तुनि अवस्त्वारोपः।

६. रज्जुः

७. ब्रह्म

८. अज्ञानादिसकलजडसमूहः

९. अज्ञानं नाम अनिर्वचनीयं त्रिगुणात्मकं ज्ञाननिवर्त्यञ्च।

१०. वस्तुविवर्तस्य अवस्तुनः वस्तुमात्रत्वावधारणम् अपवादः।

११. ब्रह्मज्ञानम्

१२. अरुन्धतीनक्षत्रन्यायः

१३. पञ्च

१४. अन्नमयकोशः प्राणमयकोशः मनोमयकोशः विज्ञानमयकोशः आनन्दमयकोशः।

१५. अन्नमयः

१६. हृद्देशे

१७. आत्मा

१८. प्राणमयः

१९. विश्वस्य व्यष्टिस्थूलशरीरम् अन्नमयकोशो भवति।

२०. प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत् प्राणमयकोशो भवति।

२१. मनस्तु ज्ञानेन्द्रियैः सहितं मनोमयकोशो भवति।

२२. बुद्धिः ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशः।

२३. अविद्यापरिणामरूपा वृत्तिः आनन्दमयश्च।

२४. कोशवदाच्छादकत्वात् कोश इति नाम युज्यते।

२५. जीवः

२६. पञ्च

२७. षट्

२८. मनः

२९. अविद्यायाः

३०. संसारः

३१. बन्धमोक्षयोः

३२. मनः

३३. मनः

३४. मनः

३५. बुद्धिः

३६. विज्ञानमयकोशः

३७. बुद्धिः

३८. उपाधिना

३९. त्रयः

४०. सत्त्वगुणः रजोगुणः तमोगुणश्च



४१. प्रियं मोदः प्रमोदश्च।

४२. प्रियम्

४३. इष्टवस्तुलाभे

४४. सुषुप्तौ

४५. तादात्म्याध्यासात्

४६. ब्रह्म

४७. ब्रह्म

४८. रूपम्

४९. आत्मा

५०. मूढः

५१. प्राणमयः

५२. आत्मनः

५३. मनः

५४. आत्मा

५५. आत्मनः

॥ इति अष्टादशः पाठः ॥



# १९

# महावाक्यतात्पर्यविचारः

## प्रस्तावना

धर्मः अर्थः कामः मोक्षः च इति चत्वारः पुरुषार्थाः सन्ति। एतेषु परमः पुरुषार्थः मोक्षः। मोक्षस्य तदुपायस्य च ज्ञानम् अलौकिकेनोपायेन एव भवति। तत्र ज्ञाने परमं प्रमाणं वेदाः एव। ऋग्यजुःसामाथर्वभेनदेन तेषां चातुर्विध्यम्। एतेभ्यो वेदेभ्यो मोक्षो ज्ञायते। स च मोक्षो जीवब्रह्मणोः ऐक्यज्ञानेनैव सम्भवति नान्यथा। इदम् ऐक्यज्ञानं च वेदेभ्य एव भवति। तादृशम् ऐक्यं चतुर्भिः वाक्यैः प्रतिपाद्यते। तानि वाक्यानि महावाक्यानि कथ्यन्ते। चतुर्षु वेदेषु चत्वारि महावाक्यानि सन्ति। ऋग्वेदे "प्रज्ञानं ब्रह्म" (३/१/३) इति महावाक्यम् अस्ति। यजुर्वेदे "अहं ब्रह्मास्मि" (१/४/१०) इति महावाक्यं शोभते। सामवेदे "तत्त्वमसि" इति महावाक्यं विद्यते। अथर्ववेदे "अयमात्मा ब्रह्म" इति महावाक्यं विद्यते। अस्मिन् पाठे ऋग्वेदीयं यजुर्वेदीयं च महावाक्यं विचार्यते।



## उद्देश्यानि-

इमं पाठं पठित्वा भवान्-

- वेदान्तानां गुह्यं तत्त्वं किम् इति बोद्धुं शक्नुयात्।
- ब्रह्मशब्दार्थः कः इति जानीयात्।
- मनः कथं न इन्द्रियं भवति इति परिचिनुयात्।
- शब्दः कथम् अपरोक्षज्ञानस्य जनकः भवति इति अवगच्छेत्।
- ब्रह्मविद्गुरुः कीदृशः भवति इति वक्तुं शक्ष्यति।
- तात्पर्यनिर्णयाय षड्विधानां लिङ्गानि जानीयात्।
- अज्ञानं कीदृशं भवति इति अवगच्छेत्।
- बृहदारण्यकोपनिषदि किं महावाक्यं विद्यते इति जानीयात्।

## १९.१) पाठविमर्शः

ब्रह्मणि एव सर्वेषां वेदान्तानां तात्पर्यम्। वेदान्तो नाम उपनिषद्। वेदस्य अन्तः नाम सिद्धान्तः यत्र विद्यते तद् वेदान्तनाम्ना अभिधीयते। उपनिषत् इति शब्दस्य रहस्यमर्थः। उपनिषदः अध्यात्मविद्यारहस्यं प्रतिपादयन्ति। पुनः च उपनिषत् इति शब्दस्य प्रसिद्धः अर्थः भवति ब्रह्मविद्या। एषः



अर्थः उपनिषदिति शब्दस्य व्युत्पत्त्या प्राप्यते। सदिति धातोः त्रयः अर्थाः सन्ति। विशरणं नाम विनाशः इत्यर्थः। गतिः इत्यस्य ज्ञानम् (विद्या) अर्थः भवति। अवसादनं नाम शैथिल्यम्। अत्र सद्धातोः गतिः इत्यर्थः स्वीक्रियते चेत् उपनिषच्छब्दस्य ब्रह्मविद्या इत्यर्थः भवति। उप इत्युपसर्गात् सामीप्यम् अवगम्यते। तस्मात् उपसर्गात् समीपतमः आत्मा सूच्यते। नि अर्थात् निश्चयरूपेण ब्रह्मणि एव जीवात्मानं प्रापयति या विद्या सा ब्रह्मविद्या। अतः एव शङ्कराचार्येण कठोपनिषदः भूमिकाभाष्ये उच्यते "पूर्वोक्तविशेषणान्मुमुक्षून् वा परं ब्रह्म गमयति इति ब्रह्मगमयितृत्वेन योगात् ब्रह्मविद्या उपनिषत्" इति। दश उपनिषदः प्रसिद्धाः सन्ति। ईशोपनिषत् केनोपनिषत् कठोपनिषत् प्रश्नोपनिषत् मुण्डकोपनिषत् माण्डूक्योपनिषत् तैत्तिरीयोपनिषत् ऐतरेयोपनिषत् छान्दोग्योपनिषत् बृहदारण्यकोपनिषत् च इति। तत्र ऋग्वेदीयायां ऐतरेयोपनिषदि "प्रज्ञानं ब्रह्म" (३/१/३) इति महावाक्यम् विद्यते। महावाक्यं नाम अखण्डार्थप्रतिपादकं वाक्यम्। जीव-ब्रह्मणोः अभेदार्थः यैः उपनिषद्वाक्यैः सूचितः तानि महावाक्यानि इत्युच्यन्ते। महदर्थप्रतिपादकत्वात् महावाक्यम् इति अभिधानम्। जीव-ब्रह्मणोः अभेदार्थः एवात्र महदर्थः। वाक्यानां तात्पर्यनिर्णयाय मीमांसाशास्त्रे षड्विधतात्पर्यग्राहकलिङ्गानि उपयुज्यन्ते। तैरेव तात्पर्यग्राहकलिङ्गैः वेदान्तवाक्यानां तात्पर्यं निर्णीयते। अतः महावाक्यानाम् तात्पर्यनिर्णयाय तात्पर्यलिङ्गानि आदौ विचार्यन्ते।

## १९.२) लिङ्गानां परिचयः

उपक्रमोपसंहारौ अभ्यासः अपूर्वता फलम् अर्थवादः उपपत्तिः चेति षड्विधानि लिङ्गानि। आदौ यत् वदति अन्तिमे अपि तस्यैव कथनम् उपक्रमोपसंहारौ। आदौ अन्तिमे च एकः एव विषयः कथ्यते चेत् स एव प्रकरणस्य प्रतिपाद्यः विषयः। यथा- छान्दोग्योपनिषदि पिता उद्दालकः पुत्रं श्वेतकेतुं कथयति यत् "सदेव सोम्य इदम् अग्र आसीत्, एकमेवाद्वितीयम्" (६/२/१) इति। एवम् आरम्भे सद्ब्रह्म उपक्रम्य अन्तिमे उच्यते यत् "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" (६/८/७) इति।

द्वितीयं लिङ्गं तावत् अभ्यासः। प्रकरणे प्रतिपाद्यस्य विषयस्य पौनःपुन्येन प्रतिपादनम् अभ्यासः। यथा- छान्दोग्योपनिषदः षष्ठाध्याये "तत्त्वमसि" इति वाक्यं नववारं पठितम् अस्ति। ब्रह्म एव प्रतिपाद्यं वस्तु इति एतदेव सूचयितुं ब्रह्मणः नवकृत्वः कथनम्।

तृतीयं लिङ्गं तावत् अपूर्वता। प्रकरणे यत् वस्तु प्रतिपाद्यते तस्यैव वस्तुनः प्रमाणान्तरेण अविषयीकरणम् अपूर्वता। यथा - बृहदारण्यकोपनिषदि आम्नायते "तन्त्वौपनिषदं पुरुषं पृच्छामि" (३/९/२६) इति। अनया श्रुत्या ज्ञायते यत् उपनिषत्प्रमाणमात्रेण ज्ञेयं ब्रह्म। उपनिषदं विना ब्रह्म ज्ञातुं न शक्यते। वेदान्तसारस्य सुबोधिनीटीकायाम् उच्यते "'तन्त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुतिभिः उपनिषन्मात्रवेद्यत्वप्रतिपादनात् ब्रह्मणः अपूर्वत्वम् इत्यर्थः। अथवा ब्रह्म स्वप्रकाशत्वेन स्वव्यवहारे स्वातिरिक्तप्रमाणानपेक्षत्वात् ब्रह्मणः अपूर्वत्वम् इत्यर्थः" इति।

चतुर्थं लिङ्गं तावत् फलम्। प्रकरणस्य प्रतिपाद्यः विषयः येषु स्थलेषु विद्यते तेषु स्थलेषु श्रूयमाणं प्रयोजनं फलम्। यथा- छान्दोग्योपनिषदः षष्ठाध्याये आम्नायते "आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" (६/१४/२) इति। अस्यां श्रुतौ अद्वितीयब्रह्मज्ञानस्य



अद्वितीयब्रह्मप्राप्तिरेव फलम् इति उक्तम् अस्ति। एवं "ब्रह्मवित् ब्रह्मैव भवति" (मुण्डकोपनिषत् ३.२.९) "तरति शोकम् आत्मवित्" (छान्दोग्योपनिषत्७.१.३) च इत्यादिषु श्रुतिषु ब्रह्मात्मैकत्वविज्ञानमेव फलमिति कथितम्।

पञ्चमं लिङ्गं भवति अर्थवादः। प्रकरणे प्रतिपाद्यस्य वस्तुनः प्रतिपाद्यस्थले प्रशंसनम् अर्थवादः। यथा- छान्दोग्योपनिषदि आम्नायते - "उत तमादेशम् अप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (६/१/३) इति। अस्यां श्रुतौ अद्वितीयस्य वस्तुनः ब्रह्मणः प्रशंसा क्रियते।

षष्ठं लिङ्गं भवति उपपत्तिः। प्रकरणे येषु स्थलेषु यः अर्थः प्रतिपाद्यते तेषु स्थलेषु तस्य अर्थस्य साधने श्रूयमाणा युक्तिः उपपत्तिः। प्रपञ्चरूपस्य कार्यस्य मूलं कारणं ब्रह्म। अतः ब्रह्म विना प्रपञ्चस्य अतिरिक्ता कापि सत्ता नास्ति इति उपनिषदि मृत्तिकादिभिः दृष्टान्तैः आम्नातम्। यद्यपि अज्ञानवशात् पदार्थानां नानारूपेण प्रतीतिः भवति तथापि सर्वमिदम् अद्वितीयम् एकमेव ब्रह्म वस्तु इति उपनिषदि उक्तम्। अद्वितीयवस्तुनः ब्रह्मणः साधने विकारपदार्थस्य वाङ्मात्रत्वविषये युक्तिः तावत् "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दोग्योपनिषत् ६.१.४) इति। अस्याः श्रुतेः अर्थः भवति मृत्पिण्डेन एव निर्मिताः गृहघटादयः। एते गृहघटादयः वस्तुतस्तु मृत्तिका एव। तथापि गृहघटादिभिः शब्दैः कथ्यते। तत्र मृत्तिका एव सत्यम्।

## ११.३) प्रज्ञानं ब्रह्म

सर्वम् इदं ब्रह्म एव। ब्रह्मणः एव नामधेयानि एतानि सर्वाणि। अतः एव ऐतरेयोपनिषदि उच्यते "एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानि इतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रम्। प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" (३/१/१) इति।

ब्रह्मणः इदं जगत् विवर्तरूपम्। अतत्त्वतः अन्यथाप्रथा विवर्तः कथ्यते। ययोः द्वयोः सत्ता परस्परं भिद्यते तयोः विवर्तभावः। यथा- ब्रह्मणः पारमार्थिकी सत्ता, जगतः व्यवहारिकी सत्ता। अतः ब्रह्मणः विवर्तरूपमिदं जगत्। सिद्धान्तलेशसङ्ग्रहे कथ्यते "ब्रह्मणश्च उपादानत्वम् अद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनाम् इव आरम्भकत्वरूपम्, न वा प्रकृतेरिव परिणामित्वरूपम्, किन्तु अविद्यया वियदादिप्रपञ्चरूपेण विवर्त्तमानत्वलक्षणम्। वस्तुनः तत्समसत्ताकः अन्यथाभावः परिणामः, तदसमसत्ताकः विवर्त्त इति वा, कारणसलक्षणः अन्यथाभावः परिणामः, तद्विलक्षणः विवर्त्त इति वा, कारणाभिन्नं कार्यं परिणामः, तदभेदं विना तद्व्यतिरिक्तेन दुर्वचं कार्यं विवर्त्त इति वा विवर्त्तपरिणामयोः विवेकः" इति। सर्वेषु शरीरेषु स्थितः प्राणः प्रज्ञारूपः आत्मा। प्रथममेव जातः शरीरी प्रजापतिः आत्मा एव। इन्द्राग्न्यादयः सर्वे देवा ब्रह्मणः एव विवर्तरूपाः भवन्ति। पृथिवी आपः तेजः वायुराकाशः चेति पञ्चमहाभूतानि तस्मादेव जातानि। क्षुद्रजीवैः सह तत्कारणानि सर्पादीनि बीजानि, अण्डेभ्यः जातानि पक्ष्यादीनि, जरायुजेभ्यः जातानि मनुष्यादीनि, स्वेदेभ्यः जातानि यूकमशकादीनि उद्भिज्जानि वृक्षादीनि, अश्वाः गावः हस्तिनः च ब्रह्मणः एव उत्पद्यन्ते। सर्वमिदं प्रज्ञानेत्रम्। यतो हि



प्रज्ञया एव सर्वं नीयते। शङ्कराचार्येण अत्र उच्यते "सर्वं तदशेषतः प्रज्ञानेत्रम्। प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव। नीयते अनेन इति नेत्रम्। प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम्। प्रज्ञाने ब्रह्मणि उत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञायमित्यर्थः। प्रज्ञानेत्रो लोकः पूर्ववत्। प्रज्ञाचक्षुर्वा सर्व एव लोकः प्रज्ञा प्रतिष्ठा सर्वस्य जगतः। तस्मात् प्रज्ञानं ब्रह्म" इति। सङ्कल्पविकल्पात्मकम् अन्तःकरणं चक्षुरादिभिः इन्द्रियैः निर्गत्य घटादिविषयदेशं प्रति गत्वा घटादिविषयाकारेण यदा परिणमते तदा स परिणामविशेषः वेदान्ते वृत्तिरुच्यते।

## १९.३.१) प्रज्ञानशब्दार्थः-

पुरुषः चक्षुर्द्वारा निर्गतेन येन अन्तःकरणवृत्त्युपहितचैतन्येन दर्शनयोग्यं रूपादिकं पश्यति, तथैव श्रोत्रेन्द्रियेण निर्गतेन येन अन्तःकरणवृत्त्युपहितचैतन्येन शब्दजातं शृणोति, वागिन्द्रियेण निर्गतेन येन अन्तःकरणवृत्त्युपहितचैतन्येन शब्दजातं व्याहरति, घ्राणेन्द्रियेण निर्गतेन येन अन्तःकरणवृत्त्युपहितचैतन्येन गन्धसमूहान् जिघ्रति, रसनेन्द्रियेण निर्गतेन येन अन्तःकरणवृत्त्युपहितचैतन्येन स्वादु अस्वादु च विजानाति, तथा च अत्र उक्तानुक्तैः सकलैः इन्द्रियैः अन्तःकरणवृत्तिभेदैः उपलक्षितं चैतन्यमेव प्रज्ञानम्। अतः एव पञ्चदशीकारेण विद्यारण्यस्वामिणा महावाक्यविवेकप्रकरणे उच्यते-

**"येनेक्षते श्रृणोतीदं जिघ्रति व्याकरोति च।**

**स्वाद्वस्वादू च विजानाति तत्प्रज्ञानमुदीरितम्॥"** (५/१) **इति।**

कौषितक्युपनिषदि अपि आम्नायते -

**"प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामानि आप्नोति।**

**प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाणि आप्नोति"** (३/६) **इति।**

बृहदारण्यकोपनिषदि आम्नायते "मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि जानाति" (१/५/३) इत्यत्र मनःआदिशब्देन चैतन्यरूपं प्रज्ञानमेव उक्तम्। मनआदीनि प्रज्ञानस्य नामधेयानि भवन्ति। अतः एव ऐतरेयोपनिषदि आम्नायते -

"यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" (३/१/२) इति।

## १९.३.२) ब्रह्मशब्दार्थः-

एवं प्रज्ञानशब्दस्य अर्थम् उक्त्वा विद्यारण्यस्वामिणा पञ्चदश्यां ब्रह्मशब्दस्यार्थः कथ्यते-

**"चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु।**

**चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्ममय्यपि॥"** (५/२) **इति।**

जगज्जन्मस्थितिलयकारणं यत् चैतन्यं उत्तमदेवादिषु, मध्यममनुष्यादिषु, अधमेषु अश्वादिषु पृथिव्यादिषु च भूतेषु अस्ति तत् ब्रह्म एव। सर्वेषु चैतन्यस्वरूपं ब्रह्म अनुस्यूतं वर्तते। सर्वत्रावस्थितं प्रज्ञानं ब्रह्म एव। ब्रह्मणः जगज्जन्मादिकारणत्वे श्रुतिः प्रमाणम्। तैत्तिरीयोपनिषद्गता श्रुतिः भवति -

**"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति।**

**यत्प्रयन्ति अभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। " (३/१) इति।**

अतः ज्ञायते यत् ब्रह्मणि जगज्जन्मादिकारणत्वम् अस्ति। अत्र जगत्पदेन सर्वं कार्यजातं विवक्षितम्। अखिलकार्यजातस्य एकमेव कारणम् अद्वितीयं ब्रह्म। कारणपदेन ब्रह्मणि कर्तृत्वम् अस्ति इति निगदितम्। कार्यं प्रति यानि उपादानकारणानि सन्ति तेषां कारणानाम् अपरोक्षज्ञानं यस्मिन् अस्ति, कार्यं कर्तुम् इच्छा कार्यकरणानुकूलप्रयत्नः च यस्मिन् विद्यते स कर्ता भवति। परमेश्वरे ब्रह्मणि एतत् सर्वम् अस्ति। अतः परमेश्वरे कर्तृत्वम् अस्ति एव। वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण कथ्यते "कर्तृत्वं च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्" इति। अत्र ब्रह्मणः नव तटस्थलक्षणानि (वेदान्तपरिभाषायां निगद्यते– "तटस्थलक्षणं तु यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्तकं तदेव यथा गन्धवत्त्वं पृथ्वीलक्षणम्" इति।) वक्तुं शक्यन्ते। तानि लक्षणानि भवन्ति-

१) जगज्जन्मानुकूलापरोक्षज्ञानवत्त्वम्

२) जगत्स्थित्यनुकूलापरोक्षज्ञानवत्त्वम्

३) जगल्लयानुकूलापरोक्षज्ञानवत्त्वम्

४) जगज्जन्मानुकूलचिकीर्षावत्त्वम्

५) जगत्स्थित्यनुकूलचिकीर्षावत्त्वम्

६) जगल्लयानुकूलचिकीर्षावत्त्वम्

७) जगज्जन्मानुकूलप्रयत्नवत्त्वम्

८) जगत्स्थित्यनुकूलप्रयत्नवत्त्वम्

९) जगल्लयानुकूलप्रयत्नवत्त्वम्

एवं ब्रह्मशब्दार्थम् उक्त्वा यजुर्वेदस्य बृहदारण्यकोपनिषद्गतं महावाक्यं विचार्यते।

## १९.४) अहं ब्रह्मास्मि

बृहदारण्यकोपनिषदि आम्नायते "अहं ब्रह्मास्मि" (१/४/१०) इति। विद्याप्राप्त्यर्थम् इष्टदेवस्य आराधना यथा क्रियते तथैव गुरोः आराधना अपि विद्याप्राप्त्यर्थं क्रियते। अत्र विद्या नाम शास्त्रेण प्रतिपाद्यस्य अर्थस्य यथार्थतया बोधः। तादृशः यथार्थतया बोधः निर्विघ्नेन निष्ठापूर्वकं शास्त्राध्ययनम् अपेक्षते। निर्मलचित्तस्य पुरुषस्य शास्त्राध्ययने श्रद्धा भवति। इष्टदेवस्य कृपां विना चित्तं कदापि निर्मलं न भवति। केवलं देवानुग्रहवशात् शास्त्रस्य यथार्थज्ञानं न भवति। यावत्पर्यन्तं गुरोः कृपा न भवति तावत्पर्यन्तं शास्त्रस्य यथार्थज्ञानं न भवति। अतः गुरोः आराधना कर्तव्या। श्वेताश्वतरोपनिषदि उच्यते-



**"यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।**

**तस्य ह्येते कथितार्थाः प्रकाशयन्ते महात्मनः॥"** (६/२३) इति।

पुराणकारेणापि कथ्यते-

**"गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः।**

**उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः परः॥"** इति।

गुरुशब्दः वर्णत्रयात्मकः। गकारस्य सिद्धिदातृत्वमर्थः, रकारस्य पापदाहकत्वमर्थः, उकारस्य पालकत्वमर्थः। गुरुः शिष्यस्य पापक्षालनं करोति। शङ्कराचार्येण उपदेशसाहस्यां निगद्यते-

**"विद्यया तारिताः स्मो यैर्जन्ममृत्युमहोदधिम्।**

**सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसङ्कुलम्॥**

**वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम्।**

**उज्जहारालिवैद्यो नस्तस्मै सद्गुरवे नमः॥"** (२०३) इति।

गुरुः श्रद्धावतः अन्तेवासिनः हृदये ज्ञानरूपं प्रदीपं प्रज्वाल्य अज्ञानं नाशयति। स्वबुद्ध्या परमात्मानं यः ज्ञातुम् इच्छति स अज्ञाने निमज्जति। शास्त्रपारदर्शिभिरपि स्वतन्त्रतया ब्रह्मज्ञानस्य अन्वेषणं न करणीयम्। अत एव शङ्कराचार्येण मुण्डकोपनिषद्भाष्ये उच्यते- "शास्त्रज्ञोऽपि स्वातन्त्रेण ब्रह्मज्ञानान्वेषणं न कुर्यात् इत्येतत् गुरुमेव इति अवधारणफलम्" इति। पुनरपि गुरोः माहात्म्यविषये उच्यते-

**"गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**

**गुरुरेव परं तत्त्वं तस्मात् गुरुमुपाश्रयेत्॥"** इति।

अतः एव गुरोः सकाशात् उपदेशप्राप्त्यर्थं शिष्यः गुरोः शरणं प्राप्नोति। गुरुः निर्मलचित्ताय शमदमादिसम्पन्नाय शिष्याय ब्रह्मविद्याम् उपदिशति। मुण्डकोपनिषदि श्रूयते-

**"तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।**

**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥"** (१/१/३) इति।

शमादयः नाम शमः दमः उपरतिः तितिक्षा समाधानं श्रद्धा च इति षट्। यदा बुभुक्षा अतितीव्रा भवति तदा भोजनं विहाय अन्यत् किञ्चित् अपि मनसे न रोचते, भोजने किञ्चिदपि विलम्बः सोढुं न शक्यते। एवम् एव यदा पूर्वसंस्कारवशात् मालाचन्दनभार्यापुत्रगृहक्षेत्रपशुषु गम्यमानं मनः येन अन्तःकरणनिवृत्तिविशेषेण निगृह्यते तादृशः वृत्तिविशेषः शमः कथ्यते। पुनः ज्ञानसाधनभिन्नेभ्यः शब्दास्पर्शरूपरसादिविषयेभ्यः श्रोत्रादीनि बाह्येन्द्रियाणि येन वृत्तिविशेषेण निगृह्यन्ते स वृत्तिविशेषः दमः भवति। शमः दमः च येन साधितः तस्य स्थितप्रज्ञस्य पुरुषस्य सकाशे ब्रह्मज्ञानस्य मार्गः उन्मुक्तः भवति। श्रीमद्भगवद्गीतायाम् भगवता श्रीकृष्णेन निगद्यते-

**"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**

**इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता॥"** (२/५८) **इति।**

उपरतिः नाम निगृहीतानां बाह्येन्द्रियाणां मनसः च आत्मविषयकश्रवणादिषु स्थिरीकरणम् अथवा विहितानां नित्यकर्मादीनां विधिना परित्यागः। अत्र सर्वकर्मसन्न्यासः एव इष्टः। सर्वतः निवृत्तचित्तः पुरुषः सुखदुःखशीतोष्णप्रेमघृणादिषु देहादिषु अनात्मवस्तुधर्मेषु उदासीनः भवति। शीतोष्णादिद्वन्द्वसहिष्णुता एव तितिक्षा। आत्मविषये अनवरतम् अनुचिन्तनं समाधिः अर्थात् समाधानम्। गुरुणा उपदिष्टानि यानि वेदान्तवाक्यानि तेषु वाक्येषु विश्वासः श्रद्धा। ब्रह्मविद्गुरुः तादृशाय शिष्याय तत्त्वमस्यादिवाक्यम् उपदिशति। अस्मासु श्रद्धा अवश्यं भवेत्। कारणं हि श्रद्धा नास्ति चेत् कार्यं सफलतां न प्राप्नोति। अतः एव भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां निगद्यते-

**"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।**

**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥"** (१७/२८) **इति।**

## ११.५) अहमाकारा वृत्तिः

ततः परं शिष्यस्य अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दानन्ताद्वयं ब्रह्म अस्मीति अखण्डाकाराकारिता चित्तवृत्तिः उदेति। परमात्मा अहं सर्वदा एव विद्यमानः अस्मीति शिष्यस्य अनुभवो भवति। मम जन्म नास्ति, मम विनाशः नास्ति, अज्ञानं नास्ति, दुःखस्पर्शः नास्ति, नानात्वं नास्ति इत्येवं शिष्यस्य अपरोक्षानुभवो भवति। कारणं हि ब्रह्म अपरोक्षस्वभावं भवति। बृहदारण्यकोपनिषदि आम्नातम् अस्ति "यत्साक्षादपरोक्षाद्ब्रह्म" (३/४/१) इति। अतः शिष्यस्य अनुभवः अपरोक्षः एव। अधुना संशयः भवति यत् इन्द्रियजन्यं ज्ञानमेव प्रत्यक्षं भवति। शब्दः तु अपरोक्षज्ञानस्य जनकः भवति। यदि शब्दः प्रत्यक्षज्ञानस्य जनकः भवति तर्हि 'पर्वते वह्निरस्ति' इत्यस्मात् वाक्यात् अग्नेः प्रत्यक्षं ज्ञानम् उदितं स्यात्। तस्मात् वाक्यात् अग्नेः प्रत्यक्षं ज्ञानं न भवति। एवं संशये सति अद्वैतिनः कथयन्ति प्रत्यक्षं न केवलम् इन्द्रियनिर्भरशीलम्। अपि तु विषयनिर्भरशीलम्। इन्द्रियजन्यं ज्ञानमेव प्रत्यक्षम् इति स्वीक्रियते चेत् सुखदुःखादिकं यथा प्रत्यक्षं भवति तथैव सुखदुःखादादीनां स्मृतिरपि प्रत्यक्षा भवति इति अङ्गीकार्यम्। वायुः रूपहीनः भवति। अतः वायुः चाक्षुषप्रत्यक्षः न भवति। घटरूपमपि रूपहीनं भवति। कारणं हि रूपे रूपमस्ति इति स्वीक्रियते चेत् अनवस्थादोषः भविष्यति। घटरूपम्, घटगतसंख्या चाक्षुषप्रत्यक्षा भवति इति स्वीक्रियते। अतः किं वस्तु प्रत्यक्षं भवति, किं न भवति इत्यत्र वस्तुस्वभावः एव नियामकः। शब्दः अपि क्वचित् अपरोक्षज्ञानम् उत्पादयितुं समर्थः अस्ति। यथा दशजनाः नद्याः अपरतीरात् ततः विपरीततीरम् आगतवन्तः। दशजनाः एव सन्ति न वा इति निश्चेतुं तेषु कश्चन स्वेषां गणनां करोति। किन्तु स स्वं विहाय नवजनानां गणनां कृतवान्। तदा स चिन्तितवान् यत् अवशिष्टः एकः जनः कुत्र गतः इति। तदा तेषु एव कश्चन कथयति- भोः! दशमः त्वम् असि। तदा तस्य ज्ञानं जातं यत् दशमः अहमस्मि इति। ततः परं ते दशजनाः आनन्देन गतवन्तः। एवं शब्दसमूहः अपि अपरोक्षज्ञानजनको भवति।



## १९.६) मनसः अनिन्द्रियत्वम्-

ननु ब्रह्म इन्द्रियगोचरं खलु। बृहदारण्यकोपनिषदि आम्नायते "मनसैवानुद्रष्टव्यम्" (४/४/१९) इति। मनसा एव ब्रह्मदर्शनं कर्तव्यम्। मनश्च इन्द्रियं भवति। अन्नम्भट्टेन तर्कसङ्ग्रहे उच्यते "सुखाद्युपलब्धिसाधनमिन्द्रियं मनः" इति। श्रीमद्भगवद्गीतायामपि कथ्यते-

**"ममैवांशो जीवलोके जीवभूतः सनातनः।**

**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥"** (१५/७) **इति।**

अतः मनः इन्द्रियं भवति इति आशङ्कायामुच्यते मनः न इन्द्रियम्। कारणं हि मनसः इन्द्रियत्वे प्रमाणं नास्ति। श्रीमद्भगवद्गीतायां षट्त्वसंङ्ख्यापूरणाय अनिन्द्रियस्य मनसः इन्द्रियत्वेन कथनमस्ति। एवम् अवेदेन अपि महाभारतेन वेदगतपञ्चत्वसङ्ख्यापूरणं दृष्टमस्ति। यथा 'वेदान् अध्यापयामास महाभारतपञ्चमान्' इति। कठोपनिषदपि मनसः अनिन्द्रियत्वं कथयति। यथा-

**"इन्द्रियेभ्यः पराः ह्यर्था अर्थेभ्यश्च परं मनः।**

**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥"** (१/३/१०) **इति।**

अस्यां श्रुतौ इन्द्रियेभ्यः पृथक्त्वेन मनसः ग्रहणं कृतम् अस्ति। इन्द्रियेभ्यः अपि विषयाः श्रेष्ठाः, विषयेभ्यः मनः श्रेष्ठम्, मनसः अपि बुद्धिः श्रेष्ठा, बुद्धेरपि महान् आत्मा श्रेष्ठः भवति। अनिन्द्रियेण शमदमादिसंस्कृतेन शुद्धेन मनसा ब्रह्म प्रत्यक्षं भवति। अत एव शङ्कराचार्येण श्रीमद्भगवद्गीताभाष्ये निगद्यते "शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मनः आत्मदर्शने करणम्" (२/२१) इति।

## १९.७) ब्रह्मज्ञानस्य अज्ञाननाशकत्वम्

ननु अद्वैतवेदान्ते ब्रह्म निर्विशेषं निराकारञ्च भवति। निराकारस्य ब्रह्मणः आकारधारणम् अयुक्तं खलु। एवं संशये सति समाधानं कथयति यत् अखण्डाकाराकारिता चित्तवृत्तिः इत्यत्र आकारशब्दस्य स्वार्थे तात्पर्यं नास्ति। अपि तु बह्व्यः वृत्तयः सन्ति। तासां वृत्तीनां परस्परं भेददर्शनार्थम् आकारशब्दः प्रयुक्तः। या वृत्तिः यद्विषयस्य अज्ञानस्य निर्वर्तिका भवति सा वृत्तिः तद्विषयाकारा भवति। या वृत्तिः घटविषयकम् अज्ञानं नाशयति सा वृत्तिः घटाकाराकारिता भवति। अतः अत्र अखण्डाकारवृत्तिः नाम अखण्डब्रह्मणा सह सम्बन्धवशात् चित्तस्य परिणामविशेषः। अखण्डाकारवृत्तिः अखण्डब्रह्मगतम् अज्ञानं नाशयति। वृत्तिः जडा भवति। अतः वृत्तिः स्वतः अज्ञानं नाशयितुं न शक्नोति। चैतन्यप्रतिबिम्बयुक्ता सती वृत्तिः अज्ञानं नाशयति। निर्मले अन्तःकरणे यदा चैतन्यं प्रतिबिम्बितं भवति तदा अन्तःकरणं प्रकाशशीलं सत् अज्ञानं नाशयति। वस्तुतस्तु चैतन्यमेव अज्ञानस्य नाशकं भवति। किन्तु स्वतः न अज्ञानं नाशयति। अपि तु वृत्तिमाध्यमेन अज्ञानं नाशयति। यथा- सूर्यस्य आतपः स्वतः तृणादीनां नाशकः न भवति। सूर्यकान्तमणौ प्रतिफलितः सन् आतपः तृणादिकं नाशयति। अधुना संशयो भवति जडा वृत्तिः चित्प्रतिबिम्बिता सती अज्ञानम् अज्ञानकार्यं च नाशयति। ततः परं सा वृत्तिः तु न नश्यति। अतः वृत्तेः नाशकान्तराभावात् वृत्तिस्तु तिष्ठति एव। अतः मोक्षदशायां वृत्तेरपि विद्यमानात् एकमेव अद्वितीयं तत्त्वम् अनुपपन्नं भवति। एवं संशये सति समाधानम् उच्यते - पटस्य उपादानकारणानि तन्तवः भवन्ति। तन्तवः



दग्धाः भवन्ति चेत् तन्तुकार्यं पटोऽपि दग्धः भवति। एवमेव प्रपञ्चरूपस्य अखिलस्य कार्यस्य कारणम् अज्ञानं नष्टं चेत् अज्ञानकार्याणाम् अपि नाशः भवति। वृत्तिरपि अज्ञानकार्यमेव। अतः अज्ञाने नाशे सति अज्ञानकार्यस्य वृत्तेरपि नाशः भवति। जडपदार्थस्य आकारेण आकारिता चित्तवृत्तिः अखण्डवृत्त्या साकं भिद्यते। यथा- अयं घटः इत्यत्र घटाकाराकारिता चित्तवृत्तिः अज्ञानविषयीभूतं घटावच्छिन्नं चैतन्यं विषयीकृत्य घटावच्छिन्नचैतन्यगतम् अज्ञानं नाशयित्वा स्वगतचिदाभासेन जडं घटमपि प्रकाशयति। अतः एव पञ्चदश्यां निगदितं-

**"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।**

**तत्राज्ञानं धिया नश्येत् आभासेन घटः स्फुरेत्॥"** (७/९१) **इति।**

अस्य श्लोकस्यार्थस्तावत् बुद्धिः बुद्धिस्थं च चैतन्यप्रतिबिम्बम् उभयमपि घटं व्याप्नोति। तत्र बुद्धिवृत्त्या घटगतम् अज्ञानं नश्यति। पुनः प्रतिबिम्बेन घटः प्रकाश्यते। यथा- प्रदीपस्य आलोकः अन्धकारे विद्यमानं घटं विषयीकृत्य अन्धकारं नाशयति। ततः परम् आलोकेन घटः प्रकाश्यते।

ननु वृत्तिः नश्यति चेत् अपि वृत्तिजन्यः चिदाभासः तिष्ठति एव। अज्ञाने नष्टे चैतन्यमात्रं विराजते। तत् चैतन्यं न कार्यम्, नापि कारणं भवति। तत् चैतन्यं तु चिदाभासं नाशयितुं न शक्नोति। अतः अद्वैतहानिः खलु इति चेदुच्यते तन्न भवति। कारणं हि यथा- अग्निः काष्ठखण्डम् आश्रित्य नगरं नाशयति। अन्तिमे स्वाश्रितं काष्ठखण्डं नाशयित्वा स्वयमपि नश्यति। तथैव चिदाभासः अपि अखण्डब्रह्मगतम् अज्ञानं नाशयित्वा अन्तिमे स्वयमेव निवृत्तं भवति। पुनश्च उपाधिः नश्यति चेत् प्रतिबिम्बः बिम्बरूपः एव भवति। यथा- दर्पणः विनष्टः चेत् दर्पणस्थः मुखप्रतिबिम्बः बिम्बेन साकम् अभिन्नः भवति। एवमेव वृत्तिः यदा नश्यति तदा चैतन्यप्रतिबिम्बः बिम्बभूतेन चैतन्येन साकम् अभिन्नः भवति। बिम्बभूतस्य चैतन्यस्य कदापि नाशः न भवति। अतः एव सिद्धान्तलेशसङ्ग्रहे उच्यते "अविनाशी वा अरे अयमात्मा इति श्रवणं जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमे अपि स्वरूपं न विनश्यति इत्येतत्परं न तदतिरिक्तकूटस्थनामचैतन्यान्तरपरम्" इति। प्रतिबिम्बस्य बिम्बातिरिक्ता कापि सत्ता नास्ति। अतः अद्वैततत्त्वम् उपपन्नं भवति। अत्र ज्ञातव्यं यत् चिदाभासः चैतन्यस्वरूपं ब्रह्म प्रकाशयितुं न शक्नोति। यथा- प्रदीपप्रभा सूर्यप्रभां प्रकाशयितुं न शक्नोति। ब्रह्म स्वयं प्रकाशमानं भवति। तस्मात् ब्रह्म प्रकाशयितुं चिदाभासस्य उपयोगः एव नास्ति। अतः एव विद्यारण्यस्वामिणा पञ्चदश्यां निगद्यते-

**"ब्रह्मणि अज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।**

**स्वयंस्फुरणमात्रत्वान्नाभास उपयुज्यते॥"** (७/९२) **इति।**

ब्रह्म एव सर्वं प्रकाशयति। मुण्डकोपनिषदि आम्नायते-

**"न तत्र सूर्यो भाति न चन्द्रतारकं**

**नेमा विद्युतो भान्ति कुतोऽयमग्निः।**

**तमेव भान्तम् अनुभाति सर्वं**



**तस्य भासा सर्वमिदं विभाति॥" (२/२/१०) इति।**

यः सूर्यः सर्वान् प्रकाशयति स सूर्यः अपि ब्रह्मणि न भाति। अर्थात् स सूर्यः ब्रह्म प्रकाशयितुं न शक्नोति। अपि तु ब्रह्मणः प्रकाशः सूर्यादीन् सर्वान् प्रकाशयति। तस्यैव प्रकाशेन सर्वे प्रकाशमानाः भवन्ति। तदेव प्रकाशस्वरूपं ब्रह्म अत्र 'अहं'पदेन परिलक्ष्यते। विद्यारण्यस्वामिणा पञ्चदश्यां कथ्यते-

**"परिपूर्णः परमात्मास्मिन् देहे विद्याधिकारिणि।**
**बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते॥"**
**स्वतःपूर्णः परमात्मात्र ब्रह्मशब्देन निगदितः।**
**अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम्॥" (५/३,४) इति।**

अनयोः श्लोकयोः अर्थस्तावत् देशेन कालेन वस्तुना च अपरिच्छिन्नः आत्मा। तादृशः अपरिच्छिन्नः, सर्वत्र एव व्याप्तः परमात्मा मायाकल्पिते अस्मिन् जगति विद्यालाभयोग्येषु श्रवणमनननिदिध्यासनानुष्ठानवत्सु मनुष्यादिशरीरेषु साक्षितया स्थित्वा सर्वदा प्रकाशमानः तिष्ठति। श्लोकोक्तेन बुद्धिपदेन सूक्ष्मशरीरं निगदितम्। "अहं ब्रह्मास्मि" (बृहदारण्यकोपनिषत्-१/४/१०) इत्यत्र अस्मीति पदेन जीवब्रह्मणोः ऐक्यं सूचितम्।



## पाठगतप्रश्नाः

१. ऋग्वेदस्य महावाक्यं किम्?
२. यजुर्वेदस्य महावाक्यं किम्?
३. षड्विधानि लिङ्गानि कानि?
४. मनः न इन्द्रियम् इत्यत्र का श्रुतिः?
५. अर्थवादः नाम किम्?
६. महावाक्यं नाम किम्?
७. अरोक्षस्वभावं ब्रह्म इत्यत्र का श्रुतिः?
८. उपनिषत् इति शब्दस्य अर्थः कः?
९. देशेन कालेन वस्तुना च किं न परिच्छिद्यते?





## पाठसारः-

सर्वासाम् उपनिषदां ब्रह्मणि एव तात्पर्यम्। जीवस्य ब्रह्मणा साकम् ऐक्यप्रतिपादनम् एव वेदान्तानां विषयः। सर्वम् इदं ब्रह्मणः एव समुत्पन्नम्। इदन्ततया अत्र जगत् उच्यते। अस्य जगतः उत्पत्तिः ब्रह्मणः एव भवति। जगतः स्थितिः ब्रह्मणि एव भवति। जगतः लयः ब्रह्मणि एव भवति। चत्वारः पुरुषार्थाः सन्ति। तेषु परमः पुरुषार्थः मोक्षः। उपनिषत्प्रतिपाद्यं मोक्षस्वरूपं ब्रह्म। प्रसिद्धानाम् उपनिषदां मध्ये ऋग्वेदस्य ऐतरेयोपनिषदि "प्रज्ञानं ब्रह्म" इति महावाक्यं विद्यते। प्रज्ञानशब्देन अत्र चैतन्यम् उच्यते। तच्चैतन्यं सर्वत्र एव अनुस्यूतं वर्तते। बृहदारण्यकोपनिषदि "अहं ब्रह्मास्मि" इति महावाक्यम् अस्ति। महावाक्यानि जीवस्य ब्रह्मणः च ऐक्यं प्रतिपादयन्ति। निर्विशेषं निरवयवं प्रकाशस्वरूपं ब्रह्म भवति। ब्रह्मणः एव प्रकाशः सर्वं प्रकाशयति। सूर्यचन्द्रादयः अपि ब्रह्मणा एव प्रकाशिताः भवन्ति। तत् ब्रह्म अस्माभिः सर्वैः प्राप्तव्यम् अस्ति। अतः ब्रह्मप्राप्तये ब्रह्मविदः गुरोः सकाशं गमनीयम् अस्ति। कारणं हि गुरुः अविद्यां नाशयति। विद्याप्राप्त्यर्थम् इष्टदेवस्य आराधना यथा क्रियते तथैव गुरोः आराधना अपि विद्याप्राप्त्यर्थं क्रियते। विद्यया अमृतं लभते। अर्थात् मुक्तिः प्राप्यते। अद्वैते मुक्तिः द्विविधा भवति। जीवन्मुक्तिः विदेहमुक्तिः च। अखण्डब्रह्मज्ञानेन ब्रह्मविषयकम् अज्ञानं नश्यति। तदा ब्रह्मसाक्षात्कारे सति अज्ञानकार्याणां प्रपञ्चादीनां संशयविपर्ययादीनां च बाधः भवति। ततः परं पुरुषः सर्वबन्धनरहितः सन् ब्रह्मनिष्ठः जीवन्मुक्तः भवति। मुण्डकोपनिषदि अपि आम्नायते -

**"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"** (२/२/९) **इति।**

अविद्यावासनामयाः कामाः ये सन्ति, तेषां कामानाम्, ज्ञेयविषये विद्यमानानां संशयानां च नाशः ब्रह्मनिष्ठस्य पुरुषस्य भवति। पुनश्च तस्य जीवन्मुक्तस्य पुरुषस्य ज्ञानोत्पत्तेः पूर्वं यानि कर्माणि सन्ति, जन्मान्तरे च यानि कर्माणि फलदाने अप्रवृत्तानि सन्ति, तेषां कर्मणां नाशः भवति। स जीवन्मुक्तः पुरुषः इच्छया अनिच्छया परेच्छया वा प्रारब्धकर्मणः फलम् अनुभवति। यदा प्रारब्धकर्मणः क्षयः भवति तदा आनन्दस्वरूपे परब्रह्मणि तस्य प्राणाः लीयन्ते। ततः परं तस्य पुरुषस्य भेदज्ञानशून्ये परमकैवल्यरूपे अखण्डब्रह्मणि अवस्थानं भवति। एतदेव विदेहमुक्तिः कथ्यते। अज्ञाननाशः अस्माभिः कर्तव्यः। अज्ञानं सदसद्भ्याम् अनिर्वचनीयं भवति। पुनः च अज्ञानं ज्ञानविरोधि सत्त्वरजस्तमोगुणात्मकं च भवति। तस्य अज्ञानस्य नाशः यदा भवति तदा तस्मिन् क्षणे एव ब्रह्मज्ञानं भवति। चित्तं यदा निर्मलं भवति तदा तादृशं शुद्धं चित्तं ब्रह्मज्ञानं प्रति करणं भवति। ब्रह्म अखण्डं भवति। खण्डः नाम भेदः। भेदत्रयम् अस्ति। स्वगतः सजातीयः विजातीयः च। स्वम् आत्मानं गतः प्राप्तः भेदः स्वगतभेदः। वृक्षेण साकं वृक्षस्य यः भेदः स सजातीयः भेदः। वृक्षेण साकं शिलादीनां यः भेदः स विजातीयः भेदः। एतत् भेदत्रयरहितं ब्रह्म भवति। तत् ब्रह्म साक्षितया विराजमानं वर्तते। गुरुः यदा तत्त्वमस्यादिवाक्यम् उपदिशति तदा शुद्धचित्तयुक्तस्य शिष्यस्य अखण्डब्रह्माकाराकारिता चित्तवृत्तिः उदेति। सा चित्तवृत्तिः अखण्डब्रह्मगतम् अज्ञानं नाशयित्वा





अन्तिमे स्वयम् अपि नश्यति। यथा अग्निः सर्वं नाशयित्वा अन्तिमे स्वयमपि उपशान्तः भवति इति। अर्थात् अखण्डे ब्रह्मणि एव सर्वं पर्यवसितं भवति।



## पाठे अधिगताः विषयाः-

- अज्ञानस्य नाशकः गुरुः भवति।
- अद्वितीयब्रह्मज्ञानस्य अद्वितीयब्रह्मप्राप्तिरेव फलम्।
- महावाक्यानि जीवब्रह्मणोः ऐक्यं प्रतिपादयन्ति।
- ब्रह्मणः नव तटस्थलक्षणानि सन्ति।
- अज्ञाननाशाय ब्रह्मणि वृत्तिव्याप्तिरपेक्षिता।
- प्रतिबिम्बस्य बिम्बम् अतिरिच्य कापि सत्ता नास्ति।
- ब्रह्म स्वयं प्रकाशस्वरूपं भवति।
- सर्वासाम् उपनिषदां जीवब्रह्मणोः ऐक्यप्रतिपादने एव तात्पर्यम्।
- ब्रह्मणि एव जगतः उत्पत्तिस्थितिलयाः भवन्ति।



## पाठान्तप्रश्नाः

१. "प्रज्ञानं ब्रह्म" इत्यत्र प्रज्ञानशब्दस्य अर्थं प्रतिपादयत।

२. "अहं ब्रह्मास्मि" इत्यत्र अहंपदस्य अर्थम् आलोचयत।

३. मनः इन्द्रियं भवति इति पूर्वपक्षिमतम् उपस्थापयत।

४. गुरोः माहात्म्यं वर्णयत।

५. उपक्रमोपसंहारौ उदाहरणेन प्रतिपादयत।

६. "अहंवादः" नाम किम्?

७. परमः पुरुषार्थः कः?

८. अर्थवादस्य उदाहरणं दीयताम्।

९. फलं नाम किम्? ब्रह्मास्मि" इत्यत्र पञ्चदशीकारेण उक्तः ब्रह्मशब्दार्थः लिख्यताम्।

१०. षड्विधानि लिङ्गानि आलोचयत।

११. मनः न इन्दियम् इत्यत्र सिद्धानिनां मतं लिखत।

१२. अभ्यासः नाम किम्?

१३. अखण्डं ब्रह्म नाम किम्?

१४. छान्दोग्योपनिषदि कथितम् अभ्यासवाक्यं किम्?



१५. अखण्डाकाराकारिता चित्तवृत्तिः इत्यत्र आकारशब्दस्य तात्पर्यं किम्?

१६. अपूर्वता नाम किम्?

१७. ब्रह्मणः स्वरूपं वर्णयतु?

१८. फलरूपस्य लिङ्गस्य एकम् उपनिषद्वाक्यं लिखतु?

१९. ब्रह्म एव सर्वं प्रकाशयति इत्यत्र उपनिषद्वाक्यं किम्?

२०. अर्थवादः नाम किम्?

२१. परमः पुरुषार्थः कः?

२२. अर्थवादस्य उदाहरणं दीयताम्?

२३. फलं नाम किम्?



## पाठगतप्रश्नानाम् उत्तराणि-

१. "प्रज्ञानं ब्रह्म" इति।

२. "अहं ब्रह्मास्मि" इति।

३. उपक्रमोपसंहारौ अभ्यासः अपूर्वता फलम् अर्थवादः उपपत्तिः चेति लिङ्गानि।

४. "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इति कठोपनिषद्गता श्रुतिः।

५. प्रकरणे प्रतिपाद्यस्य वस्तुनः प्रतिपाद्यस्थले प्रशंसनम् अर्थवादः।

६. षड्विधतात्पर्यग्राहकलिङ्गोपेतं वाक्यं महावाक्यम्।

७. "यत्साक्षादपरोक्षाद्ब्रह्म" इति बृहदारण्यकोपनिषद्गता श्रुतिः।

८. रहस्यम् इति अर्थः।

९. परमं ब्रह्म न परिच्छिद्यते।

॥ इति नवदशः पाठः ॥



# २०

# महावाक्यवृत्तिविचारः

## प्रस्तावना-

धर्मः अर्थः कामः मोक्षः च इति चत्वारः पुरुषार्थाः सन्ति। एतेषु परमः पुरुषार्थः मोक्षः। मोक्षस्य तदुपायस्य च ज्ञानम् अलौकिकेनोपायेन एव भवति। तत्र ज्ञाने परमं प्रमाणं वेदाः एव। ऋग्यजुःसामाथर्वभेनदेन तेषां चातुर्विध्यम्। एतेभ्यो वेदेभ्यो मोक्षो ज्ञायते। स च मोक्षो जीवब्रह्मणोः ऐक्यज्ञानेनैव सम्भवति नान्यथा। इदम् ऐक्यज्ञानं च वेदेभ्य एव भवति। तादृशम् ऐक्यं चतुर्भिः वाक्यैः प्रतिपाद्यते। तानि वाक्यानि महावाक्यानि कथ्यन्ते। चतुर्षु वेदेषु चत्वारि महावाक्यानि सन्ति। ऋग्वेदे "प्रज्ञानं ब्रह्म" (३/१/३) इति महावाक्यम् अस्ति। यजुर्वेदे "अहं ब्रह्मास्मि" (१/४/१०) इति महावाक्यं शोभते। सामवेदे "तत्त्वमसि" इति महावाक्यं विद्यते। अथर्ववेदे "अयमात्मा ब्रह्म" इति महावाक्यं विद्यते।



## उद्देश्यानि-

अमुं पाठं पठित्वा भवान्-

- अध्यारोपः नाम किम् इति जानीयात्।
- अज्ञानं कीदृशं भवति इति जानीयात्।
- अपवादः नाम किम् इति ज्ञातुं शक्ष्यति।
- "तत्त्वमसि" महावाक्यस्य तात्पर्यं किम् इति अवगच्छेत्।
- "तत्त्वमसि" इति अस्मिन् महावाक्ये तत् त्वम् इति पदयोः वाच्यार्थं ज्ञातुं शक्ष्यति।
- "तत्त्वमसि" इति अस्मिन् महावाक्ये तत् त्वम् इति पदयोः लक्ष्यार्थं ज्ञातुं शक्ष्यति।
- "अयमात्मा ब्रह्म" इति महावाक्यस्य तात्पर्यं किम् इति बोद्धुं शक्नुयात्।
- कथं जीवब्रह्मणोः ऐक्यं सम्भवति इति परिचिनुयात्।

## २०.१) पाठविमर्शः-

जीवब्रह्मणोः ऐक्यं प्रतिपादयन्ति महावाक्यानि। सामवेदस्य छान्दोग्योपनिषदि "तत्त्वमसि" (६/८/७) इति महावाक्यं विद्यते। अखण्डार्थप्रतिपादकं वाक्यं हि महावाक्यम्। अखण्डार्थो नाम जीवब्रह्मणोः ऐक्यम्। अधुना अध्यारोपापवादाभ्यां तत्त्वम्पदार्थशोधनं क्रियते।

## २०.२) अध्यारोपः-

वस्तुनि अवस्तुनः आरोपः अध्यारोपः। यथा रज्जौ सर्पस्य आरोपः। रज्जुः असर्पभूता भवति। तस्याम् असर्पभूतायां रज्जौ सर्पस्य आरोपः अध्यारोपः। सच्चिदानन्दम् अद्वयं ब्रह्म वस्तु। ब्रह्म विना अज्ञानकार्यभूतं सर्वम् अवस्तु भवति।

## २०.३) अज्ञानम्-

अज्ञानं सदसद्भ्याम् अनिर्वचनीयं भवति। अज्ञानम् अस्ति इति वक्तुं न शक्यते। कारणं हि यदि अज्ञानम् अस्ति तर्हि कस्याम् अपि अवस्थायां तस्य बाधः न स्यात्। किन्तु ब्रह्मज्ञाने सति अज्ञानस्य बाधः अर्थात् नाशः भवति। पुनः च अज्ञानम् असत् अर्थात् अज्ञानं नास्ति इति अपि वक्तुं न शक्यते। कारणं हि यदि अज्ञानं नास्ति तर्हि कदापि तस्य अपरोक्षः प्रतिभासः न स्यात्। किन्तु अज्ञानस्य अपरोक्षः प्रतिभासरूपः संसारः प्रतीयते। अतः अज्ञानं नापि असत्। बुद्धितः आरभ्य देहपर्यन्तं सर्वम् अज्ञानस्य कार्यं भवति। अज्ञानं सत्त्वरजस्तमोगुणात्मकं भवति। श्वेताश्वतरोपनिषदि निगद्यते-

**"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**

**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥"** (४/५) **इति।**

ननु यत् जायते तत् नश्यति। अज्ञानं न जायते। अतः अज्ञानस्य नाशः अपि कदापि न सम्भवति इति आशङ्कां दूरीकरणाय उच्यते अज्ञानं ज्ञानविरोधि भवति। ज्ञानेन अर्थात् आत्मसाक्षात्कारेण अज्ञानं नश्यति। अतः एव भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां कथ्यते

**"दैवी ह्येषा गुणमयी मम माया दूरत्यया।**

**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥"** (७/१४) **इति।**

पुनः च अज्ञानं भावरूपं भवति। यद्यपि अज्ञानं भावरूपं भवति तथापि 'इदम् इत्थम्' इत्येवं दर्शयितुं न शक्यते। तत्र तु अनुभवः एव शरणं भवति। 'अहम् अज्ञः, अहम् अद्वैतं न जानामि' इत्येवम् अनुभवः। वेदान्तसारे सदानन्दयोगीन्द्रसरस्वत्या उच्यते "अज्ञानं तु सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत् किञ्चित् इति वदन्ति, अहमज्ञः इत्याद्यनुभवात्, 'देवात्मशक्तिं स्वगुणैः निगूढाम्' (श्वेताश्वतरोपनिषत्, १/३)" इति।

## २०.४) अपवादः

अपवादः नाम वस्तुनि भासमानस्य अवस्त्वज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्। यथा रज्जोः विवर्तरूपः सर्पः तस्मात् रज्जोः न भिन्नः तथैव ब्रह्मरूपस्य वस्तुनः विवर्तभूतम् अज्ञानप्रपञ्चादिकम्। तस्मात् ब्रह्मणः न भिन्नम्। वेदान्तसारे भण्यते "अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्तस्य अवस्तुनः अज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्" इति। इदं सर्वं चैतन्यस्वरूपं ब्रह्म एव। तथापि शरीरभेदेन समष्टिव्यष्ट्यभिप्रायेण अस्य भेदाः कल्प्यन्ते। समष्टिकारणशरीराज्ञानोपहितं चैतन्यं सर्वज्ञः ईश्वरः। व्यष्टिकारणशरीराज्ञानोपहितं चैतन्यं प्राज्ञः। समष्टिसूक्षशरीराज्ञानोपहितं चैतन्यं



हिरण्यगर्भः। व्यष्टिसूक्ष्मशरीराज्ञानोपहितं चैतन्यं तैजसः। समष्टिस्थूलशरीराज्ञानोपहितं चैतन्यं विराड्। व्यष्टिस्थूलशरीराज्ञानोपहितं विश्वः।

अधुना अध्यारोपापवादाभ्यां सर्वस्य वस्तुमात्रत्वं ज्ञातम्। आभ्यामेव तत्त्वम्पदार्थयोः परिशुद्धिरपि भवति। वाक्यार्थज्ञानं पदार्थज्ञानसापेक्षं भवति। पदसमूहः वाक्यम्। अतः पदार्थज्ञानात् परमेव वाक्यार्थस्य ज्ञानं भवति। अतः तत्पदार्थः त्वम्पदार्थः च आदौ कथ्यते।

## २०.५) तत्त्वमसि

### २०.५.१) तत्पदस्य वाच्यार्थः लक्ष्यार्थः च-

लौहपिण्डः तप्तः भवति चेत् अयो दहतीति लौहपिण्डाग्न्योः अभेदेन प्रतीतिः भवति। एवमेव समष्टिकारणसूक्ष्मस्थूलशरीराज्ञानसमष्टिः, एतदुपहितं चैतन्यम् अर्थात् ईश्वरः हिरण्यगर्भः विराड् च, एतदनुपहितं तुरीयं च ब्रह्म एकत्वेन अवभासमानं तत्पदस्य वाच्यार्थः भवति। समष्टिकारणशरीराज्ञानोपहितचैतन्यात् समष्टिसूक्ष्मशरीराज्ञानोपहितचैतन्यात् समष्टिस्थूल-शरीराज्ञानोपहितचैतन्यात् ईश्वरहिरण्यगर्भवैश्वानराणाम् आधारभूतं तुरीयं चैतन्यं भेदेन अवभासमानं तत्पदस्य लक्ष्यार्थः भवति।

### २०.५.२) त्वम्पदस्य वाच्यार्थः लक्ष्यार्थः च -

व्यष्टिकारणसूक्ष्मस्थूलशरीराज्ञानसमूहः, एतदुपहितं चैतन्यम् अर्थात् प्राज्ञः तैजसः विश्वः च, एतदनुपहितं तुरीयं च ब्रह्म अभेदेन अवभासमानं त्वम्पदस्य वाच्यार्थः भवति। व्यष्टिकारणशरीराज्ञानोपहितचैतन्यात् प्राज्ञात्, व्यष्टिसूक्ष्मशरीराज्ञानोपहितचैतन्यात् तैजसात्, व्यष्टिस्थूलशरीराज्ञानोपहितचैतन्यात् विश्वात् तुरीयं चैतन्यम् अर्थात् प्राज्ञतैजसविश्वानाम् आधारभूत चैतन्यं भेदेन अवभासमानं त्वम्पदस्य लक्ष्यार्थः भवति।

ननु जीवेश्वरयोः अत्यन्तं भेदः दृश्यते खलु। जीवः अल्पज्ञः, ईश्वरः सर्वज्ञः। जीवः अपरोक्षः, ईश्वरः परोक्षः। विलक्षणयोः जीवेश्वरयोः कथं तत्त्वमस्यादीनि वाक्यानि कथम् अखण्डैकरसं ब्रह्म प्रतिपादयन्ति। एवम् आशङ्कायां सत्याम् उच्यते तत्त्वमस्यादीनि महावाक्यानि साक्षात् ऐक्यं न प्रतिपादयन्ति चेदपि लक्षणया सम्बन्धत्रयेण अखण्डार्थस्य बोधकानि भवन्ति। पदयोः सामानाधिकरण्यम्, पदार्थयोः विशेषणविशेष्यभावः, प्रत्यगात्मपदार्थयोः लक्ष्यलक्षणभावः इति सम्बन्धत्रयम्। नैष्कर्म्यसिद्धौ सुरेश्वराचार्येण उक्तम्-

**"सामानाधिकरण्यं च विशेषणविशेष्यता।**

**लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्॥" इति।**



## २०.५.३) सामानाधिकरण्यसम्बन्धः

'सोऽयं देवदत्तः' इत्यस्मिन् वाक्ये तत्कालविशिष्टस्य देवदत्तवाचकस्य तत्पदस्य अर्थात् 'स' इति पदस्य, पुनः च एतत्कालविशिष्टस्य देवदत्तवाचकस्य 'अयम्' इति पदस्य एकस्मिन् देवदत्तरूपपिण्डे एव तात्पर्यसम्बन्धः अर्थात् सामानाधिकरण्यम् इत्यर्थः। एवमेव "तत्त्वमसि" इत्यस्मिन् वाक्ये परोक्षत्वसर्वज्ञत्वादिविशिष्टस्य चैतन्यवाचकस्य तत्पदस्य, पुनः अपरोक्षत्वाल्पज्ञत्वादिविशिष्टस्य चैतन्यवाचकस्य त्वम्पदस्य एकस्मिन् चैतन्ये एव तात्पर्यसम्बन्धः अर्थात् सामानाधिकरण्यम् इत्यर्थः।

## २०.५.४) विशेषणविशेष्यभावसम्बन्धः

यत् व्यावर्तकं भवति तत् विशेषणं भवति। यत् व्यावर्त्यं भवति तत् विशेष्यं भवति। यत् भेदस्य व्यावर्तकं तत् विशेषणम्। पुनः यस्य भेदः व्यावृत्तः तत् विशेष्यम्। "एतत्कालविशिष्टः एतद्देशविशिष्टः च देवदत्तः अयं सः" इत्यत्र सः अर्थात् तत्कालतद्देशविशिष्टात् देवदत्तरूपपिण्डात् अयम् अर्थात् एतत्कालैतद्देशविशिष्टः देवदत्तरूपपिण्डः अभिन्नः इति यदा प्रतीयते तदा एतत्कालैतद्देशविशिष्टस्य देवदत्तरूपपिण्डस्य तत्कालतद्देशविशष्टात् देवदत्तरूपपिण्डात् भेदः व्यावृत्तः। अत्र अयम् इति शब्दार्थस्य एतत्कालैतद्देशविशिष्टस्य भेदः व्यावृत्तः। अतः अयम् इति शब्दार्थस्य विशेष्यत्वम्। पुनः अत्र तत्पदस्य व्यावर्तकत्वम् अर्थात् विशेषणत्वम्। "तत्कालतद्देशविशिष्टः सः अयम्" इत्यत्र अयम् अर्थात् एतत्कालैतद्देशविशिष्टात् देवदत्तरूपपिण्डात् सः अर्थात् तत्कालतद्देशविशिष्टः देवदत्तरूपपिण्डः अभिन्नः इति यदा प्रतीयते तदा तत्कालतद्देशविशिष्टस्य देवदत्तरूपपिण्डस्य एतत्कालैतद्देशविशिष्टात् देवदत्तरूपपिण्डात् भेदः व्यावृत्तः। अत्र सः इति शब्दार्थस्य तत्कालतद्देशविशिष्टस्य भेदः व्यावृत्तः। अतः सः इति शब्दार्थस्य विशेष्यत्वम्। अयम् इति शब्दार्थस्य विशेषणत्वम्। एवमेव "तत्त्वमसि" इत्यत्रापि ज्ञेयम्।

"त्वं तदसि" इत्यत्र तत् अर्थात् सर्वज्ञत्वादिविशिष्टात् चैतन्यात् त्वम् अर्थात् अल्पज्ञत्वादिविशिष्टं चैतन्यम् अभिन्नम् इति यदा प्रतीयते तदा त्वम्पदवाच्यस्य अल्पज्ञत्वादिविशिष्टस्य चैतन्यस्य तत्पदवाच्यात् सर्वज्ञत्वादिविशिष्टात् चैतन्यात् भेदः व्यावृत्तः। अत्र त्वम् इति शब्दार्थस्य अपरोक्षत्वकिञ्चिज्ज्ञत्वादिविशिष्टस्य चैतन्यस्य भेदः व्यावृत्तः। अतः त्वम्पदार्थस्य विशेष्यत्वम्। तत्पदार्थस्य सर्वज्ञत्वादिविशिष्टस्य चैतन्यस्य व्यावर्तकत्वात् विशेषणत्वम्। "तत्त्वमसि" इत्यत्रापि त्वम् अर्थात् अरोक्षत्वाल्पज्ञत्वादिविशिष्टात् चैतन्यात् तत् अर्थात् परोक्षत्वसर्वज्ञत्वादिविशिष्टं चैतन्यम् अभिन्नम् इति यदा प्रतीयते तदा तत्पदार्थस्य परोक्षत्वसर्वज्ञत्वादिविशिष्टस्य चैतन्यस्य त्वम्पदवाच्यार्थात् अपरोक्षत्वाल्पज्ञत्वादिविशिष्टात् चैतन्यात् भेदः व्यावृत्तः। अत्र तत् इति शब्दार्थस्य सर्वज्ञत्वादिविशिष्टस्य चैतन्यस्य भेदः व्यावृत्तः। अतोऽत्र तत्पदार्थस्य विशेष्यत्वम्। पुनः त्वम्पदार्थस्य अल्पज्ञत्वादिविशिष्टस्य चैतन्यस्य विशेषणत्वम्। एवं तत्त्वम्पदार्थयोः अन्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः।



## २०.५.५) लक्ष्यलक्षणभावसम्बन्धः

यत् वाक्यम् असाधारणधर्मं प्रतिपादयति तत् वाक्यं लक्षणं भवति। असाधारणधर्मप्रतिपादकस्य वाक्यस्य यत् प्रतिपाद्यं वस्तु तदेव लक्ष्यं भवति। "सोऽयं देवदत्तः" इत्यस्मिन् वाक्ये सशब्दायंशब्दयोः तदर्थयोः च ये विरुद्धांशाः सन्ति तेषां तत्कालतद्देशविशिष्टैतत्कालैतद्देशविशिष्टांशानां परित्यागेन अविरुद्धदेवदत्तपिण्डेन साकं देवदत्तविशिष्टदेवदत्तवाचकशब्दस्य लक्ष्यलक्षणभावसम्बन्धः। अर्थात् "सोऽयं देवदत्तः" इत्यत्र त्यक्तयोः विरुद्धयोः सशब्दायंशब्दयोः तदर्थयोः च लक्षणत्वम्। अविरुद्धस्य देवदत्तरूपपिण्डस्य लक्ष्यत्वम्। एवमेव "तत्त्वमसि" इत्यत्र तत्त्वम्पदार्थयोः ये विरुद्धांशाः सन्ति तेषां परोक्षत्वसर्वज्ञादिविशिष्टापरोक्षत्वाल्पज्ञत्वादिविशिष्टांशानां परित्यागेन अविरुद्धेन अखण्डैकरसचैतन्येन साकम् परोक्षत्वसर्वज्ञत्वापरोक्षत्वाल्पज्ञत्वादिविशिष्टयोः तत्त्वम्पदयोः लक्ष्यलक्षणभावसम्बन्धः। अत्र भागत्यागलक्षणया विरुद्धांशपरित्यागेन अविरुद्धचैतन्यमात्रत्वम् अवगम्यते। इयमेव भागत्यागलक्षणा जहदजहल्लक्षणा उच्यते।

## २०.५.६) लक्षणा तद्भेदाः च

लक्षणायाः विषयः लक्ष्यो भवति। लक्षणायाः भागद्वयम् अस्ति। केवललक्षणा लक्षितलक्षणा च इति। शक्यसाक्षात्सम्बन्धः केवललक्षणा। गङ्गायां घोषः इत्यत्र गङ्गापदवाच्यार्थेण गङ्गाप्रवाहरूपेण साकं साक्षात्सम्बन्धिनि तीरे केवललक्षणा। यत्र शक्यार्थस्य परम्परासम्बन्धेन वाच्यार्थात् भिन्नस्य अर्थस्य प्रतीतिः भवति तत्र लक्षितलक्षणा भवति। यथा- शक्तस्य द्विरेफपदस्य भ्रमरपदघटितपरम्परासम्बन्धेन मधुकररूपस्य अर्थस्य प्रतीतिः भवति। गौणी अपि लक्षितलक्षणा भवति। यथा- सिंहो माणवकः इत्यत्र सिंहपदवाच्यः सिंहरूपपशुः। तस्य पशोः क्रुरत्वादिसम्बन्धेन माणवकस्य प्रतीतिः भवति।

प्रकारान्तरेण लक्षणायाः भागत्रयं विद्यते। जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा च इति। यत्र शक्यार्थम् अनन्तर्भाव्य एव अर्थान्तरप्रतीतिः भवति तत्र जहल्लक्षणा भवति। यथा- विषं भुङ्क्ष्व इत्यत्र विषभोजनं शक्यार्थो भवति। तं शक्यार्थं न अन्तर्भाव्य शत्रोः गृहे भोजनं मा कुरु इति भोजननिवृत्तिः लक्ष्यते। अतः विषं भुङ्क्ष्व इत्यत्र जहल्लक्षणा। यत्र शक्यार्थम् अन्तर्भाव्य एव अर्थान्तरप्रतीतिः तत्र अजहल्लक्षणा भवति। यथा- शुक्लो घटः इति। अत्र शुक्लशब्दस्य शुक्लगुणरूपः वाच्यार्थः। तं शुक्लगुणरूपं स्वार्थम् अन्तर्भाव्य एव शुक्लशब्दः शुक्लगुणविशिष्टे द्रव्ये लक्षणया तिष्ठति। अतः शुक्लशब्दः लक्षणया शुक्लगुणविशिष्टस्य द्रव्यस्य बोधं जनयति। यत्र विशिष्टवाचकः शब्दः विशेषणरूपम् एकदेशं विहाय विशेष्यरूपस्य एकांशस्य बोधकः भवति तत्र जहदजहल्लक्षणा भवति। यथा- सोऽयं देवदत्तः इत्यत्र पदद्वयवाच्ययोः तत्कालतद्देशविशिष्टैतत्कालैतद्देशविशिष्टयोः ऐक्यानुपपत्त्या देवदत्तपिण्डरूपविशेष्यमात्रपरत्वम्।

## २०.५.७) तत्त्वमसीत्यत्र जहल्लक्षणायाः असङ्गतिः

तत्त्वमसीत्यत्र जहल्लक्षणा न सङ्गच्छते। गङ्गायां घोषः इत्यत्र तु जहल्लक्षणा सङ्गच्छते। गङ्गाघोषयोः आधाराधेयभावो विद्यते। स च आधाराधेयभावः अशेषतः विरुद्धः। कारणं हि गङ्गायां कदापि



घोषः अवस्थातुं न शक्नोति। अतः गङ्गायां घोषः इति वाक्यस्य मुख्यार्थे विरोधे सति मुख्यम् अर्थं परित्यज्य लक्षणया तत्सम्बन्धिनि तीरे घोषस्य अवस्थानसम्भवात् जहल्लक्षणा अत्र स्वीक्रियते। अत्र यथा गङ्गापदं प्रवाहरूपं स्वार्थं परित्यज्य स्वसम्बद्धं तीरं लक्षयति तथैव तत्पदं परोक्षत्वसर्वज्ञत्वादिविशिष्टं स्वार्थं परित्यज्य त्वम्पदार्थमर्थात् जीवचैतन्यं लक्षयतु। एवमेव त्वम्पदम् अपरोक्षत्वाल्पज्ञत्वादिविशिष्टं स्वार्थं परित्यज्य तत्पदार्थम् ईश्वरचैतन्यं लक्षयतु। अतः अत्र जहल्लक्षणा भवतु इति आशङ्कायां सत्याम् उच्यते तत् न भवति। मुख्यार्थे विरोधे सति एव मुख्यार्थेन सम्बद्धः यः अर्थः श्रुतः नास्ति, तस्मिन् अश्रुते अर्थे लक्षणा भवति इति शास्त्रप्रसिद्धम्। गङ्गायां घोषः इत्यत्र गङ्गापदं प्रवाहरूपं स्वार्थं परित्यज्य तीरपदार्थं लक्षयति इति युक्तियुक्तं भवति। कारणं हि गङ्गाघोषयोः आधाराधेयभावसम्बन्धरूपस्य मुख्यार्थस्य विरोधो विद्यते। पुनः अत्र तीरपदार्थः अश्रुतः अस्ति। अतः लक्षणया अश्रुतस्य तीरपदार्थस्य ज्ञानम् अपेक्षितम्। किन्तु तत्त्वमसि इत्यत्र तत्त्वम्पदाभ्याम् एव तयोः परोक्षत्वसर्वज्ञत्वादिविशिष्टापरोक्षत्वाल्पज्ञत्वादिविशिष्टः अर्थः श्रुतः वर्तते। अत्र अश्रुतः पदार्थः नास्ति, यस्मिन् पदार्थे जहल्लक्षणा स्वीक्रियेत। लक्षणया श्रुतस्य पदार्थस्य ज्ञानं न अपेक्षितम्। अतः तत्त्वमसि इत्यत्र जहल्लक्षणा न स्वीक्रियते।

## २०.५.८) तत्त्वमसीत्यत्र अजहल्लक्षणायाः असङ्गतिः

शोणो धावति इत्यस्मिन् वाक्ये शोणोगुणस्य गमनासम्भवात् मुख्यार्थस्य विरोधः। अतः तस्मिन् वाक्ये श्रूयमाणं शोणपदं स्वार्थम् अपरित्यज्य स्वस्य आश्रयभूतम् अश्वादिकं लक्षयति। अतः अत्र अजहल्लक्षणा सङ्गच्छते। किन्तु तत्त्वमसि इत्यत्र अजहल्लक्षणा न सङ्गच्छते। कारणं हि तत्त्वमसि इत्यत्र परोक्षत्वसर्वज्ञत्वापरोक्षत्वकिञ्चिज्ज्ञत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात् परोक्षत्वसर्वज्ञत्वापरोक्षत्वकिञ्चिज्ज्ञत्वादिविशिष्टांशापरित्यागेन तत्सम्बन्धयुक्तस्य यस्य कस्यापि लक्षितत्वे सत्यपि परोक्षत्वसर्वज्ञत्वापरोक्षत्वाल्पज्ञत्वादिविशिष्टांशानां विरोधः परिहर्तुं नैव शक्यते। अतः विरोधपरिहारस्य असम्भवात् अत्र अजहल्लक्षणा न सङ्गच्छते।

## २०.५.९) तत्त्वमसीत्यत्र भागत्यागलक्षणायाः सङ्गतिः

भागत्यागलक्षणायाः अपरं नाम जहदजहल्लक्षणा। सोऽयं देवदत्तः इत्यत्र यथा तत्कालतद्देशविशिष्टस्य एतत्कालैतद्देशविशिष्टस्य च विरुद्धांशस्य परित्यागं कृत्वा लक्षणया अविरुद्धदेवदत्तरूपपिण्डः अवबुध्यते, तथैव तत्त्वमसि इत्यत्र अपरोक्षत्वाल्पज्ञत्वादिविशिष्टांशस्य परोक्षत्वसर्वज्ञत्वादिविशिष्टांशस्य च विरुद्धांशस्य परित्यागं कृत्वा लक्षणया अविरुद्धाखण्डैकचैतन्यमात्रं बोधयति। अत्र विरुद्धांशस्य त्यागं कृत्वा अविरुद्धांशः लक्षणया बोध्यते। अतः अत्र भागत्यागलक्षणा युक्तियुक्ता भवति। साम्प्रदायिकाः अपि कथयन्ति यत् तत्त्वमसि इत्यत्र तत्पदवाच्यस्य परोक्षत्वसर्वज्ञत्वादिविशिष्टस्य त्वम्पदवाच्येन अपरोक्षत्वाल्पज्ञत्वादिविशिष्टेन साकम् ऐक्यानुपपत्तेः ऐक्यसिद्ध्यर्थमेव स्वरूपे लक्षणा स्वीकर्तव्या इति।



## २०.५.१०) तत्त्वमसीत्यत्र न कापि लक्षणा

वेदान्तपरिभाषाकाराणां धर्मराजाध्वरीन्द्राणां मते तु अत्र लक्षणा एव नास्ति। तत्कालैतत्कालतद्देशैतद्देशादिविशेषणविशिष्टवाचकपदानाम् एकदेशे विशेष्ये देवदत्तपिण्डस्वरूपमात्रे यदि तात्पर्यं भवति तर्हि सोऽयं देवदत्तः इत्यत्र लक्षणा न आश्रयणीया। शक्त्या एव देवदत्तपिण्डस्वरूपस्य बोधो भवति। नानार्थकशब्दस्य नानार्थे शक्तिज्ञानं भवति चेदपि यस्मिन् अर्थे तात्पर्यनिश्चयो भवति, नानार्थकपदेन तस्य एव अर्थस्य संस्कारोद्बोधात् तस्य अर्थस्य उपस्थितिः भवति, नान्यस्य कस्यापि अर्थस्य। विशिष्टोपस्थापकपदानां विशेष्यस्वरूपमात्रे तात्पर्यनिश्चयो भवति चेत् विशेष्यस्वरूपसंस्कारस्य उद्बोधो भवति। विशेष्यस्य स्वरूपविषयकसंस्कारसहकृतपदानां श्रवणात् एव विशेष्यस्वरूपस्य उपस्थितिः भवति। सर्वज्ञत्वाल्पज्ञत्वादिविशिष्टवाचकपदानां विशेष्ये अखण्डब्रह्मणि यदि तात्पर्यं तर्हि लक्षणा अत्र न स्वीकर्तव्या। तत्त्वमसि इत्यत्र तत्पदेन त्वम्पदेन च विशेष्यम् अखण्डैकरसं चैतन्यमेव उपस्थापितम्। तयोः चैतन्ययोः अभेदान्वये कोऽपि बाधकः नास्ति। यदि विशेष्यमात्रे तात्पर्ययुक्तवाक्ये लक्षणा स्वीक्रियते तर्हि गेहे घटः, घटे रूपम्, घटम् आनय इत्यादिषु अपि लक्षणा स्वीकर्तव्या। अतः एव धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायां निगद्यते "एवमेव तत्त्वमसि इति वाक्ये अपि न लक्षणा, शक्त्या स्वातन्त्र्येण उपस्थितयोः तत्त्वम्पदार्थयोः अभेदान्वये बाधकाभावात्। अन्यथा गेहे घटः, घटे रूपम्, घटम् आनय इत्यादौ घटत्वगेहत्वादेः अभिमतान्वयबोधयोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणा एव स्यात्" इति।

अद्वैतवेदान्तसिद्धान्ते तात्पर्यानुपपत्तिरेव लक्षणा। गङ्गायां घोषः इत्यत्र गङ्गापदस्य गङ्गातीरे एव तात्पर्यम्। यदा गङ्गापदस्य जलप्रवाहरूपः शक्यार्थः स्वीक्रियते तदा तात्पर्यस्य अनुपपत्तिः भवति। अतः अत्र लक्षणा स्वीक्रियते। तत्त्वमसि इत्यत्र तु जीवात्मनः परमात्मनः च ऐक्यरूपं तात्पर्यम् उपपद्यते। अतः जीवब्रह्मात्मैक्यरूपतात्पर्यस्य उपपत्तेः अत्र लक्षणा न आश्रयणीया।

ननु अहम् ईश्वरः न, अहं मनुष्यः इत्यादिप्रत्यक्षेण, एकस्मिन् एव किञ्चिज्ज्ञत्वसर्वज्ञत्वापरोक्षत्वपरोक्षत्वादिविरुद्धहेतुना जीवब्रह्मणोः भेदः स्पष्टः। पुनः च मुण्डकोपिनिषदि आम्नायते -

**"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अन्योऽनश्ननभिचाकशीति॥" (३/१/१) इति।**

अत्रापि जीवब्रह्मणोः भेदेन कथनं श्रूयते। अपि च भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां कथ्यते

**"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥" (१५/१६) इति।**

एवं गीतादिस्मृतिभिरपि जीवब्रह्मणोः भेदः निगदितः। आनन्दमयाधिकरणे पठिते "भेदव्यपदेशाच्च(१-१-१७)" इत्यस्मिन् सूत्रे श्रौतः जीवब्रह्मभेदव्यपदेशः निगदितः। जीवः स्वरूपतः ब्रह्माभिन्नश्चेदपि अविद्याकृतदेहाद्युपाधिसम्बन्धवशात् ब्रह्मभिन्ने जीवे सति लब्धृलब्धव्यभावः



सम्भवतीत्यतः "आत्मा अन्वेष्टव्यः" (बृहदारण्यकोपनिषद् २.४.५), "आत्मलाभान्न परं विद्यते" (श्रीमद्भगवद्गीता ६-२२) चेत्यादिश्रुतिस्मृतयः सङ्गच्छन्ते एव।

ननु जीवब्रह्मणोरज्ञानकृतकल्पितभेदस्वीकारात् लब्धृलब्धव्यभावस्वीकारस्य वैयर्थ्यं प्रसज्यते इति चेन्न, परमार्थतः तयोरभेदकथनाय लब्धृलब्धव्यभावः कथितः। बृहदारण्यकोपनिषदि उच्यते-"नान्योऽतोऽस्ति द्रष्टा" (३-७-२३) इति। भगवान् शङ्कराचार्योऽपि एवमेव कथयति - "प्रतिषिध्यते एव तु परमार्थतः सर्वज्ञात् परमेश्वरात् अन्यः द्रष्टा श्रोता वा, नान्योऽतोऽस्ति द्रष्टा इत्यादिना" इति॥

ननु परमार्थतः जीवस्य ब्रह्माभिन्नत्वात्, जीवस्य च अविद्याकल्पितत्वात् ईश्वरोऽपि मिथ्या इति चेन्न, अविद्याकल्पितजीवात् परमेश्वरस्य भिन्नत्वात्। सर्वे जीवा अविद्यामन्त एवेति दर्शयितुमुच्यते सुरेश्वराचार्येण नैष्कर्म्यसिद्धेः तृतीयाध्यायगते एकादशाधिकशततमे श्लोके-

**"अहो धार्ष्ट्यमविद्यायाः न कश्चिदतिवर्तते।**

**प्रमाणं वस्त्वनादृत्य परमात्मेव तिष्ठति" इति।**

"रसं ह्येवायं लब्ध्वानन्दी भवति" इत्यस्यां श्रुतौ रसमिति द्वितीयान्तपदेन, अयमिति प्रथमान्तपदेन जीवब्रह्मणोः लब्धृलब्धव्यभावेन भेदनिर्देशः निगदितः। अधिष्ठानव्यतिरेकेण कल्पितवस्तुनः सत्त्वासिद्धे सत्यपि कल्पितवस्तुसत्ताव्यतिरेकेण अधिष्ठानसत्त्वं प्रत्यक्षसिद्धमेव। अत अविद्याकल्पितत्वात् जीवस्य ब्रह्माभिन्नमधिष्ठानमवश्यं वक्तव्यम्। बिम्बव्यतिरेकेण प्रतिबिम्बस्य निरपेक्षसत्त्वाभावात् प्रतिबिम्बं बिम्बाभिन्नम्। अप्पयदीक्षितेनापि एवमेव भण्यते सिद्धान्तलेखसंग्रहे - "एवमुक्तेषु एतेषु जीवेश्वरयोः प्रतिबिम्बविशेषपक्षेषु यत् बिम्बस्थानीयं ब्रह्म तत् मुक्तप्राप्यं शुद्धचैतन्यमिति" इति। किन्तु प्रतिबिम्बस्य बिम्बाभिन्नत्वेऽपि बिम्बः प्रतिबिम्बरूपेण न परिणमते। अतः न परमेश्वरस्य मिथ्यात्वम्। अतः तत्त्वमसि इति महावाक्यं यदि अभेदार्थकं भवति तर्हि वेदस्मृतिप्रत्यक्षप्रमादिभ्यः तत् विरुद्ध्यते। अतः तत्त्वमसि इति वाक्यम् अभेदार्थात् भिन्नार्थकं भवति इति आशङ्कायां सत्यामुच्यते तत् न भवति। कारणं हि भेदविषयकप्रत्यक्षे चक्षुरादिकरणानां दोषाः सम्भवन्ति। दोषयुक्तेभ्यः चक्षुरादिकरणेभ्यः अहमन्धः, अहं मूकः इत्यादि प्रत्यक्षं भवति। तादृशे प्रत्यक्षे दोषाः सम्भवन्ति। किन्तु अपौरुषेये वेदे दोषाः न सम्भवन्ति। प्रत्यक्षापेक्षया आगमस्य एव बलवत्वम्, अपौरुषेयत्वात्। पुनः श्रुतिषु जीवात्मपरमात्मनोः यः भेदः निगतितः स भेदः तु अविद्यया कल्पितः। अविद्या च मिथ्याभूता। अतः तया कल्पितः भेदः अपि मिथ्या एव। "सर्वं खल्विदं ब्रह्म" (छान्दोग्योपनिषद् ३.१४.१), "आत्मैवेदं सर्वं" (छान्दोग्योपनिषद् ७.२५.२), "ब्रह्मैवेदममृतं" (मुण्डकोपनिषद् २.२.११), "सदेव सोम्य इदमग्र आसीत्" (छान्दोग्योपनिषद् ३.२.१), "तत्त्वमसि" (छान्दोग्योपनिषद् ६.८.७), "अयमात्मा ब्रह्म" (बृहदारण्यकोपनिषद् २.५.१९) चेत्यादिसहस्रश्रुतयः वेदान्तानां प्रत्यगभिन्ने एकस्मिन् ब्रह्मण्येव तात्पर्यं दर्शयन्ति। अतः वस्तुतस्तु जीवपरामात्मनोः अभेदः एव।



### २०.५.११) पञ्चदशीकाराणां मते तत्त्वम्पदार्थनिरूपणम्

विद्यारण्यस्वामिना पञ्चदश्याः महावाक्यविवेकप्रकरणे उच्यते -

**"एकमेवाद्वितीयं सन्नामरूपविवर्जितम्।**

**सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते॥"** (५/५) इति।

अस्य श्लोकस्य अर्थः तावत् अस्याः जगत्सृष्टेः पूर्वम् एकमेवाद्वितीयं नामरूपरहितं यत् ब्रह्म आसीत् सृष्टेः परमपि तादृशमेव ब्रह्म अस्ति। तदेव ब्रह्म अत्र तदिति पदेन निगद्यते। छान्दोग्योपनिषदि निगद्यते -

**"सदेव सोम्य इदमग्र आसीदेकमेव अद्वितीयम्।**

**तद्धैक आहुरसदेव इदमग्रासीदेकमेव अद्वितीयं तस्मात् असतः सज्जायत"** (६/२/१)

**इति।**

ननु ब्रह्म यदि सत् स्यात् तर्हि श्रुतीनां स्मृतीनां च वैयर्थ्यप्रसङ्गः खलु।

ब्रह्म न सत्, नाप्यसदिति ऋग्वेदे निगदितम्। उच्यते ऋग्वेदे-

**"नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परोयत्।**

**किमावरीवः कुहकस्य शर्मन्नभः किमासीत् गहनं गभीरम्॥"**(१०/१२९/१) **इति।**

श्रीमद्भगवद्गीतायां श्रीकृष्णेनाप्युच्यते -

**"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।**

**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥"** (१३/१२) **इति।**

अतः ब्रह्म न सत्, नापि असत्।

"नेति नेति" (बृह.उ–४.४.२२), "अशब्दमस्पर्शमरूपमव्ययम्" (कठोपनिषत्–१.३.१५), "अस्थूलमनण्वह्रस्वमदीर्घम्" (बृह.उ–३.८.८) चेत्येवं सर्वासु उपनिषत्सु ज्ञेयवस्तुनः ब्रह्मणः वागगोचरत्वादशेषविशेषप्रतिषेधद्वारेण निर्विशेषत्वं भणितम्।

ननु निर्विशेषं ज्ञेयं ब्रह्म अस्ति वा नास्ति वा? यदि अस्तीत्युच्यते तर्हि अवश्यं सद्भवेत्। नास्तीत्युच्यते चेत् अवश्यमसद्भवेत्। अत्रोच्यते - इन्द्रियगोचरं वस्त्वेव सदसद्बुद्धिगोचरं भवति। घटस्येन्द्रियगोचरत्वात् घटोऽस्ति इत्युच्यते। भूतले घटः नास्ति चेत् घटाभावस्येन्द्रियगोचरत्वात् घटः नास्ति इत्युच्यते। न तथा घटादिवद्ब्रह्मवस्तु येन सदसद्बुद्धिगोचरं भवेत्। किन्त्वभावस्य प्रत्यक्षत्वं कथमिति चेदुच्यते धर्मराजाध्वरीन्द्रेण वेदान्तपरिभाषायां "ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्" इति। भगवता शङ्कराचार्येणापि श्रीमद्भगवद्गीताभाष्ये उक्तम् "इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वात् न घटादिवत्

उभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो 'न सत् तन्नासत्' इत्युच्यते" इति। अधुना विद्यारण्यस्वामिनः त्वम्पदस्य लक्ष्यार्थं कथयन्ति यत् -

**"श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम्।**

**एकता ग्राह्यते असीति तदैक्यमनुभूयताम्॥"** (५/६) **इति।**

अस्य श्लोकस्य अर्थः तावत् श्रवणमनननिदिध्यासनादिना यदा श्रोतुः महावाक्यार्थज्ञानं भवति तदा देहेन्द्रियाद्यतीतं कारणसूक्ष्मस्थूलानां शरीराणां साक्षिरूपेण विद्यमानं सत् वस्तु एव त्वम्पदेन उक्तम् अस्ति। अत्र असीति पदेन प्रत्यगात्मपरमात्मनोः ऐक्यं सूचितम्।

## २०.६) अयमात्मा ब्रह्म

अथर्ववेदस्य माण्डूक्योपनिषदि "अयमात्मा ब्रह्म" इति महावाक्यम् उपलभ्यते। सम्पूर्णः मन्त्रः तावत् "सर्वं ह्येतद्ब्रह्म अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्" इति। अयमिति शब्देन अत्र प्रत्यगात्मा अभिधीयते। विद्यारण्यस्वामिनः पञ्चदश्यां वदन्ति यत् -

**"स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम्।**

**अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते॥"** (५/७) **इति।**

प्रत्यगात्मा स्वप्रकाशापरोक्षस्वभावः भवति। अत्र आत्मनः परोक्षत्वं व्यावर्तयितुम् अपरोक्षशब्दस्य प्रयोगः विहितः। पुनः घटादिवत् दृश्यत्वं व्यावर्तयितुं स्वप्रकाशत्वं निगदितम्। घटस्य स्वपकाशत्वं नास्ति। अहङ्कारः आदिः यस्य प्राणमनइन्द्रियदेहसंघातस्य तस्य अहङ्कारादिः, तथा देहे अन्तः यस्य प्राणमनइन्द्रियदेहसंघातस्य स देहान्तः। एतेषां सर्वेषां प्रत्यगधिष्ठानतया साक्षितया च आन्तरः आत्मा इति कथ्यते। अपि च विद्यारण्यस्वामिनः निगदन्ति यत् -

**"दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते।**

**ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम्॥"** (५/८) **इति।**

यस्य ब्रह्मणः बाधे सति अस्य मिथ्याभूतस्य सर्वस्य आकाशादिप्रपञ्चस्य बाधः भवति तत् पारमार्थिकं ब्रह्म अत्र उक्तम्। तस्य स्वप्रकाशस्वरूपस्य ब्रह्मणः प्रकाशेन सर्वे वयं प्रकाशवन्तः। तस्य एव प्रकाशेन चन्द्रसूर्यादयः अपि प्रकाशमानाः भवन्ति। अतः एव मुण्डकोपनिषदि निगद्यते

**"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।**

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** (२/२/११) **इति।**



## पाठसारः

सर्वेभ्यः वेदान्तशास्त्रेभ्यः सूक्ष्मं निर्विशेषं निरवयवं निरञ्जनं सर्वानुस्यूतम् अस्तितामात्रं सत् ब्रह्म वस्तु अत्र सदित्यनेन उच्यते। इदं जगत् नामरूपक्रियावत् विकृतं यदुपलभ्यते तदेव उत्पत्तेः पूर्वं



नामरूपक्रियाविवर्जितम् आसीत्। उत्पत्तेः पूर्वम् इदं जगत् सच्छब्दबुद्धिमात्रगम्यम् आसीत्। सृष्टेः पूर्वम् अस्य जगतः नामरूपादिकं ग्रहीतुं न शक्यते। केवलं जगतः सत्त्वमात्रं ग्रहीतुं शक्यते। यथा- सुषुप्त्यवस्थायां स्थित्वा सुषुप्तात् उत्थितः जनः सत्त्वमात्रम् अवगच्छति। तथैव अत्रापि ज्ञातव्यम्। कुलालस्य गृहे प्रातः कश्चन मृत्तिकां दृष्टवान्। स एव पुरुषः यदा अपराह्णे कुलालागृहम् आगतवान् तदा दृष्टवान् यत् तत्र घटशरावादयः सन्ति। ततः परं यथा स पुरुषः कथयति मृत्तिका एव इदम् आसीत्। तथैव सदेव सोम्य इदम् अग्र आसीत्। यथा मृत्तिकां घटादिना परिणमयितुं कलालादयः निमित्तकारणरूपेण दृष्टाः, न तथा अत्र सद्ब्रह्म विना अन्यत् किञ्चित् निमित्तकारणम् अस्ति। सतः सहकारिकारणं द्वितीयं नास्ति। अतः सत् ब्रह्म अद्वितीयमिति उच्यते। तच्च ब्रह्म सच्चिदानन्दस्वरूपं भवति। स्वयंप्रकाशस्वरूपस्य ब्रह्मणः प्रकाशेन सर्वे वयं प्रकाशवन्तः। जीवब्रह्मणोः अविद्याकल्पितभेदे सति अपि परमार्थतः अभेदे एव सर्वेषां वेदान्तानां तात्पर्यम्।



## पाठेऽधिगताः विषयाः-

- महावाक्यं जीवब्रह्मणोः ऐक्यं प्रतिपादयन्ति।
- अतस्मिन् तद्बुद्धिः अध्यारोपः।
- अपवादः नाम वस्तुनि भासमानस्य अवस्त्वज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्।
- अज्ञानं सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत् किञ्चित् इति।
- परमात्मा अपरोक्षस्वप्रकाशस्वरूपः भवति।
- सर्वेभ्यः वेदान्तशास्त्रेभ्यः सूक्ष्मं निर्विशेषं निरवयवं निरञ्जनं सर्वानुस्यूतम् अस्तितामात्रं सत् ब्रह्म वस्तु एव अवगम्यते।
- सतः सहकारिकारणं द्वितीयं नास्ति। अतः सत् ब्रह्मैव अद्वितीयमिति उच्यते।
- जीवब्रह्मणोः अविद्याकल्पितभेदे सति अपि परमार्थतः अभेदः एव।



## पाठगतप्रश्नाः-१

१. छान्दोग्योपनिषदि विद्यमानं महावाक्यं किम्?

२. माण्डूक्योपनिषदि विद्यमानं महावाक्यं किम्?

३. ऋग्वेदः नाम किम्?

४. श्रीमद्भगवद्गीतायां ब्रह्मणः सदसदनिर्वचनीयत्वप्रतिपादकः श्लोकः कः?

५. ब्रह्म एव सर्वं प्रकाशयति इत्यत्र का श्रुतिः?

६. अध्यारोपः नाम किम्?

७. अपवादः नाम किम्?



८. अज्ञानस्य लक्षणं किम्?

९. लक्षणा नाम किम्?

१०. भागत्यागलक्षणा नाम किम्?

११. अज्ञानस्य त्रिगुणात्मत्वप्रतिपादिका श्रुतिः का?

१२. लक्षणायाः कति भागाः, के च ते?



## पाठान्तप्रश्नाः

१. महावाक्यं नाम किम्?

२. जहल्लक्षणा नाम किम्?

३. धर्मराजाध्वरीन्द्राणां मते लक्षणा नाम किम्?

४. अध्यारोपापवादाभ्यां कथं तत्त्वम्पदार्थशोधनं भवति?

५. "तत्त्वमसि" इति महावाक्ये तत्पदस्य लक्ष्यार्थं वाच्यार्थं च लिखत?

६. "तत्त्वमसि" इति महावाक्ये त्वम्पदस्य लक्ष्यार्थं वाच्यार्थं च विवृणुत?

७. "अयमात्मा ब्रह्म" इति महावाक्यं पञ्चदशीकाराणां मतानुसारेण प्रतिपाद्यताम्?

८. अजहल्लक्षणा नाम किम्, उदाहरणेन लिख्यताम्?

९. केवललक्षणा नाम किम्, उदाहरणेन लिख्यताम्?

१०. अपवादः नाम किम्?

११. अज्ञानस्य अनिर्वचनीयत्वं प्रतिपादयतु?

१२. लक्षितलक्षणा नाम किम्, उदाहरणेन आलोचयतु?

१३. सम्बन्धत्रयेण "तत्त्वमसि" इति महावाक्यस्य अखण्डार्थत्वं विचारयतु?

१४. "तत्त्वमसि" इति महावाक्ये लक्षणा सम्भवति न वा इति वेदान्तपरिभाषाकारस्य मतानुसारेण विचारः उपस्थाप्यताम्?

१५. "तत्त्वमसि" इति महावाक्ये कथं न जहल्लक्षणायाः सङ्गतिः भवति?

१६. "तत्त्वमसि" इति महावाक्ये किमर्थं न अजहल्लक्षणा सङ्गच्छते?



## पाठगतप्रश्नानाम् उत्तराणि-

१. "तत्त्वमसि" इति महावाक्यम्।

२. "अयमात्मा ब्रह्म" इति।

३. ऋच्यते स्तूयते यया सा ऋक्। ऋचां समूहः एव ऋग्वेदः।

४. "ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥" (१३/१२)



इति।

५. मुण्डकोपनिषदि निगद्यते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (२/२/११) इति।

६. वस्तुनि अवस्तुनः आरोपः अध्यारोपः।

७. अपवादः नाम वस्तुनि भासमानस्य अवस्त्वज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्।

८. अज्ञानं सदसद्भ्याम् अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत् किञ्चित् च इति।

९. तात्पर्यानुपपत्तिरेव लक्षणा इति वेदान्तपरिभाषाकारस्य मतम्।

१०. यत्र विशिष्टवाचकः शब्दः विशेषणरूपम् एकदेशं विहाय विशेष्यरूपस्य एकांशस्य बोधकः भवति तत्र भागत्यागलक्षणा भवति।

११. श्वेताश्वतरोपनिषदि निगद्यते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥" (४/५) इति।

१२. लक्षणा द्विविधा। केवललक्षणा लक्षितलक्षणा च इति। प्रकारान्तरेण लक्षणा त्रिविधा। जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा च इति।

॥ इति विंशः पाठः ॥



२१

# साधना-१

## प्रस्तावना

मोक्षाख्यस्य परमपुरुषार्थस्य प्राप्तये अद्वैतवेदान्तस्य प्रपञ्चः। स च मोक्षः तेन लब्धव्यो यो बन्धम् अनुभवति। यश्च बन्धं नानुभवति परन्तु अन्येषां प्रचेष्टां दृष्ट्वा स्वबन्धम् अनुमिनोति सोऽपि अत्र मोक्षपथि इति ग्रहीतुं शक्यते। तथा च बन्धात् मोक्षं यावत् कानि साधनानि सन्ति, तेषां कः क्रमः वर्तते, कस्मात् साधनात् किं लब्धव्यम् इत्यादयो नैके विषया मुमुक्षोः जिज्ञास्याः सन्ति। एतेषामेव उपस्थापनाय साधनस्य पाठरूपेण प्रस्तुतिः। साधनाविषयः अति महान् सुसूक्ष्मश्च वर्तते। तस्य समग्रस्य अत्र प्रकटनं नैव सम्भवति। तथापि संक्षेपतः प्रधानविषयाः प्रस्तूयते।

समग्रस्यापि साधनस्य विभाजनं कृत्वा विविधपाठरचना कृतास्ति।



## उद्देश्यानि

पाठस्यास्याध्ययनेन

- अनुबन्धान् समासेन अवगच्छेत्।
- अनुबन्धानां ज्ञानस्य आवश्यकतां बुध्यात्।
- कर्मरहस्यं जानीयात्।
- साधनायाः कारणम् अवधारयेत्।
- अधिकारिणः सम्पादनीया सम्पत्तिः स्पष्टा भवेत्।
- सम्पत्तेरर्जनाय किं साधनं केन क्रमेण कर्तव्यमिति विवेको जायेत।

## २१.१) भूमिका

वेदान्तस्य साधनानि विशिष्टक्रमेण विशिष्टनामभिश्च प्रकट्यन्ते। साधकः साधनेन किं फलं लभेत इति विषये तस्य स्पष्टता आवश्यकी। अतः एतस्य विषयस्य प्रकटनाय अनुबन्धा उपस्थाप्यन्ते। स्पष्टज्ञानेन यः कोऽपि मानवः पुरुषार्थलाभाय यतेत। यतो हि-

**महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया।**

**पारं दुःखोदधेर्गन्तुं तर यावन्न भिद्यते॥**



मानवशरीरं बहुषु जन्मसु अर्जितेन महता पुण्येन लभ्यते। इदं शरीरं कायरूपिणी नौका। दुःखसागरं तर्तुं लब्धा। यावत् नौका न भिद्यते तावत् पारं गन्तव्यमिति अभिप्रायः श्लोकस्यास्य।

आदिनम् आजीवनं च जन्तुः कर्मरतः। तस्य कर्मणो वेदान्तदृष्ट्या विवेचनम् इष्टम्। तदेवात्र प्रस्तूयते।

## २१.२) कर्माणि

कर्म अकृत्वा न कोऽपि क्षणमेकं जातु तिष्ठति। सर्वोऽपि जन्तुः कर्मरतः। कायिकमानसिकभेदेन कर्म द्वैविध्यं भजते। कामः कर्महेतुः प्रवर्तकत्वात्। अर्थान् कोऽपि कर्म कर्तुं प्रवर्तते, तथा प्रवृत्तिं प्रति को हेतुः। उच्यते कर्महेतुर्हि कामः। कुतः इति चेद् उच्यते यत् कामः प्रवर्तकः, प्रेरकः। अयं कामः कुतः जायते। यः अनात्मविद् तस्य कामः जायते। कुतः अनात्मविदः कामः जायते। यतो हि कामः अनात्मफलविषयः। कश्च विषयः। सुखं दुःखपरिहारश्च विषयः, तदुपायाश्च। अत एव तानि च कर्माणि शास्त्रतः जानन् शास्त्रानध्ययनात् अजानन् वा जन्तुः सुखलाभाय दुःखपरिहाराय च कर्माणि अनुतिष्ठति। सुखस्य कारणं धर्मः, धर्मस्य कारणं वेदादिविहितानि काम्यकर्माणि। दुःखस्य कारणम् अधर्मः। अधर्मस्य कारणं वेदादिभिः निषिद्धानि कर्माणि। यदपि कर्म क्रियते तस्य किमपि फलं सद्यः लभ्यते, किमपि फलम् कालेन अस्मिन् जन्मनि अग्रिमजन्मसु वा लभ्यते। अद्य समाप्तस्य कर्मणः कालान्तरेण फलं कथं स्यात्। तत्रोच्यते यत् सम्प्रति क्रियामाणं कर्म तस्य किमपि दृष्टं फलं सद्यः उत्पादयति, परन्तु तत् कर्म अन्तःकरणे कमपि विशिष्टं संस्कारम् उत्पादयति। अयं संस्कारः एव काम्यकर्मजन्यः चेत् धर्मः पुण्यम् इत्यादि आख्यायते। यदि संस्कारः निषिद्धकर्मजन्यः तर्हि स संस्कारः अधर्मः पापम् इत्यादि समाख्यायते। धर्मः अधर्मो वा फलदाने नियतौ स्तः। अर्थात् तयोः फलं भवति एव। एवञ्च फलोपभोगेन पुण्यापुण्ययोः शान्तिः भवति। यदि जातु निषिद्धं कर्म क्रियते, परन्तु तस्य अनिष्टं फलं न काम्यते तर्हि निषिद्धकर्मणः जायमानस्य पापस्य सद्यः नाशाय प्रायश्चितं कर्म क्रियते।

यदपि काम्यं निषिद्धं वा कर्म क्रियते तस्य अन्तःकरणे जातः संस्कारः अग्रे कदाचित् फलं दद्यात्। इत्थं बहुषु जन्मसु कृताः संस्काराः सन्ति। ते सर्वेऽपि **संचितं** कर्म कथ्यते। तेषु यत् कर्म परिपाकवशाद् फलं दातुम् प्रारभते तत् प्रारब्धं कथ्यते। एकस्य जन्मनः मृत्युं यावत् कारणस्वरूपं सुखदुःखात्मकफलदायकं च **प्रारब्धम्** कथ्यते। प्रारब्धं समाप्तं चेत् मृत्युः भवति। ततः परं संचितेषु कर्मसु यत् कर्म फलोन्मुखं भवति तद्वशात् पुनः जन्म भवति। तदा तत् संचितं फलम् दातुम् आरभते। अधुना तत् प्रारब्धं कथ्यते। प्रति जन्म मानवः यत् कर्म करोति तस्य धर्माधर्मरूपः संस्कारविशेषः भवति। प्रकृतजन्मनि यत् कर्म क्रियते तत् **क्रियमाणं** कथ्यते। इत्थम् एकस्मिन् जन्मनि प्रारब्धक्षयः भवति, नूतनसंचितस्य च उत्पत्तिः भवति। तत् संचितं परिपक्वं चेत् प्रारब्धत्वेन परिणमते। एतेन कारणेन जन्मनः जन्मान्तरं लभते जन्तुः। तत्र केवलं मनुष्यलोकः कर्मभूमिः वर्तते यत्र कर्म कृतं चेत् तस्य धर्माधर्मौ उत्पद्येते। पशुपक्षिणां तिर्यग्योनिः केवलं भोगयोनिः भवति। तत्र कृतस्य कर्मणः धर्माधर्मौ न भवतः। पूर्वजन्मसु कृतस्य कर्मणः फलोन्मुखयोः धर्माधर्मयोः फलोपभोगः एव भवति। तथैव महता

पुण्यप्रतापेन लब्धस्य देवशरीरस्यापि स्थितिः वर्तते। तत्रापि पूर्वकृतस्य पुण्यस्य फलोपभोगः भवति। यदा पुण्यक्षयः भवति तदा पुनः मर्त्यलोके जन्म भवति। तथाहि गीतं भगवता-

**ते तं भुक्त्वा स्वर्गलोकं विशालं**

**क्षीणे पुण्ये मर्त्यलोकं विशन्ति। (गीता ९.२१)**

**अर्थात्** - ये सोमपानेन पूतपापाः शुद्धकिल्बिषाः पुण्यफलम् आसाद्य सुरेन्द्रलोकं स्वर्गं गच्छन्ति ते तं स्वर्गलोकं विशालं विस्तीर्णं भुक्त्वा क्षीणे पुण्ये मर्त्यलोकं विशन्ति आविशन्ति।

कर्मफलत्वेन विविधाः लोकाः लभ्यन्ते इति श्रुतिस्मृतिषु बहुधा प्रतिपादितम्। एवं विविधैः कर्मभिः विविधा ये लोका लभ्यन्ते ते अस्मिन् श्लोके संक्षेपेण उक्ताः सन्ति-

**शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं तनुम्।**

**उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः॥ (नैष्कर्म्यसि.१.४१)**

यावत् कश्चिदुपायः न क्रियते तावत् संचितं प्रारब्धत्वेन परिणमते। अतो जन्म भवति। तस्मिन् जन्मनि प्रारब्धनाशस्तु भवति परन्तु क्रियमाणं कर्म संचितत्वेन परिणमते। संचिते बहूनि कर्माणि भवन्ति। तेषु किमप्येकम् परिपक्वं चेत् प्रारब्धत्वेन परिणमते। इत्थं कर्मचक्रं चलति एव। कर्माणि फलदाने नियतानि सन्ति। अर्थात् कृतस्य कर्मणः फलं भवति एव यावत् तत्परिहारोपायो न कल्प्यते। कर्म इत्थं बलपूर्वकं जन्म कारयति। मृत्यं कारयति। सुखदुःखभोगं च कारयति। इदमेव बन्धनं यत् चक्रवत् जन्म मृत्युश्च प्रवर्तेते इति। इदं संसारचक्रं कथ्यते। अस्मादेव बन्धनात् त्राणं मोक्षः भवति।



## पाठगतप्रश्नाः १

१. महता पुण्यपण्येन इत्यादिश्लोकम् उद्धृत्य सरलार्थं लिखत।

२. कर्मप्रवृत्तिकारणपरम्परां लिखत।

३. किम् अकृत्वा जन्तुः क्षणमेकमपि जातु न तिष्ठति।
   (क) कर्म (ख) उपासना (ग) धर्मः (घ) प्रायश्चित्तम्

४. कर्महेतुः कः भवति।
   (क) शरीरम् (ख) कामः (ग) प्रारब्धम् (घ) सञ्चितम्

५. सुखस्य कारणं किम्।
   (क) धर्मः (ख) अधर्मः (ग) कर्म (घ) अज्ञानम्

६. काम्यकर्मजन्यः अन्तःकरणे कः संस्कारः भवति।
   (क) धर्मः (ख) अधर्मः (ग) भयम् (घ) सुखम्

७. निषिद्धकर्मजन्यः अन्तःकरणे कः संस्कारः भवति।
   (क) धर्मः (ख) अधर्मः (ग) भयम् (घ) सुखम्



८. संचितं किं भवति।

(क) पूर्वजन्मकृतं कर्म येन फलदानं न प्रारब्धम्। (ख) पूर्वजन्मकृतं कर्म येन फलदानं प्रारब्धम्। (ग) अस्मिन् जन्मनि कृतं कर्म (घ) अग्रिमजन्मसु करिष्यमाणं कर्म

९. स्वर्गलोकं गत्वापि पुनः मनुष्यादिदेहं लभते एव इत्यत्र प्रमाणं वचनं किम्।

## २१.३) साधनायाः कारणं किम्

मानवान्तःकरणं त्रिदोषदुष्टम्। दोषत्रयं हि **मलः विक्षेपः आवरणं** चेति। मलवशात् अशुद्धं चित्तं विषयेषु आकृष्टं भवति। स एव चित्तस्य विक्षेपः। विक्षेपश्चेत् एकाग्रता न भवति। एकाग्रतायाः अभावे निदिध्यासनं सम्भवति। निदिध्यासनाभावे समाधिर्नास्ति। समाध्यभावे आवरणं न भिद्यते। अतो मोक्षो न भवति। अत एव मलनाशे विक्षेपनाशः विक्षेपनाशे आवरणनाशः सुकरो भवति।

### चित्तमलः

कः चित्तस्य मलः। कथं चित्तं मलिनं भवति। चित्ते मलः अस्ति इति कथं ज्ञायते। चित्तमलस्य शुद्धिः कथं क्रियते। चित्तशुद्धिः जाता न वेति कथं ज्ञायते। चित्तं शुद्धं चेत् ततः परं किं कर्तव्यम्।

चित्तमलः पापम्। निषिद्धकर्माचरणेन पापं जायते, पापापन्नं चित्तं मलिनं भवति। निषिद्धकर्माचरणस्य वासनया चित्तमलः अनुमीयते। नित्यादिना निष्कामकर्मणा चित्तस्य शुद्धिः क्रियते। निषिद्धकर्माचरणस्य लाघवं भवति चेत् चित्तमलो न्यूनतां गत इति अनुमीयते। अयमेव विषयः अग्रे गीतासाहाय्येन सविस्तरं वक्ष्यते। चित्तं शुद्धं चेत् ततः परम् चित्तविक्षेपनाशाय उपासना कर्तव्या।

### चित्तविक्षेपः

कः चित्तस्य विक्षेपः। कथं विक्षेपः जायते। चित्तं विक्षिप्तम् अस्ति इति कथं ज्ञायते। चित्तविक्षेपस्य शान्तिः कथं क्रियते। चित्तं शान्तं न वेति कथं ज्ञातव्यम्। चित्तशान्तेः परं किं कर्तव्यम्।

चित्तस्य चाञ्चल्यम् एव विक्षेपः, विषयान् प्रति चित्तस्य आकर्षणं विक्षेपः। मलिनं चित्तमस्ति चेत् भोग्यवस्तुनः आकर्षणं भवति। चित्ते विक्षेपः जायते। चित्तस्य चाञ्चल्यात् विक्षेपः अनुमीयते। उपासनया चित्तस्य शान्तिः अर्थात् एकाग्रता सम्पाद्यते। विक्षेपलाघवे चाञ्चल्यम् अल्पतां गच्छति।

चित्तं शान्तं न वेति ज्ञानार्थं - यथा दीपो निवतस्थो नेङ्गते, यथा वा तैलधारा अविच्छिन्ना पतति तद्वत् चित्तस्य उपास्ये ब्रह्मणि लग्नता चेत् चित्तं शान्तमति अनुमीयते।

### अज्ञानावरणम्

किम् अज्ञानावरणम्। कथं जायते। कथं ज्ञायते यद् अज्ञानावरणम् अस्ति। आवरणभङ्गः कथं क्रियते।

अनात्मसु आत्मत्वबुद्धिः आवरणाद् भवति। अनात्मसु आत्मत्वबुद्धितः आवरणम् अनुमीयते। ब्रह्मज्ञानेन अज्ञाननाशः भवति।

## २१.४) अनुबन्धाः

संस्कृतपरम्परासु सर्वत्र ग्रन्थकाराः चतुरः अनुबन्धान् प्रत्यक्षरूपेण परोक्षरूपेण वा ग्रन्थादौ उपस्थायन्ति। अधिकारी विषयः सम्बन्धः प्रयोजनम् इति चत्वारः अनुबन्धाः सन्ति। एषां समुदाय एव अनुबन्धचतुष्टयम् इति आख्यायते। ये अनु स्वज्ञानात् अनन्तरं बध्नन्ति, शास्त्रे ग्रन्थे वा आसज्जयन्ति प्रवर्तयन्ति प्रेरयन्ति ते अनुबन्धाः इति अनुबन्धशब्दस्य व्युत्पत्तिः। तथाहि लक्षणम्- ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयत्वम्। ग्रन्थे प्रवृत्तेः प्रयोजकं यद् ज्ञानं तस्य विषयः एव अनुबन्धः। यं विषयं जानन् ग्रन्थे प्रवर्तते स विषयः एव अनुबन्धः कथ्यते। अतो ग्रन्थादौ एते अनुबन्धाः उपन्यस्यन्ते। तथाहि परम्परा-

**ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते।**

**ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥** (श्लोकवार्तिकम् १.१.१७)

**सरलार्थः**- श्रोता ज्ञाता ग्रन्थस्य अर्थं सम्बन्धं च ज्ञात्वा ग्रन्थाध्ययने प्रवर्तते। अतः ग्रन्थादौ विषयः सम्बन्धः प्रयोजनम् इत्येषाम् उल्लेखः नूनं कर्तव्यः।

अन्यच्चाहुः भट्टपादाः श्लोकवार्तिके-

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।**

**यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते॥**

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।**

ते चानुबन्धाः अत्र श्लोकबद्धाः-

**अधिकारी च विषयः सम्बन्धश्च प्रयोजनम्।**

**शास्त्रारम्भफलं प्राहुरनुबन्धचतुष्टयम् ॥६॥** (स.वे.सि.सा.संग्रहः)




अनुबन्धानां क्रमेऽपि अस्ति वा काचित् विशेषता। अधिकारि-विषय-सम्बन्ध-प्रयोजनानाम् अनुबन्धानां क्रमेण उपस्थितौ कोऽपि नियमः अस्ति। स उच्यते - शास्त्रस्य ज्ञातारं विना शास्त्रे प्रवृत्तिः नैव सम्भवति। तस्मात् शास्त्रस्य ज्ञातुः अधिकारिणः उल्लेखः प्रथमम् भवति। यद्यपि अधिकारिणः उपस्थितिः भवति, तथापि यं विषयं विशेषतः जिज्ञासति तस्य सामान्यज्ञानं तु अधिकरिणः स्यादेव। यतो हि विषयज्ञानहीनस्य अधिकारिणः शास्त्रे प्रवृत्तिः असम्भवा भवति। तस्मात् द्वितीयतः विषयस्य उल्लेखः। विषयेण सह शास्त्रस्य अथवा विषयेण सह पुरुषस्य सम्बन्धज्ञानम् आवश्यकम्। तस्मात्



सम्बन्धस्य तृतीये स्थाने उल्लेखः विद्यते। प्रयोजनस्य सर्वदा अन्तिमे अवस्थितिः। तस्मात् तस्य चतुर्थे स्थाने उल्लेखः विद्यते।



## पाठगतप्रश्नाः २

१०. मानवान्तःकरणस्य दोषाः कति के च।

११. चित्तमलः कः। चित्तमलः कथं ज्ञायते।

१२. चित्तविक्षेपः कः। स च कथं ज्ञायते।

१३. अज्ञानावरणं किम्। तत् कथं ज्ञायते।

१४. चित्तमलनाशकं कर्म किम्।
(क) काम्यम् (ख) निषिद्धम् (ग) नित्यादिकम् (घ) श्रवणादिकम्

१५. चित्तविक्षेपनाशकं किम्।
(क) काम्यम् (ख) निषिद्धम् (ग) नित्यादिकम् (घ) उपासना

१६. अज्ञानावरणनाशः केनोपायेन भवति।
(क) काम्यकर्मणा (ख) निषिद्धेन (ग) नित्यादिना (घ) ब्रह्मज्ञानेन

१७. अनुबन्धाः कति के च।

## २१.५) अधिकारी

**न निरोधोन निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**

**न मुमुक्षुर्न वैमुक्त इत्येषा परमार्थता॥ (गौडपादीयकारिका २.३२)**

आत्मा कदापि बद्धो नास्ति। यश्च बद्धो नास्ति, तस्य कुतो मोक्षो विचार्यते। बद्धश्चेत् मोक्षाय साधनानि कुर्यात्। बद्ध एव नास्ति। अतो न साधकः। बद्धस्यैव मुमुक्षा सम्भवति। अत आत्मा न मुमुक्षुरपि। आत्मनश्च निरोधो नास्ति, नापि उत्पत्तिः अस्ति। परमार्थत्वेन एषा स्थितिः अस्ति। तथापि यः चिन्तयति बद्धोऽस्मि इति स एव बद्धः अस्ति। स एव मोक्षाय यतेत यतते च। तस्यैव मोक्षलाभाय सन्नद्धता अस्ति न वेति ज्ञानाय विषयः प्रस्तूयते।

कः अधिकारी। अधिकारी अधिकृतः। सर्वत्र यो हि **अर्थी समर्थो विद्वान्** सः अधिकारित्वेन गण्यते। एवञ्च यथा अधिकारः तथा फलं तस्य भवेद्। यथा कस्यचिद् जनस्य सम्पत्तिः अस्ति। तत्सम्पत्तिलाभे कस्य अधिकारः, कः अधिकृतः, कः अधिकारी। यः तस्य जनस्य पुत्रः अस्ति स तत्र अधिकृतः। तद्वत् अत्र अधिकारी कः। ततः पूर्वम् इदं ज्ञातव्यम् यत् स कस्य अधिकारी। पुरुषः परमत्वेन यत् कामयते तत्र अधिकारी।



वेदान्तशास्त्रे पुरुषः परतमत्वेन मोक्षं कामयते। केचित् साक्षात् मोक्षं कामयन्ते केचित् दूरान्वयेन। अतो मोक्षे अधिकारी इति सिद्ध्यति। तद्यथा कश्चित् वाराणसीं गन्तुम् अधिकारी, योग्यः न वा इति मीमांस्यते। प्रथमन्तु तस्य वारणसीगमने इच्छा अस्ति न वा। यदि इच्छा अस्ति तर्हि गमनस्य मार्गव्ययाय पर्याप्तं धनम् अस्ति न वा। यदि धनमस्ति तर्हि गमनाय योग्यः, सः अधिकारी। एतावता स वाराणसीं न प्राप्तः। ततः परं तेन गन्तव्यमस्ति। तद्वदेवेहापि **यः साङ्गं वेदान् अधीतवान्, अखिलवेदार्थम् आपाततः जानाति, यस्य चित्तं शुद्धम् एकाग्रं चास्ति, यस्य मोक्षेच्छा अस्ति, यस्य साधनचतुष्टयसम्पत्तिः अस्ति स मोक्षस्य साधनाय अधिकारी इति गण्यते**। एतावता तस्य मोक्षः न सिद्धः। इतोऽपि साधनानि अनुष्ठेयानि सन्ति। अत इतः परं तेन मोक्षलाभाय गुरुसमीपं गन्तव्यम्। श्रवणादिकं कर्तव्यम्। इत्थम् अत्र अधिकारी इति पदेन **वेदार्थविद् निर्मलचित्तः एकाग्रचित्तः साधनचतुष्टयसम्पन्नः** एव गृह्यते।




एवञ्च गुरुः कस्मै शिष्याय ब्रह्मविद्यां दद्याद् इति अधः श्लोके सनिबद्धमस्ति। तेनापि ज्ञायते यत् ईदृशाय एव शिष्याय ब्रह्मविद्या दीयते। अर्थात् एवंगुणविशिष्टः अधिकारित्वेन गण्यते इति। तथाहि-

**प्रशान्तचित्ताय जितेन्द्रियाय**
**प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्वितायानुगताय सर्वदा**
**प्रदेयमेतत् सततं मुमुक्षवे॥**

**सरलार्थः**- प्रशान्तचित्ताय- प्रशान्तं चित्तं यस्य स प्रशान्तचित्तः। तस्मै। अनेन शमगुणयुक्त उक्तः। जितेन्द्रियाय- जितानि इन्द्रियाणि येन स जितेन्द्रियः। तस्मै। अनेन दमगुणयुक्त उक्तः। दोषाः रागादयः। ते च पापप्रभवाः। ते प्रहीणाः यस्य स प्रहीणदोषः। तस्मै। अनेन यस्य चित्तं शुद्धं स उक्तः। यथा उक्तं शास्त्रेण गुरुणा च तथा करोति स यथोक्तकारी। तस्मै। अनेन काम्यनिषिद्धवर्जनपुरःसरं नित्याद्यनुष्ठानेन ईश्वरप्रीतिः येन लब्धा स उक्तः। गुणा विवेकवैराग्योपरतितितिक्षासमाधानानि। तैः अन्वितः गुणान्वितः। तस्मै। अनुगताय गुरुसेवापराय। अनेन श्रद्धा उक्ता। श्रद्धालुः खलु अनुगतः गुरुसेवापरो भवति।

### अधिकारी कस्य

कस्य अधिकारी इति प्रश्न उदेति। अर्थाद् अधिकारिणः अधिकारः कुत्र, कस्मिन् विषय इति। इदं तु स्पष्टमेव यद् ग्रन्थे यत् प्रयोजनम् उच्यते तत्प्रयोजनलाभाय खलु अधिकारी ग्रन्थम् अधीते,

 



तदुक्तानि साधनानि चानुतिष्ठति। अतः प्रतिपाद्यमानस्य फलस्य लाभे अधिकारी इति सुस्पष्टम्। वेदान्तस्य यत् मोक्षाख्यं प्रयोजनम् अस्ति तस्य लाभस्य एव अधिकारी वेदान्तग्रन्थेषु उच्यते। केवलं ग्रन्थं यः कोऽपि पठेत्। शाब्दिकम् अर्थमपि जानीयात्। तत्रापि काचित् योग्यता आवश्यकी। तथापि स यदि वेदान्ताधिकारिणि आवश्यकैः प्रोक्तलक्षणैः सम्पन्नः न स्यात् तर्हि प्रोक्तं फलं न लभेत। तस्माद् ग्रन्थाध्ययने अधिकारी यद्यपि उच्यते तथापि स प्रतिपाद्यमानस्य प्रयोजनस्य लाभाय अधिकारी इत्येव अभ्युपगन्तव्यम्। अन्यथा शान्तो दान्त उपरतस्तितिक्षुः इत्यादिगुणसम्पन्नः वेदान्तसारादिग्रन्थाध्ययने अधिकारी इति आपत्तिः स्यात्। नास्तिका अपि ग्रन्थममुं पठन्ति।

वेदान्तसारग्रन्थे अधिकारिणः स्वरूपम् उच्यते -

**अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेन आपाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता इति।**

**सरलार्थः** - यः लौकिकवैदिकव्यवहारेषु अभ्रान्तो यो जीवः स एव प्रमाता। **स्वाध्यायोऽध्येतव्यः** इति श्रुतिवचनात् यः वेदान् साङ्गान् विध्यनुसारेण अधीत्य संशयाविरोधिनिश्चयरूपेण च समग्रं वेदार्थं जानाति। अन्यथा कर्तव्यत्वेन वर्जनीयत्वेन च उपदिष्टानां ज्ञानं कुतः स्यात्। यः काम्यानां निषिद्धानां च कर्मणां त्यागं करोति। नित्यानां नैमित्तिकानां प्रायश्चितानां च कर्मणाम् अनुष्ठानेन यस्य धर्माधर्मरूपाणि निखिलानि कल्मषाणि निर्गतानि। कल्मषापगमात् यस्य अन्तःकरणं नितान्तं निर्मलम् अस्ति। उपासनायाः अनुष्ठानेन च यस्य चित्तं विक्षेपरहितम् एकाग्रम् समाहितम् अस्ति। यश्च साधनचतुष्टयसम्पन्नः अस्ति। स एव अत्र अधिकारित्वेन गण्यते। यः प्रमाता सः अधिकारी इति अन्वयः।

अस्य सविस्तरम् आलोचनम् अग्रे उपस्थाप्यते। अत्रोक्ता एव विषया इतः परं प्रतिपादनीयाः सन्ति। तथापि प्रसक्तानुप्रसक्ता अन्येऽपि केचिद् विषया उपन्यस्यन्ते। बहुत्र विषयस्य दृढत्वसम्पादनाय श्रुतिस्मृतिवचनानि उपस्थापयिष्यन्ते। बहुत्र भगवतो भाष्यकारस्य आचार्यस्य शङ्करस्य वचनानि, व्याख्यानानि च उपोद्बलकत्वेन प्रदास्यन्ते।

अधिकारिणो लक्षणे उक्तानाम् कर्मणाम् उपासनानां च एतेषाम् अनुष्ठानं तदैव सम्भवति यदा प्रमाता ऋक्-साम-यजुरथर्वणां चतुर्णां वेदानाम् अर्थं सामान्येन जानीयात्। वेदानाम् अर्थज्ञानं वेदाङ्गज्ञानपूर्वकमेव सम्भवति। व्याकरणं निरुक्तं ज्योतिषं शिक्षा कल्पः छन्दः च इति षड् वेदाङ्गानि। षड्विधैः वेदाङ्गैः सह एव वेदानां सम्यक् अर्थज्ञानं सम्भवति नान्यथा। अतो वेदानाम् अर्थस्य परिज्ञानाय विधिपूर्वकं षडङ्गसहितं वेदाध्ययनम् आवश्यकम्। अतो लक्षणे “विधिवदधीतवेदवेदाङ्गत्वेन” इति उक्तम्। साम्प्रतिके काले केचिद् भ्रान्त्या विधिं हित्वा येन केनापि क्रमेण कांश्चिद् ग्रन्थान् इतस्ततः पठन्ति। अतो वेदान्तोक्तफलं न लभन्ते। तेन ते वीतश्रद्धा भवन्ति। परन्तु अत्र शास्त्रस्य को दोषः। अतो विधिवदेव वेदवेदाङ्गाध्ययनं कर्तव्यम्। तदा स सम्प्रदायविद् भवेद्।



अत्र प्रश्नः भवति यत् वेदेषु एव वेदान्तस्य अन्तर्भावः। यदि वेदाङ्गसहितं विधिम् अनुसृत्य वेदाध्ययनं भवति तर्हि प्रमाता वेदपाठकाले एव वेदान्ततत्त्वं जानाति। तस्मात् पृथक्तया वेदान्तशास्त्रस्य ज्ञानाय योग्यता न अर्जनीया, नापि गुरुसमीपं गत्वा श्रवणादिकं कर्तव्यम् इति। अत एव अस्य प्रश्नस्य प्रशमनाय लक्षणे आपाततः इति पदस्य प्रयोगः। आपाततः इत्यस्य प्राथमिकतया इत्यर्थः। यः प्राथमिकतया वेदार्थं जानाति परन्तु वेदान्ततात्पर्यं न जानाति तादृशः प्रमाता अत्र अधिकारी। तथाहि संशयाविरोधिनिश्चयात्मकं ज्ञानं विधिवद्वेदाध्ययनेन सम्पादनीयम्। किमिदं संशयाविरोधिनिश्चयात्मकं ज्ञानम्। यदि निश्चयः स्यात् संशयो निवर्तते। कथं संशयोऽपि अस्ति, निश्चयोऽप्यस्ति। प्राथमिकवेदाध्ययनेन यो निश्चयो जायते तेन असम्भावना विपरीतभावना इति संशयविपर्ययौ न निवर्तते। संशयविपर्यययोः सत्त्वे ब्रह्मज्ञानं नोदेति। एतयोः नाशाय अधिकारी श्रवणमनननिदिध्यासनानि कुर्यात्। वेदान् अधीत्य काम्यादीनां त्यागम् नित्यादीनाम् अनुष्ठानं च कृत्वा चित्तं शुद्धम् एकाग्रं च भवति चेत् संशयविपर्यययोः निवृत्तिः सम्भवति। परन्तु यदा प्राथमिकतया वेदान् पठति तदा तु वेदाध्ययनाधिकारो यद्यपि स्यात् तथापि मोक्षाधिकारो नास्ति। इत्थं संशयविपर्ययाभ्यां प्रतिबद्धं निश्चयात्मकं ज्ञानम् अत्र आपाततः वेदार्थज्ञानमिति मन्तव्यम्।

विधिपूर्वकं वेदाध्ययनम्, वेदार्थज्ञानम्, काम्यनिषिद्धकर्मणोः परित्यागः, नित्यनैमित्तिकप्रायश्चित्तोपासनानाम् अनुष्ठानम् च इत्यादिकर्माणि पूर्वजन्मसु कृतानि चेदपि तेभ्यः फलं लभ्यते। ये पूर्वजन्मसु एतत्कर्मादिकं साधितवन्तः तेषां कृते प्रकृतजन्मनि नित्यादिकर्मणाम् आवश्यकता नास्ति। अत्र प्रमाणं हि - जगति केचन विदुरधर्मव्याधादयः पुरुषाः समभूवन् ये द्विजकुलेषु न उत्पन्नाः अपि तु अन्यकुले उत्पन्नाः। तेषां पूर्वजन्मनि सम्पादितेन नित्यादिकर्मणा चित्तं शुद्धम् अस्ति। अतः तेषु ज्ञानोदयः दृश्यते। ते अस्मिन् जन्मनि यद्यपि वेदाध्ययनं वैदिककर्मानुष्ठानं वा न कृतवन्तः तथापि तद् विनापि वेदान्ते अधिकारिणः भवन्ति। अनेके महापुरुषाः एकस्मिन् एव जन्मनि विधिपूर्वकवेदाध्ययनेन नित्यादिकर्मानुष्ठानेन वेदान्ते अधिकारलाभाय यतन्ते। परन्तु साधारणजनाः बहुषु जन्मसु कृतेन तपस्याबलेन अधिकारिणः भवन्ति। भगवान् श्रीकृष्णः गीतायाम् उक्तवान् यत् -

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।**

**अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥** (भ.गी.६.४५)

**सरलार्थः**- संशुद्धकिल्बिषः विनष्टपापः यस्य सर्वाणि पापानि विनष्टानि तादृशः पुरुषः। प्रयत्नात् - बहुयत्नेन। यतमानः प्रवर्तमानः, कार्ये लग्नः इत्यर्थः। योगी योगवान् पुरुषः। तु। अनेकजन्मसंसिद्धः नानाजन्मसु परिशुद्धः। ततः तस्मात् अनन्तरम् पराम् प्रकृष्टाम् गतिं स्थानम् याति गच्छति प्राप्नोति इति।

अर्थात् यः पुरुषः विधिम् अनुसृत्य शास्त्रोक्तकर्माणि आचरति, तस्य सर्वाणि पापानि विनश्यन्ति। एवं बहुषु जन्मसु क्रमेण शुद्धो भूत्वा मुक्तिरूपां परमां गतिं प्राप्नोति इति भावार्थः।

विद्यारण्यमुनिः पञ्चदश्याम् अपि उक्तवान्-

**कुर्वते कर्म भोगाय कर्म कर्तुं च भुज्यते।**



**नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते॥**

**व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्॥** (प.द.१.३०)

**सरलार्थः**- भोगाय सुखदुःखानाम् अनुभवाय, मनुष्यादिशरीराणि अधिष्ठाय कर्म पुण्यजनकानि पापजनकानि च कर्माणि कुर्वते। पुनः कर्म कर्तुं पूर्वकृतस्य कर्मणः फलं भुञ्जते, फलस्य भोगं कुर्वन्ति। यावत् पूर्वकृतस्य फलस्य उपभोगेन लयो न भवति, तावत् नूतनतया कर्म कर्तुं न शक्यते। अतः पुनः कर्माणि कर्तुं फलानि भञ्जते इति भावः। यथा आवर्ते पतिताः कीटाः आवर्तात् आवर्तान्तरं गच्छन्ति तथैव जीवाः जन्मनः जन्मान्तरं लभन्ते। निर्वृतिं सुखं न लभन्ते। एवं बहु जन्मनः परं कदाचित् उद्बोधः सम्भवति -

**"सत्कर्मपरिपाकात् ते करुणानिधिनोद्धृताः।**

**प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम्॥" इति।** (१/३१)

**सरलार्थः**- ते कीटाः सत्कर्मपरिपाकात् करुणानिधिना परमकृपालुना केनचित् पुरुषविशेषेण उद्धृताः रक्षिताः जलप्रवाहतीरे तरुच्छायां प्राप्य तत्र यथा विश्राम्यन्ति, तथैव जीवाः संसारावर्ते बहु जन्म यापयित्वा सत्कर्मपरिपाकात् करुणानिधिना परमकृपालुना गुरुणा उद्धृताः सन्तः रक्षिताः भवन्ति। अत आत्मनः शुद्ध्यर्थं बहु जन्म आवश्यकम् इति प्रमाणितम्। तस्मात् अधिकारिणो लक्षणे वेदान्तसारस्थे "अस्मिन् जन्मनि जन्मान्तरे वा" इति उक्तम्। एवम् अधिकारिलक्षणं सामान्यरूपेण प्रदर्शितम्। इदानीं तस्य विस्तारः आवश्यकः।

एतत् सिद्धं यत् विधिवत् वेदाङ्गसहितं वेदाध्ययनं कर्तव्यं, तत् एकस्मिन् एव जन्मनि अथवा बहुषु जन्मसु भवतु। विधिवत् अध्ययनम् इत्यस्य अर्थः त्रैवर्णिकानां ब्राह्मण-क्षत्रिय-वैश्यानाम् उपनयनसंस्कारः कर्तव्यः। ततः गुरुगृहं गन्तव्यम्। तत्र स्थित्वा ब्रह्मचर्यं पालयित्वा वेदाङ्गैः सहितं वेदानाम् अध्ययनम् एव विधिवत् अध्ययनम्। वेदान्ततत्त्वज्ञानाय वेदानाम् आपाततः अर्थज्ञानम् आवश्यकम्। वेदानाम् अर्थज्ञानेन कर्तव्यत्वाकर्तव्यत्वविवेकः स्यात्। वेदाध्ययनाय गुरुगृहगमनं वेदान्तश्रवणाय च गुरुसमीपगमनम् इति द्विविधं गुरुगृहगमनम् इति उक्तप्रायं भवति।

## २१.५.१) वेदान्तोक्तमार्ग एव कुतोऽनुसर्तव्यः अधिकारिणा

निरुपाधिद्वेषविषयीभूता चित्तवृत्तिः दुःखम्। दुःखं च चित्तधर्मः। तच्च बुद्धितत्त्वस्य परिणामविशेषः। रजसः कार्यं तद्। दुःखं त्रिविधम्। आध्यात्मिकम् आधिभौतिकम् आधिदैविकं च। तत्रापि आध्यात्मिकं द्विविधं शारीरं मानसं च। तत्र शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। मानसं तु कामक्रोधलोभमोहभयेर्ष्याविषयविशेषादर्शननिबन्धनम्। सर्वं चैतद् आन्तरोपायसाध्यत्वाद् आध्यात्मिकं दुःखम्। बाह्योपायसाध्यं च दुःखं द्वेधा - आधिभौतिकम् आधिदैविकं च। तत्र आधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनं चेति।

त्रिविधं दुःखम्। तस्य निवृत्तिः विभिन्नैः उपायैः सम्भवति। त्रिविधदुःखनाशं को वा न वाञ्छति। औषधादिना रोगजदुःखनिवृत्तिः। भोजनादिना क्षुधादिजनितदुःखनिवृत्तिः। शस्त्रास्त्रादिना



चौरव्याघ्रादिजभयनिवृत्तिः। तन्त्रमन्त्रप्रयोगेण च प्रेतपिशाचादिजदुःखनिवृत्तिः। इत्थं सन्ति नैके उपायाः। सत्सु च एतेषु को वेदान्तेन दुःखनाशे प्रवर्तेत। वेदान्तमते तु अविद्या तत्कार्यं जगत् इति अनयोः निवृत्तिः यदा भवति तदैव वस्तुतः दुःखनिवृत्तिः भवति। परन्तु प्रकारान्तेषु सत्सु वेदान्तोक्तोपायैरेव दुःखनिवृत्तिः कुत इति जिज्ञासा उदेति। इदं तु सत्यं यद् औषधादिना दुःखनिवृत्तिः सम्भवति। परन्तु आत्यन्तिकनिवृत्तिः न भवति। अर्थात् तथा निवृत्तिः यतः परं पुनः दुःखोत्पत्तिः न भवति सा आत्यन्तिकनिवृत्तिः। आत्मज्ञानं विना आत्यन्तिकनिवृत्तिः न सम्भवति। औषधादिभिः यद्यपि दुःखनिवृत्तिः भवति तथापि एकान्ततया न भवति। अर्थात् एते उपाया एकान्ता न सन्ति। एकान्त इत्यस्यार्थः निश्चयेन फलदायकः। वेदान्तेन दुःखनिवृत्तिः निश्चयेन भवति। अतः वेदान्तः एकान्तोपायः। अत एव वेदान्तोक्तमार्ग एव अनसरणीय इति सिद्धान्तः।

##  पाठगतप्रश्नाः ३

१८. वेदान्तस्य अधिकारिणः कुत्राधिकारः।
   (क) ग्रन्थाध्ययने (ख) वेदान्तश्रवणे (ग) नित्यादिकरणे (घ) मोक्षलाभे
१९. वेदान्तशास्त्रे पुरुषः परमत्वेन किं कामयते।
   (क) स्वर्गम् (ख) मोक्षम् (ग) बन्धनम् (घ) दुःखनाशम्
२०. वेदान्तोक्तप्रयोजनलाभे कोऽधिकारी।
२१. वेदान्तसारोक्ते अधिकारिलक्षणे आपापतः इत्यनेन किं बोध्यम्
२२. नित्यादिकर्माणि प्रति जन्म कर्तव्यानि न वेति प्रस्तूयताम्।

##  पाठसारः

अस्मिन् पाठे साधनायाः उपक्रमः कृतः। नरजन्म दुर्लभम् बहुपुण्यसाध्यत्वात्। अथः लब्धं मानवजीवनं कथं सर्वोच्चपुरुषार्थलाभाय व्ययीकर्तव्यम् इति विषयो भूमिकायां प्रकटितः। जन्मनः मृत्युं यावत् शारीरं मानसं कर्म कुर्वाणो मानवः तत्फलं तु लभते एव। अतः कर्मणां परिणामः धर्मः अधर्मः चित्तशुद्धिः इति त्रिविधः। संचितं प्रारब्धं क्रियमाणं चेति त्रेधा विभागोऽपि व्यवसितः। वेदादिशास्त्रतः ज्ञायमानः स्वर्गादिः अनित्यः कर्मजन्यत्वात् इत्यत्र श्रुतिस्मृतिवचनानि प्रमाणत्वेन सन्ति।

मलः विक्षेपः अज्ञानावरणं चेति त्रिदोषदुष्टत्वात् तद्दोषनाशाय साधना उपदिश्यते। निष्कामकर्मयोगेन मलनाशः। उपासनया विक्षेपक्षयः। ब्रह्मज्ञानेन अज्ञानावरणनिवृत्तिः इति सुव्यस्थापितम्।

यस्य ज्ञानं भवति चेत् पुरुषः प्रवर्तते सः अनुबन्धः इति स्थितिः। वेदान्तस्य अधिकारि-विषय-सम्बन्ध-प्रयोजनभेदात् चत्वारोऽनुबन्धाः।



अधिकारी इति महान् विषयो वर्तते। मुख्यत्वेन वेदार्थविद् निर्मलचित्तः एकाग्रचित्तः साधनचतुष्टयसम्पन्नः अधिकारी गण्यते। एते एव विषयाः क्रमशः प्रतिपादिताः सन्ति। एतेषु अस्मिन् पाठे सामान्यम् आलोचनं विहितम्। अग्रिमे पाठे अयमेव विषयः अनुवर्तते।



## पाठान्तप्रश्नाः

१. संचितं किमुच्यते। प्रारब्धं वा किम्।

२. कर्मबन्धनं विवृणुत।

३. कर्मभोगयोनिपरिचयं दद्यात्।

४. मानवान्तःकरणस्य त्रीन् दोषान् परिचाययत।

५. चित्तमलो मीमांस्यताम्।

६. चित्तविक्षेपो मीमांस्यताम्।

७. अनुबन्धार्थः विव्रियताम्।

८. वेदान्तसारे अधिकारिलक्षणं किमुक्तम्।

९. अधिकारी कुत्र इति विचार्यताम्।

१०. अनेकजन्मसु साधनानुष्ठानेन कीदृशो जनः अधिकारी भवति इति विव्रियताम्।

११. वेदान्तोक्तमार्ग एव कुतोऽनुसर्तव्यः अधिकारिणा।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया।
पारं दुःखोदधेर्गन्तुं तर यावन्न भिद्यते॥

**सरलार्थः**- मानवशरीरं बहुषु जन्मसु अर्जितेन महता पुण्येन लभ्यते। इदं शरीरं कायरूपिणी नौका। दुःखसागरं तर्तुं लब्धा। यावत् नौका न भिद्यते तावत् पारं गन्तव्यमिति अभिप्रायः श्लोकस्यास्य।

२. यः अनात्मविद् भवति तस्य कामः जायते। कामो हि अनात्मफलविषयः। कामः प्रेरकः प्रवर्तकः अस्ति। अतः कामः कर्मणि प्रवृत्तिं जनयति।

३. (क)

४. (ख)

५. (क)



६. (क)

७. (ख)

८. (क)

९. ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। (गीता ९.२१)

### उत्तराणि-२

१०. मानवान्तःकरणं त्रिदोषदुष्टम्। दोषत्रयं हि मलः विक्षेपः आवरणं चेति।

११. चित्तमलः पापम्। निषिद्धकर्माचरणस्य वासनया चित्तमलः अनुमीयते।

१२. चित्तस्य चाञ्चल्यम् एव विक्षेपः, विषयान् प्रति चित्तस्य आकर्षणं विक्षेपः। चित्तस्य चाञ्चल्यात् विक्षेपः अनुमीयते।

१३. अनात्मसु आत्मत्वबुद्धिः आवरणाद् भवति। अनात्मसु आत्मत्वबुद्धितः आवरणम् अनुमीयते।

१४. (ग)

१५. (घ)

१६. (घ)

१७. अधिकारी विषयः सम्बन्धः प्रयोजनम् इति चत्वारः अनुबन्धाः सन्ति।

### उत्तराणि-३

१८. (घ)

१९. (ख)

२०. वेदार्थविद् निर्मलचित्तः एकाग्रचित्तः साधनचतुष्टयसम्पन्नः वेदान्तोक्तप्रयोजनलाभे अधिकारी।

२१. वेदान्तसारोक्ते अधिकारिलक्षणे आपापतः इत्यनेन इत्यस्यार्थस्तावत् तथा शाब्दिकं ज्ञानं येन संशयो निवर्तते परन्तु आत्मज्ञानस्य प्रतिबन्धिका असम्भावना विपरीतभावना च न विवर्तते इति।

२२. विधिपूर्वकं वेदाध्ययनम्, वेदार्थज्ञानम्, काम्यनिषिद्धकर्मणोः परित्यागः, नित्यनैमित्तिकप्रायश्चित्तोपासनानाम् अनुष्ठानम् च इत्यादिकर्माणि पूर्वजन्मसु कृतानि चेदपि तेभ्यः फलं लभ्यते। ये पूर्वजन्मसु एतत्कर्मादिकं साधितवन्तः तेषां कृते प्रकृतजन्मनि नित्यादिकर्मणाम् आवश्यकता नास्ति।

॥ इति एकविंशः पाठः ॥



२२

# साधना-२

## प्रस्तावना

पूर्वपाठे साधनायाः सामान्यं निरूपणम् कृतम्। वेदान्तसाधने यः क्रमः अस्ति तमेव क्रमम् अनुसृत्य साधनानि उपस्थाप्यन्ते पाठेषु एषु। मोक्षः विषयः न प्रत्यक्षगम्यः नापि अनुमानगम्यः। अयम् आगमैकगम्यः विषयः। अतः साधकस्य सदा जिज्ञासा भवति यत् प्रमाणभूत आगमः कः इति। अत एव साधनेषु यः क्रमः वर्तते तस्य प्रमाणोपन्यासपुरःसरं प्रकटनं विधीयते अस्मिन् पाठे। सप्रमाणं ज्ञानं भवति चेत् साधकः सन्देहरहितः सन् श्रद्धावित्तो भूत्वा साधनेषु प्रवर्तते। अत एवायम् उपन्यासप्रपञ्चः।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- साधनेषु विद्यमानं क्रमं सप्रमाणं ज्ञास्यति।
- अन्तरङ्गबहिरङ्गसाधनविभागम् अवगच्छेत्।
- जन्तूनां मोहस्य कारणं बुध्यात्।
- अज्ञाननाशस्य उपायम् अवगच्छेत्।
- संन्यासभेदान् जानीयात्।
- काम्यादिकर्माणि कर्तव्यानि उत हातव्यानि इति बुध्यात्।
- कर्मभेदान् अवगच्छेत्।
- गुणानां चित्ते प्रभावम् अनुभवेत्।
- काम्यनिषिद्धनित्यनैमित्तिकप्रायश्चितरूपाणां कर्मणां सविस्तरं ज्ञानं भवेत्।
- उपासनाम् बोद्धुं शक्नुयात्।

## २२.१) साधनसोपानम्

### अन्तरङ्गबहिरङ्गसाधनानि

वेदान्ते अन्तरङ्गसाधनानि बहिरङ्गसाधनानि इति विभागोऽपि क्वचित् परिलक्ष्यते। अधिकारित्वसम्पादनं यावत् कर्तव्यानि साधनानि हि बहिरङ्गसाधनानि कथ्यन्ते। गुरूपसदनोत्तरं विहितानि साधनानि अन्तरङ्गसाधनानि गण्यन्ते इति स्थूलविभागोऽयमस्ति।

परम्परासाधनानि एव शास्त्रेषु क्वचित् बहिरङ्गसाधनानि इत्यपि उच्यन्ते। अन्तःकरणशुद्धिकराणि चित्तैग्रतासाधनानि साधनचतुष्टयम् इति एतानि सर्वाण्यपि अत्र अन्तर्भवन्ति। कर्मयोगादीनि नानाविधानि साधनानि मुमुक्षुणा सम्पत्तिलाभाय शास्त्रेषु उपदिश्यन्ते।

एवमधिकारलाभाय कर्तव्यानि साधनानि बहिरङ्गसाधनानि कथ्यन्ते। लब्धे चाधिकारे ऊर्ध्वं कर्तव्यानि श्रवणादिसाधनानि अन्तरङ्गसाधनानि कथ्यन्ते। क्वचिच्च चित्तशुद्धिकराणि कर्माणि चित्तैग्रतासम्पादिका उपासना चेति एतद्वयम् बहिरङ्गसाधनं कथ्यते। विवेकादिसाधनचतुष्टयम् अन्तरङ्गसाधनत्वेन गण्यते।

अधिकारिणा बहूनि साधनानि कर्तव्यत्वेन उपदिष्टानि। तेषु कश्चित् क्रमः अस्ति। अत एव कस्मात् साधनात् परं किं साधनम् कर्तव्यमिति सुष्ठु बोद्धव्यम् मुमुक्षुणा। किमपि साधनं केनापि क्रमेण अनुष्ठाने नास्ति कामचारः। स एव क्रमः विविधैः प्रमाणैः अधस्तात् उपवर्ण्यते प्रमाणोपन्यासपुरःसरम्।

**यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या॥ (ब्र.सू.शा.भा.१.१.१)**

अस्माद् वचनाद् ज्ञायते यद् साधनसम्पत्तिलाभात् परं ब्रह्मजिज्ञासा कर्तव्या इति। तथाहि भाष्यम् -

**तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासा उपदिश्यत इति। उच्यते--**

**नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसाधनसम्पत् मुमुक्षुत्वं च।**

**तेषु हि सत्सु, प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च, शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च। न विपर्यये। (ब्र.सू.शा.भा.१.१.१)**

**तात्पर्यम्-** पूर्वमीमांसादर्शनप्रतिपाद्यो विषय एव धर्मजिज्ञासायाम् अन्तर्भवति। केचिद् वदन्ति यत् कर्मकाण्डं विना ज्ञानकाण्डं न सम्भवति। परन्तु धर्मजिज्ञासां विनापि ब्रह्मजिज्ञासा सम्भवति। परन्तु यदि नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसाधनसम्पत् मुमुक्षुत्वं चेति एतन्नास्ति तर्हि ब्रह्मजिज्ञासा न सम्भवति। अत एतत् सम्पाद्य ब्रह्मजिज्ञासा कर्तव्या। अत्रापि धर्मब्रह्मजिज्ञासयोः पूर्वपरीभावो नास्तीति उक्तम्। किन्तु साधनचतुष्टयसम्पत्तेः उत्तरमेव ब्रह्मजिज्ञासा इति क्रमः स्पष्टम् अवगम्यते।

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।**



**अयुक्तः कामकारेण फले सक्तो निबध्यते॥ (गीता ५.१२)**

**सरलार्थः**- युक्तः 'ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। यस्तु अयुक्तः असमाहितः फलाशाविक्षिप्तचित्तः कामकारः कामस्य आशायाः कारः करणं कामकारः, तेन फलाशायुक्तत्वेन। मम फलाय इदं करोमि कर्म इत्येवं फले सक्तो निबध्यते। कर्मभिः जन्मरूपं संसारं प्राप्यते॥ (शां.भा)

अत्र भाष्ये भाष्यकारः साधनानां क्रमम् आह- **सत्त्वशुद्धि-ज्ञानप्राप्ति-सर्वकर्मसंन्यास-ज्ञाननिष्ठा**-क्रमेणेति। अर्थात् कर्मयोगेन सत्त्वशुद्धिः, ततः परोक्षज्ञानप्राप्तिः, ततः काम्य-निषिद्ध-नित्य-नैमित्तिक-रूपाणि यानि कर्माणि सन्ति तेषां विधिवत् त्यागः, स एव सर्वकर्मसन्न्यासः, ततः अपरोक्षज्ञाननिष्ठा, ततः विदेहकैवल्यात्मको मोक्षः इति। साधनेषु क्रमबोधाय इदं वचनम् उपकारकम्।

यस्तु कर्मयोगं न करोति, फलाशया कर्म करोति स कर्मबद्धो भवति। संसारचक्रं प्राप्नोति। अतः कर्मयोगस्य फलमपि उक्तम्, काम्यकर्मणः अपि फलम् अस्मिन् श्लोके स्पष्टम् उक्तम्।

### अत्र चित्रमुखेन साधनसोपानानि प्रदर्शितानि।

प्रथमस्तम्भे साधनानि सन्ति। द्वितीयस्तम्भे तत्तत्फलमस्ति।





### जन्तूनां मोहस्य कारणं किम्

**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ (गीता ५.१५)**

**सरलार्थः-** अज्ञानेन आवृतं ज्ञानं विवेकविज्ञानम्। तेन मुह्यन्ति 'करोमि कारयामि भोक्ष्ये भोजयामि' इत्येवं मोहं गच्छन्ति अविवेकिनः संसारिणो जन्तवः।

### अज्ञानावरणस्य नाशः केनोपायेन भवति

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।**

**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ (गीता५.१६)**

**सरलार्थः-** ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितम् आत्मनः भवति, तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं रूपजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति। तत् परं परमार्थतत्त्वम्।

अत्रेदं स्पष्टं यद् अज्ञानस्य नाशः कर्मणा न भवति, ज्ञानेनैव अज्ञाननाशः भवति।

**'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'** (श्वे. उ. ३.८)

इति विद्याया अन्यः पन्थाः मोक्षाय न विद्यते इति श्रुतिः इतरपन्थानं निराकरोति।

### ज्ञानस्य आवरणं किम्। कर्म उत अज्ञानम्

ज्ञानस्य आवरणं कर्म भवितुम् नार्हति यतोहि कर्म द्रव्यं नास्ति। आवरणं केवलं द्रव्येण भवितुम् अर्हति। द्रव्यकार्यम् आवरणम्। अज्ञानं च भावरूपमस्ति न तु अभावरूपम्। अत एव अज्ञानेन आवृतं भवति ज्ञानम्।

### कीदृशं ज्ञानम् अज्ञानस्य नाशकम्

ननु आत्मा ज्ञानस्वरूपः, चित्स्वरूपः, चैतन्यस्वरूपः। ज्ञानाविद्ययोः विरोधस्तु सुप्रसिद्धः। तर्हि कथम् अविद्या ज्ञानात्मकम् अपि आत्मानम् आवृणोति। तत्रोच्यते- अविद्याया आत्मना विरोधो नास्ति। अर्थात् ज्ञानरूपः आत्मा न अविद्यायाः विरोधी। अविद्यायाः विरोधिनी तु विद्या भवति। उपरितनश्लोके विद्या एव ज्ञानशब्देन उच्यते, न तु सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुतौ उक्तं ज्ञानम्। विद्या च इह बुद्धिवृत्तिरूपा, न तु प्रकाशरूपा। यत्र तु सत्यं ज्ञानमनन्तं ब्रह्म इति ज्ञानशब्दः तस्य प्रकाशः अर्थः। इदं ज्ञानम् प्रकाशः प्रकाशकः अपि भवति। तथाहि- तस्य भासा सर्वमिदं विभाति इति श्रुतेः। एवञ्च इयं बुद्धिवृत्तिः विद्या आत्मावरकाम् अविद्यां नाशयति। ततः आत्मप्रकाशो जायत इत्यतः ब्रह्मवस्तुप्रकाशकत्वम् विद्यायाः उच्यते। इत्थम् चैतन्यभासितया एव बुद्धिवृत्त्या ज्ञानेन करणेन आत्मावरकस्य अज्ञानस्य नाशद्वारा आत्मा प्रकाशते। बुद्धिवृत्तिरूपं ज्ञानं न प्रकाशकम्। किन्तु प्रकाश-करणात्मकमेव। प्रकाशात्मकं तु ज्ञानं चैतन्यमेव।

### किंलक्षणः जन्तुः जन्ममृत्युरूपसंसारम् अतिक्रामति

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।**



**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ (गीता ५.१७)**

**सरलार्थः**- तस्मिन् ब्रह्मणि गता स्थिता बुद्धिः येषां ते तद्बुद्धयः। तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः। तन्निष्ठाः निष्ठा अभिनिवेशः तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः। तत्परायणाश्च तदेव परम् अयनं परा गतिः परमं प्राप्यं येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः। येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते गच्छन्ति एवंविधा अपुनरावृत्तिम् अपुनर्देहसम्बन्धं मोक्षं ज्ञाननिर्धूतकल्मषा यथोक्तेन ज्ञानेन निर्धूतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषां ते ज्ञाननिर्धूतकल्मषाः यतयः। (शां.भा.)

स्पष्टञ्चात्र यत् यः तद्बुद्धिः (पारोक्ष्येण ब्रह्मज्ञानम्, शाब्दज्ञानम्, यथा गुडो मधुर इति यो नानुभूतवान् परन्तु कुतश्चित् श्रुतवान् स गुडस्य माधुर्यं पारोक्ष्येण जानाति।) तदात्मा (ब्रह्मात्मापरोक्षज्ञानम्) तन्निष्ठः (नैरन्तर्येण तत्स्वरूपानुसन्धानं) तत्परायणः (तद्रतिः) ज्ञाननिर्धूतकल्मषः स एव पुनः देहं न लभते। मुक्तो भवति।

### संन्यासस्य द्वैविध्यम्

विविदिषासंन्यासः विद्वत्संन्यास इति भेदात् संन्यासस्य द्वैविध्यमस्ति।

विद्वत्संन्यासः साक्षात् मोक्षहेतुः अस्ति। विद्वत्संन्यासे सर्वकर्माणि त्यज्यन्ते। विद्वत्संन्यासी परमहंसः अपि कथ्यते। ज्ञानसहितः अयं संन्यासः। तस्य कर्ता आत्मविद्।

विविदिषासंन्यासं यः करोति स विविदिषुः कथ्यते। स च कुटीचकादिः भवति। विविदिषासंन्यासे कर्मैकदेशः त्यज्यते, अपरदेशः अनुवर्त्यते। स च कर्मयोगस्य परिसमाप्तेः पूर्वमेव संन्यस्यति। अतः तेन कर्मयोगः अनुवर्तनीय एव। ज्ञानरहितः अयं संन्यासः। तस्य कर्ता अनात्मविद्।

### काम्यकर्मणां त्यागः कर्तव्यः मुमुक्षुणा

**न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। (कैवल्योपनिषत् १.२)**

**तात्पर्यार्थः**- कर्मणा वा प्रजया वा धनेन वा अमृतत्वं न प्राप्यते। किं तु एके ज्ञानिनः त्यागेन अमृतत्वं प्राप्तवन्तः॥ अमृतत्वाय त्याग एव एकं साधनम् इति धैर्येण प्रतिपादयति अयं मन्त्रः। वैदिकसम्प्रदाये अयं मन्त्रो यतिवन्दनमन्त्रः इति सुप्रसिद्धो जनप्रियश्च। जपपूजापारायणहोमदानध्यानादीनि फलोद्देशेन क्रियमाणानि कर्माणि सन्ति। एतेभ्यः कर्मभ्य इष्टफलानि लभ्यन्ते। कर्मभ्यः अभ्युदयफलानि केवलानि लभ्यन्ते, न तु मुक्तिः। सत्पुत्रेभ्यश्च गृहस्थानाम् अमृतत्वं न लभ्यते। धनेन हि अद्यतनकाले सर्वं सम्पाद्येत। धनेन असाध्यमिति न किञ्चिदस्ति। तथापि स्वतस्सिद्धः स्वाभाविको मोक्षो धनेनापि न लभ्यः। तर्हि मोक्षस्य किं वा साधनम् इति चेत्। त्याग एव एकं साधनम्। त्यागो हि अध्यासस्य त्यागः। अहंताममतयोरेव त्यागः। अविद्याहानिरेव त्यागः। आत्मज्ञानेन अनात्मवस्तुत्यागः। त्यागेनैव मुक्तिः। मन्त्रममुं जानन्तो बहवो वेदविहितानि सर्वाणि कर्माणि रभसात् त्यजन्ति। परन्तु तदनुचितम्। साधनसोपाने मोक्षात् पूर्ववर्ती त्याग उक्तः। स च सर्वोच्चः त्यागः। येन नित्यादिकर्माणि उपासनानि विवेकादिसाधनानि कृतानि तेन एव नित्यादिकर्माणि अपि अग्रे त्याज्यानि

सन्ति। अतः कर्मादीनां त्यागेऽपि कश्चित् क्रमः अस्ति। तं क्रममबुद्ध्वा असन्नद्धः कर्मत्यागं करोति चेद् मोक्षं न भजेत। यथा यः द्वादशकक्षायाः परीक्षां लिखित्वा उत्तीर्णो भवति स एव द्वादशकक्षोत्तीर्ण इति गण्यते। परन्तु प्रथमकक्षां पठन् छात्रः न द्वादशकक्षायोग्यः। नापि तेनेदं चिन्तनीयं यद् यदि द्वादशकक्षायाः परीक्षया एव द्वादशकक्षोत्तीर्णता स्यात् तर्हि किं प्रथमकक्षाध्ययनेन इति। सोपानक्रमभ्रमप्रदिम्ना कर्म्म त्यागं न कुर्यात्।

तथाहि महाभारतवचः-

**कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।**
**तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥** (मो. ध. २४१.७)
**त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज॥** (मो.ध.३२९. ४०)



## पाठगतप्रश्नाः १

१. ब्रह्मजिज्ञासा कदा कर्तव्या।
२. धर्मजिज्ञासायाः पूर्वमपि ब्रह्मजिज्ञासा सम्भवति न वा।
३. केषां कर्मणां त्यागः सर्वकर्मसन्न्यासः उच्यते।
४. यः फलाशया कर्म करोति तस्य का गतिः।
५. कीदृशं ज्ञानम् अज्ञानस्य नाशकम्।
६. ज्ञानस्य आवरणं किम्।
७. अज्ञानावरणनाशस्य कारणं किम्।
   (क) ब्रह्मज्ञानम्  (ख) उपासना  (ग) नित्यादिकर्माणि  (घ) काम्यादिकर्माणि
८. किंलक्षणो जन्तुः संसारचक्रम् अतिक्रामति।
९. संन्यासभेदः लेख्यः। कः कीदृशं कर्म त्यजति।
१०. यदि सर्वकर्मत्यागेनैव मोक्षः भवति तर्हि नित्यादिकर्माणि कुतः कर्तव्यानि।

---

### २२.१.१) कर्मभेदः

**काम्यं निषिद्धं नित्यं नैमित्तिकम् प्रायश्चित्त**ञ्चेति पञ्चविधानि कर्माणि प्रथन्ते।

१. यैः कर्मभिः स्वर्गादि सुखात्मं सुखजनकं च इष्टम् फलं लभ्यते तानि कर्माणि **काम्यानि**।

२. येषां कर्मणां नरकादि अनिष्टम् एव फलं तानि शास्त्रेण प्रतिषिद्धानि कर्माणि **निषिद्धानि**।



३. ब्राह्मणादीन् वर्णान् ब्रह्मचर्यादीन् आश्रमान् च उद्दिश्य नित्यकर्तव्यतया शास्त्रेण विहितानि कर्माणि **नित्यानि**।

४. पुत्रजन्मादिरूपं किमपि विशिष्टं निमित्तम् आश्रित्य यानि कर्माणि कर्तव्यानि भवन्ति तानि **नैमित्तिकानि**।

५. प्रकृतजन्मनि प्रमादात् निषिद्धं कर्म कृतं, नित्यं च अकृतम्। तदा ततो जायमानस्य दोषस्य क्षयार्थं यत् कर्म कर्तव्यं तत् **प्रायश्चित्तम्** ईर्यते।




एषु काम्यं निषिद्धं च वर्जयित्वा अन्यानि त्रिविधानि कर्माणि अधिकारलाभाय कर्तव्यानि भवन्ति। एषां नित्यनैमित्तिकप्रायश्चित्तानां शास्त्रप्रसिद्धानां कर्मणां, गुरुजनैः कर्तव्यतया उपदिष्टानां कर्मणां च मोक्षसाधनरूपेण अनुष्ठानम् एव वेदान्तशास्त्रे कर्मयोग इत्युच्यते। कर्मयोगेन चित्तमलानां नाशः भवति। ततश्च चित्तं शुद्ध्यति। निषिद्धं न केनापि करणीयम्। तथापि यः काम्यानि कर्माणि वर्णाश्रमकर्मरूपेण प्राप्तानि चेत् तानि यदि निष्कामभावनया क्रियन्ते तर्हि तानि अपि चित्तशुद्धिकराणि भवन्ति। अत एव भगवान् गीतासु अर्जुनं वर्णाश्रमधर्मप्राप्तं युद्धं कर्तुम् उपदिदेश। अन्यथा युद्धत्यागम् उपदिशेत्। नित्यादीनि च केवलानि विदध्यात्।

## २२.१.२) चित्तमलः

कः चित्तस्य मलः। कथं चित्तं मलिनं भवति। चित्ते मलः अस्ति इति कथं ज्ञायते। चित्तमलस्य शुद्धिः कथं क्रियते। चित्तशुद्धिः जाता न वेति कथं ज्ञायते। चित्तं शुद्धं चेत् ततः परं किं कर्तव्यम्।

चित्तमलः पापम्। निषिद्धकर्माचरणेन पापं जायते। निषिद्धकर्माचरणस्य वासनया चित्तमलः अनुमीयते। निष्कामकर्मणा चित्तस्य शुद्धिः क्रियते। कामक्रोधादीनां लाघवेन शुद्धेः मात्रा अनुमीयते

चित्तशुद्धेः परम् उपासना करणीया। विवेकादिसाधनचतुष्टं च कर्तव्यम्। ततः गुरूपसदनम्। ततः श्रवणादिकम्।

### गुणानां चित्ते प्रभावः

ब्रह्मविद्यया अविद्यामयस्य संसारस्य निवृत्तिः नित्यनिरतिशयानन्दप्राप्तिश्चेति महत् प्रयोजनं सिद्ध्यति। परन्तु सर्वैः जीवैः स्वरूपप्रतिपादकानां महावाक्यानां भूयो भूयः श्रवणेऽपि ब्रह्मविद्या न समुदेति बहूनाम्। किमत्र कारणं स्यादिति मीमांसा। तत्र कारणेषु अन्यतमं कारणं हि अन्तःकरणस्य मालिन्यम्। सत्त्वरजस्तमोगुणमयाद् अज्ञानाद् सत्त्वगुणस्य प्राधान्येन उत्पन्नं खलु अन्तःकरणम्। अत एव



अन्तःकरणं त्रिगुणात्मकम् भवति। त्रिषु गुणेषु सत्त्वगुणः प्रकाशकः। रजोगुणः कामक्रोधरागद्वेषादीनाम् उत्पादकः। तमोगुणस्तु प्रमादालस्यनिद्रामोहादीनां जनकः। रजसि तमसि च क्षीणे सत्त्वगुणाधिक्यात् अन्तःकरणं यथायथं सर्वं ज्ञेयं प्रकाशयति। रजसा तमसा च अभिभूतम् अन्तःकरणं दृष्टस्य स्पृष्टस्य श्रुतस्य आघ्रातस्य रसितस्य च विषयस्य वास्तविकं स्वरूपम् प्रकाशयितुं न शक्नोति। तद्यथा- चुम्बके लौहाकर्षणशक्तिरस्ति। किन्तु तद् धूल्यादिमालिन्ययुक्तं चेत् लौहाकर्षणे असमर्थं भवति। अपसारिते च मालिन्ये चुम्बकम् आकर्षति। एवमेव अन्तःकरणम् प्रकाशनशीलेन सत्त्वगुणेन स्वभावतः सहितं चेदपि रजसा तमसा च योगात् अशुद्धम् भवति। अतः ब्रह्मज्ञानस्य प्रतिबन्धो भवति। तस्माद् ब्रह्मलाभाय प्रथमम् अन्तःकरणस्य शुद्धिः यत्नेन सम्पादनीया भवति। अन्तःकरणे विद्यमानात् सत्त्वगुणात् रजोगुणः तमोगुणश्च दूरीकरणीयः। अतः एव अन्तःकरणस्य शुद्धिः सत्त्वशुद्धिः इत्यपि व्यपदिश्यते। यस्य सत्त्वशुद्धिः अस्ति तस्यैव साधनचतुष्टयं सिद्ध्यति। साधनचतुष्टयसम्पन्नः एव ब्रह्मबोधकानि वेदान्तवाक्यानि श्रुत्वा ब्रह्मविद्यां लभते।

**कर्मभेदाः, तेषां प्रभावः, साधनानाम् उपयोगिता इति विषये शास्त्राणि प्रमाणत्वेन उपस्थाप्यन्ते अधः।**

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**

**न च संन्यसनादेव सिद्धिं समधिगच्छति॥ (गीता ३.४)।**

**सरलार्थः**- कर्मणाम् यज्ञादीनाम् , अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां पुरुषः न अश्नुते, न प्राप्नोति इत्यर्थः। नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां समधिगच्छति, न प्राप्नोति।

**तात्पर्यार्थः**- आदौ तानि कर्माणि कर्तव्यानि यानि चित्तशुद्धिं कुर्वन्ति। तानि न कृतानि चेत् संन्यासः फलवान् न भवति। संन्यासफलं तु नैष्कर्म्यं, निष्क्रियात्मस्वरूपेण अवस्थानम्। एतत्कर्मकरणम् एव कर्मयोगः कथ्यते। कर्मयोगः सम्यग् अनुष्ठितः चेत् ज्ञानयोगाय मुमुक्षुः कल्पते। अत एव कर्मयोगः ज्ञानयोगस्य उपायभूतः। यज्ञादीनि कर्माणि पापनाशं कुर्वन्ति फलाशां त्यक्त्वा कृतानि चेत्। पापमेव मलः। तस्य नाश एव सत्त्वस्य शुद्धिः। तथाहि भाष्यसम्मतिः-

**क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम् उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम्**

**(गीता.भा.३.४)**

**ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः।**

**यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि (महा. शान्ति. २०४.८)**



**सरलार्थः** - पापकर्मणः क्षयात् अर्थात् निषिद्धकर्माचरणेन उत्पन्नस्य अधर्माख्यस्य संस्कारस्य यदि क्षयः भवेत् तर्हि ज्ञानम् उत्पद्येत। यदा ज्ञानम् उत्पद्यते तदा आत्मानम् आत्मनि पश्यति, यथा आदर्शे स्फुटं पश्यति। धर्मेण पापम् अपनुदति।

नित्यकर्माणि पापनाशकानि सन्ति इत्यत्र गीतासम्मतिः-

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।**

**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ (गीता.१८.५)**

**सरलार्थः**- यज्ञः दानं तपः इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यम्, कार्यं करणीयम् एव तत्। कस्मात्। यज्ञः दानं तपश्चैव पावनानि विशुद्धिकराणि मनीषिणां फलानभिसन्धीनाम् इत्येतत्। अयं भवगतः वासुदेवस्य निश्चयः अस्ति। अत्रोक्तं यज्ञादिकं न काम्यं कर्म।

चित्तशुद्धिरेव आत्मशुद्धिरपि कथ्यते। चित्तशुद्धिं विना संन्यासः विफलो भवति। अतः अस्यैव विषयस्य भगवद्गीतायामपि बाहुल्येन उल्लेखः परिलक्ष्यते।

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**

**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये। (गीता ५.११)**

**सरलार्थः** - कायेन देहेन मनसा बुद्ध्या च केवलैः ममत्ववर्जितैः 'ईश्वरायैव कर्म करोमि, न मम फलाय' इति ममत्वबुद्धिशून्यैः इन्द्रियैरपि योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् सर्वव्यापारेषु ममतां हित्वा आत्मशुद्धये सत्त्वशुद्धये। अन्यच्चाह वार्तिककारः-

**दुरितक्षयहेतूनि नित्यानि ब्राह्मणो ययुः।**

**काम्यानि चेह कर्माणि दृष्टादृष्टफलानि तु॥ (तै.उ.भा.वार्तिकम् ४)**

भगवान् भाष्यकारः किल्बिषं पापमेव इति स्पष्टं कथयति गीताभाष्ये। तथाहि श्लोकः तद्भाष्यं च-

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।**

**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ (गीता ६.२८)**

**सरलार्थः**- (शांकरभाष्यम्-) युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः **विगतपापः**, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति॥ अन्यच्च-

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।**

**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ (गीता ६.४५)**

**सरलार्थः**- (शांकरभाष्यम्-) प्रयत्नाद् यतमानः, अधिकं यतमान इत्यर्थः। तत्र योगी विद्वान् संशुद्धकिल्बिषः विशुद्धकिल्बिषः **संशुद्धपापः** अनेकजन्मसंसिद्धः अनेकेषु जन्मसु किञ्चित् किञ्चित्

संस्कारजातम् उपचित्य तेन उपचितेन अनेकजन्मकृतेन संसिद्धः अनेकजन्मसंसिद्धः। ततो लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिमिति॥

संशुद्धकिल्बिषः इत्यस्य संशुद्धपापः इति पर्यायपदमुक्त्वा भाष्यकारः स्वाशयं बोधयति भाष्ये।

चित्तशुद्धये यज्ञादीनाम् अनुष्ठेयत्वेन उल्लेखः बहुत्र परिलक्ष्यते। के ते यज्ञाः। कथं ते कर्तव्याः। तेषां करणे किं शास्त्रं प्रमाणम् इति स्थाने एते प्रश्नाः। तत्समाधौ आह भाष्यकारः-

**स्मृतिष्वपि भगवद्गीताद्यासु अनभिसन्धाय फलम् अनुष्ठितानि यज्ञादीनि मुमुक्षोः ज्ञानसाधनानि भवन्तीति प्रपञ्चितम्। तस्माद् यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येव आश्रमकर्माणि विद्योत्पत्तौ अपेक्षितव्यानि। तत्रापि 'एवंवित्' इति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम्॥ (ब्र.सू.भा.३.४.२७)**

मुमुक्षुः साधनत्वेन यज्ञादिकं करोतीत्यत्र गीतासम्मत्तिः-

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ (गीता १७.२५)**

**सरलार्थः**- तत् इति अनभिसन्धाय, 'तत्' इति ब्रह्माभिधानम् उच्चार्य अनभिसन्धाय च यज्ञादिकर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रियाः दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिः मोक्षार्थिभिः मुमुक्षुभिः।

निसर्गत एव सर्वेषाम् अन्तःकरणे **मलो विक्षेपः आवरणं** चेते त्रयो दोषा आसते। मलो हि पापम्। तच्च संस्कारात्मना अतिसूक्ष्मत्वात् न प्रत्यक्षीभवति। किन्तु अनुमीयते। तथाहि अनुमानम्- चित्तं मलिनम् निषिद्धकर्मानुष्ठानाद् विषयासक्त्या चित्तगताशुभवासनाभिश्च। अर्थात् चित्ते मलिनत्वम् अनुमीयते। तत्र हेतुः निषिद्धकर्मानुष्ठानम्। अपरो हेतुः विषयासक्तिः। तृतीयो हेतुः चित्तगताशुभवासनाः। अर्थात् यः वेदादिश्रुतिस्मृतिभिः यन्निषिद्धं कर्म तदनुतिष्ठति स पापीयान् जायते। तस्य चित्ते मलः जायते।

यो विषयेषु आसक्तो भवति तस्य आसक्तेः कारणं हि चित्तस्थो मलः। अतः कार्यात् कारणम् अनुमीयते। आसक्तितः पापरूपः मलः सुतराम् ज्ञायते।

यस्य चित्ते अशुभवासनाः सन्ति तस्य चित्तं मलिनमस्ति इति नास्ति सन्देहलववकाशः।

एतत् हेतुत्रयं यस्य पुरुषस्य अस्ति स मलिनः अस्ति। मलनिवृत्त्यर्थं निष्कामकर्माणि भूतदयादि ईश्वरनामोच्चारणादीनि च साधनानि विधीयन्ते। तत्र निष्कामकर्म भूतदयादि च मलं निवर्तयेत्। नामोच्चारणं तु मलमपि विक्षेपमपि निवर्तयेत् इति भेदः।

विक्षेपश्च चित्तस्य चाञ्चल्यम्। यस्य चित्तं वेदान्तश्रवणे स्वरूपानुसन्धाने वा स्थैर्यं न प्राप्नोति किन्तु विषयाभिमुखीभवति तेन तन्निवृत्तये ईश्वरनामोच्चारणम् अजपामन्त्रावृत्तिः ईश्वरमूर्तिध्यानं निर्गुणब्रह्मानुसन्धानम् इत्यादय उपाया अवलम्ब्याः। उपासनादिभिः चित्तस्य एकाग्रता जायते।



एवञ्च शरीरवाङ्मनोभिः पुष्कलेन धनेन शुश्रूषया च ईश्वर एव अस्मदनन्तकोटिजन्मार्जितसुकृतपरिपाकात् गुरुमूर्तिरूपेण अवतीर्ण इति श्रीसद्गुरूपासनं कुर्याद्। ईदृश्या सद्गुरुसेवया महान् लाभ उक्तः। तथाहि श्रुतिः-

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**

**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥** (श्वे.उ.६.२३)



## पाठगतप्रश्नाः २

११. वेदान्ते कति कर्माणि। कानि च तानि।

१२. काम्यस्य कीदृशाचरणेन तत् चित्तशुद्धिकरं भवति।

१३. नित्यादिकर्माणि कुतः अनुष्ठेयानि।

१४. अन्तःकरणस्य घटद्रव्याणि कानि।

१५. विषयासक्तेः कारणं किम्।

१६. नित्यादिकर्मभ्योऽपि नामजपस्य को विशेषः।

## २२.२) काम्यम्

द्विविधं त्याज्यं कर्म – काम्यकर्म निषिद्धकर्म चेति।

फलोद्देश्येन क्रियमाणानि कर्माणि काम्यानि। यत्किञ्चित् फलम् आकाङ्क्ष्य यत् कर्म क्रियते तत् काम्यं कर्म। यथा स्वर्गप्राप्त्यर्थं क्रियमाणानि ज्योतिष्टोमयज्ञादीनि। मरणादनन्तरं स्वर्गप्राप्तिः भवतु इति फललाभाय ज्योतिष्टोमादियागः अनुष्ठीयते। अतः स्वर्गरूपफलप्राप्तये यो ज्योतिष्टोमादियागः क्रियते स काम्यं कर्म। काम्यकर्मणः फलम् अनित्यम्। **यत् कृतकं तदनित्यम्** इति नियमः। अर्थात् यत् क्रियाजन्यं साधनजन्यं तद् अनित्यम्। फलभोगात् परं पुनः तत् फलं कोऽपि इच्छति चेत् तत् कर्म पुनः कर्तव्यम्।

काम्यकर्मणः त्यागः कुतः कर्तव्यः। काम्यकर्मणः फलं स्वर्गादि। तच्च फलं मरणोत्तरं लभ्यते। काम्यकर्म मरणोत्तरं फलं ददाति। मरणोत्तरं कर्मणः फलोत्तपत्तये पुनः जन्म आवश्यकम्। तच्च जन्म मृत्युलोके वा भवतु स्वर्गलोके वा भवतु। यावत् कर्मणः पुण्यं जायते तावत् पुण्यं फलं दत्वा समाप्तं भवति। पुनः फललाभाय पुनः काम्यकर्मभिः पुण्यसंचयः कर्तव्यः। इत्थम् इदम् चक्रं प्रवर्तते। इदमेवमेवेति अवगम्य यश्च इत्थं साध्यसाधनभूताद् विरक्तः स एव मुमुक्षुः। अत इदं स्पष्टं यद् मुमुक्षुः साध्यसाधनप्रसूतं संसारचक्रं न कामयते। संसारचक्रं न कामयते चेत् संसारचक्रप्रवर्तकं कर्म त्याज्यम् इति स्फुटमेव। अतः काम्यकर्म वर्जनीयं मुमुक्षुणा।

## २२.३) निषिद्धम्

**निषिद्धानि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि कर्माणि**। वेदेन यानि कर्माणि निषिद्धानि तानि अत्र निषिद्धकर्माणि कथ्यन्ते। एतानि कर्माणि पापाख्यं संस्कारम् अन्तःकरणे जनयन्ति। स च संस्कारः समुचिते काले विविधानि दुःखानि नरकादि अनिष्टं च जनयति।

निषिद्धानि यथा पापद्वारा दुःखं जनयन्ति तथा असम्भावनाविपरीतभावनानां निवर्तने प्रतिबन्धकत्वेन कार्यं कुर्वन्ति। अर्थात् यस्य पापम् अस्ति तस्य असम्भावनादिदोषाः जायन्ते। अत एव महावाक्यश्रवणोत्तरमपि जीवब्रह्मैक्यज्ञानं नोत्पद्यते। अत एव पापस्य नाशाय कर्माणि अनुष्ठेयानि भवन्ति।

अस्मिन् जन्मनि निषिद्धं प्रमादात् कृतं चेत् तेन जन्यं पापं न भवतु इति वाञ्छति चेत् प्रायश्चित्तानि विधीयन्ते। प्रायश्चित्तकर्माणि निषिद्धजन्यस्य पापस्य प्रतिबन्धकानि भवन्ति। कर्मणा कर्मनाशः क्रियते। पूर्वपूर्वजन्मसु कृतस्य निषिद्धस्य अस्मिन् जन्मपि प्रारब्धरूपेण परिणामो भवति। तन्निषिद्धम् अधुना फलदानाय परिपक्वम्। तस्यापि शान्तिः काम्यते। अतः नित्यानां प्रपञ्चः।

## २२.४) नित्यम्

पूर्वजन्मकृतानि निषिद्धकर्माणि अन्तःकरणे अधर्मम् पापापरनाम जनयन्ति। अयम् अधर्माख्यः संस्कारः अग्रिमजन्मसु दुःखम् जनयति। नरकादीनाम् अनिष्टानां प्राप्तिं प्रति कारणं भवति। असम्भावनानिवृत्तेः विपरीतभावनानिवृत्तेश्च प्रतिबन्धको भवति। अर्थात् अधर्माख्ये संस्कारे सति कृतेऽपि वेदान्तश्रवणे असम्भावना न निवर्तते, विपरीतभावना च न निवर्तते। अतः पूर्वजन्मसु कृतस्य निषिद्धस्य प्रारब्धत्वेन परिणतस्य एते विविधा दोषाः सन्ति। तेषु प्रतिबन्धकत्वेन स्थितस्य अधर्मस्य निवारणम् मुख्यत्वेन आवश्यकमस्ति। यतो हि यावत् असम्भावना न निवर्तते तावत् विपरीतभावना न निवर्तते। यावद् विपरीतभावना न निवर्तते तावद् अज्ञानावरणनाशो न भवति। इत्थम् निषिद्धकर्माणि बहूनाम् अनर्थानाम् मूलम् सन्ति। अत उपायत्वेन नित्यकर्माणि विधीयन्ते। एतानि कर्माणि कृतानि चेत् निषिद्धैः कर्मभिः सम्भाव्या दोषा प्रायो वारयितुं शक्यन्ते।

तानि च **नित्यानि कर्माणि सन्ध्यावन्दनादीनि** सन्ति। तथाहि श्रुतिः- **अहरहः सन्ध्यामुपासीत** इति। अनिमित्ते सति विहितं नित्यं कर्म भवति।

अकरणे प्रत्ययवायसाधनानि नित्यानि सन्ध्यावन्दनादीनि इति उक्तं वेदान्तसारे। तत्र कोऽस्यार्थः। केचिदाहुः यत् नित्यानि न कृतानि चेत् प्रत्ययवायः दोषः पापं जायते। अतः संन्यासिना अपि नित्यानि अनुष्ठेयानि इति एवं ज्ञानेन सह कर्मापि कर्तव्यमेव। अयं ज्ञानकर्मसमुच्चयः उच्यते। तत्रोच्यते भाष्यकारेण भगवता शङ्करेण -

> **न हि अग्निकार्याद्यकरणात् संन्यासिनः प्रत्यवायः कल्पयितुं शक्यः। यथा ब्रह्मचारिणाम् असंन्यासिनामपि कर्मिणाम्। न तावत् नित्यानां कर्मणाम् अभावादेव भावरूपस्य प्रत्यवायस्य उत्पत्तिः कल्पयितुं शक्या, 'कथमसतः सज्जायेत' (छा.उ.६.२.२) इति असतः सज्जन्मासम्भवश्रुतेः। यदि विहिताकरणात्**



**असम्भाव्यमपि प्रत्यवायं ब्रूयात् वेदः तदा अनर्थकरः वेदः अप्रमाणमित्युक्तं स्यात्। विहितस्य करणाकरणयोः दुःखमात्रफलत्वात्। तथा च कारकं शास्त्रं न ज्ञापकम् इत्यनुपपन्नार्थं कल्पितं स्यात्। न चैतदिष्टम्। तस्मात् न संन्यासिनां कर्माणि। अतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः। (गी.भा.तृतीयाध्याये उपोद्घातः)**

## २२.५) नैमित्तिकम्

**नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि कर्माणि।** निमित्तं कारणं यस्यास्ति तत् नैमित्तिकम्। कस्यचित् निमित्तस्य उपस्थितौ शास्त्रोपदेशेन यत् कर्म कर्तव्यं भवति तत् नैमित्तिकं कर्म। यथा जातेष्ट्यादयो यज्ञाः। तथाहि जातेष्टियागस्य विधायकं वाक्यम्- "**वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते**" इति। यदा पुत्रः जायते तदा द्वादशसु कपालेषु पुरोडाशं स्थापयित्वा वैश्वानरदेवाय दातव्यम्। पुत्रजान्मनिमित्तो जातेष्टियागो भवति। तस्मात् स यागो नैमित्तिकं कर्म।

## २२.६) प्रायश्चित्तम्

**प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि कर्माणि।** मनुष्या मोहात् प्रमादं कुर्वन्ति। लोभादीनां वशम् आगत्य निषिद्धमपि आचरन्ति। विहितकर्मणाम् अननुष्ठानेन निषिद्धकर्मणां च अनुष्ठानेन मनुष्याः पापभाजः भवन्ति। परं च कृतस्य पापस्य कृते अनुशोचनं कुर्वन्ति। अस्मिन्नेव जन्मनि तस्मात् पापात् मुक्तिं प्राप्तुं यतन्ते च। एतादृशानां मनुष्याणां कृते एव शास्त्रे प्रायश्चित्तकर्माणि विधीयन्ते। प्रायश्चित्तशब्दार्थः "प्रायः तुष्टं चित्तं यत्र तत् प्रायश्चित्तम्" इति। प्रायशब्दार्थः प्रकृष्टम् अयः अर्थात् लौहवत् कठोरं तपः। अर्थात् यस्मिन् व्रतानुष्ठाने कठोरेण तपसा चित्तं तुष्टं भवति तत् प्रायश्चित्तम्। येन पापानां क्षयो भवति। चान्द्रायणम् एकं प्रायश्चित्तम्। चान्द्रायणविषये मनुमुनिराह –

**एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्धयेत्।**
**उपस्पृशन् त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥ (मनुस्मृतिः ११.२१६)**

**सरलार्थः-** प्रत्यहं प्रातः सायं मध्याह्ने च स्नानम् कर्तव्यम्। पूर्णिमायां पञ्चदशमुष्टिपरिमितं भोजनं कृत्वा कृष्णपक्षस्य प्रतिपत्तिथेः चतुर्दशीपर्यन्तं प्रत्यहम् एकमुष्टिपरिमितं भोजनं न्यूनं कर्तव्यम्। ततः अमावस्यायाम् उपवासः कर्तव्यः। ततः शुक्लपक्षस्य प्रतिपत्तिथौ भोजनारम्भः कर्तव्यः। प्रत्यहम् एकमुष्टिपरिमितस्य भोजनस्य वर्धनं कर्तव्यम्। पुनः पूर्णिमायां पञ्चदशमुष्टिपरिमितं भोजनं कर्तव्यम्। एवम् एकमासं कर्तव्यम्। अस्य प्रायश्चित्तकर्मणो नाम चान्द्रायणम्। एवमन्यानि अपि प्रायश्चित्तकर्माणि सन्ति।

### नित्यादीनाम् फलम्

कस्यापि कर्मणा आवश्यकमुख्यभेदेन फलद्वयं सम्भवति। कदाचित् यद् आवश्यकं तदेव मुख्यमिति भवितुमर्हति।



**एतेषां नित्यनैमित्तिकप्रायश्चित्तानां बुद्धिशुद्धिः परम् अर्थात् आवश्यकं प्रयोजनम्।** मुख्यं प्रयोजनं तु विविदिषादि। तथाहि श्रुतिः- **तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन** इति। स्मृतिरपि - **तपसा कल्मषं हन्ति** इति।

एतेषां नित्यनैमित्तिकप्रायश्चित्तोपासनानाम् अवान्तरफलम् अर्थात् गौणं फलं तु पितृलोकप्राप्तिः सत्यलोकप्राप्तिः। तत्र प्रमाणं - **"कर्मणा पितृलोकः विद्यया देवलोकः"** इति श्रुतिः।

एतैः नित्यनैमित्तिकप्रायश्चित्तोपासनाभिः परिशुद्धं मनः साधनचतुष्टयसम्पादने समर्थं भवति। अतः नित्यादिकर्मणा यस्य पुरुषस्य चित्तं निर्मलं भवति सः साधनचतुष्टयसम्पादने स्वं नियोजयति।

इत्थम् एतेषां कर्मणामनुष्ठानेन बुद्धेः शुद्धिः निर्मलता भवति। तस्मात् एव एतेषाम् आचरणं कर्तव्यम्।



## पाठगतप्रश्नाः ३

१७. काम्यानां त्यागे को हेतुः।

१८. कानि निषिद्धानि कर्माणि।

१९. कानि नित्यानि कर्माणि।

२०. किं नैमित्तिकं कर्म।

२१. कानि प्रायश्चित्तानि कर्माणि।

२२. नित्यादीनाम् परम् प्रयोजनं किम्।

२३. नित्यादीनाम् अवान्तरफलं किम्।

## २२.७) उपासना

उपासना द्वेधा – सगुणब्रह्मविषया निर्गुणब्रह्मविषया इति। सगुणब्रह्मविषयकम् उपासनम् एव ब्रह्मविद्यायाः बहिरङ्गसाधनेषु अथवा परम्परासाधनेषु गण्यते। निर्गुणब्रह्मविषयकम् उपासनं तु निदिध्यासनमेव। तत् अन्तरङ्गसाधनेषु अन्तर्भवति। श्रवणम् मननं निदिध्यासनञ्च ब्रह्मविद्योत्पत्तिम् प्रति अन्तरङ्गसाधनानि भवन्ति। मनसः एकाग्रतायै उपदिष्टम् उपासनम् सगुणब्रह्मविषयकम्। तथाहि वेदान्तसार आह-

**"उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि"।**

**(वेदान्तसारः)**

यः पुरुषः नित्यादि कर्म करोति तस्य मनः निर्मलं भवति। निर्मलस्य मनसः एकाग्रतासम्पादनाय उपासनं कर्तव्यम्। उप समीपे आस्यते स्थीयते अनेन इति उपासनम् इति अनेन



व्युत्पत्तिबलेन उपासनं हि येन कर्मणा उपासकः उपास्यस्य समीपं तिष्ठति। अर्थात् उपासकस्य चित्तं सर्वदा उपास्ये एव लग्नं भवति। उपासना विद्यारूपा। अत्र विद्याशब्दस्य अर्थो हि विद्यते लभ्यते उपास्ये चित्तस्थैर्यं यया क्रियया सा विद्या। अर्थाद् यया क्रियया उपास्ये सगुणे ब्रह्मणि उपासकस्य चित्तं स्थिरीभवति सा क्रिया विद्या। सा विद्या शाण्डिल्यादिमहर्षिभिः उपदिष्टा।

सगुणब्रह्मविषयकानि उपासनद्वयम् उपनिषत्सु मुख्यतया श्रूयते – अहङ्ग्रहोपासनम् प्रतीकोपासनं चेति। एषां द्विविधानाम् अपि उपासनानां स्वकीयानि फलानि सन्ति। तेषु फलेषु कामनाम् परित्यज्य चित्तशुद्ध्यर्थम् अपि उपासनं कर्तुं शक्यते।

समुदेति प्रश्नोऽत्र यद् उपासनया साक्षात् निर्विशेषब्रह्मसाक्षात्कारो भवति उत परम्परया। यदि उपासना साक्षात् ब्रह्मसाक्षात्कारं प्रति कारणं तर्हि श्रवणादीनां वैयर्थ्यापत्तिः। तत्रोच्यते यद् उपासना परम्परया एव निर्विशेषब्रह्मसाक्षात्कारं प्रति निमित्तम्। कश्चित् एकस्मिन्नेव जन्मनि उपासनां समाप्य श्रवणादिना मोक्षं न भजते। स दुर्वासनावासितान्तःकरणः वैराग्याद्यभावात् श्रवणादिहीनो भवति। अतः केवलं सगुणमेवोपासते। तया उपासनया चित्तैग्रतां सम्पाद्य अर्चिरादिक्रमेण ब्रह्मलोकं गच्छति। तत्रैव श्रवणादिना ब्रह्मानुभावम् उत्पाद्य अमृतत्वं भजति। एवं न श्रवणादिवैयर्थ्यम्। सगुणोपासनस्य पारम्पर्येण ब्रह्मानुभवहेतुत्वम्। तदित्थं प्रतिपादितं कल्पतरौ-

**निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥**
**वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।**
**तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्॥ (कल्पतरुः १.१.७.२०)**

**सरलार्थः**- ये मन्दाः दुर्वासनावासितान्तःकरणाः वैराग्यद्यभवात् श्रवणादिसाधनहीना निर्विशेषं परं ब्रह्म साक्षात्कर्तुम् अनीश्वरा अक्षमाः ते सविशेषनिरूपणैः सगुणब्रह्मोपासननिरूपणैः अनुकम्प्यन्ते अनुगृह्यन्ते। सगुणोपासनफलं च एषां मन्दानां सगुणब्रह्मशीलनात् भवति। सगुणब्रह्मोपासनाभ्यासात् मनसि वशीकृते ब्रह्मणि एव एकाग्रे सति तदेव परं ब्रह्म अपेतोपाधिकल्पनम् अपेता उपाधिकल्पना यस्मात् तन्निरुपाधिकं सत् साक्षात् आविर्भवति इति।

अन्तःकरणशुद्धिद्वारा ब्रह्मविद्योदयस्य उपायभूतम् अन्यत् अपि द्विविधम् उपासनं विद्यते- ध्यानयोगः, भक्तियोगश्च इति। ध्यानम् भक्तिश्च मनसा एव क्रियते इत्यतः ध्यानयोगस्य भक्तियोगस्य च मानसव्यापाररूपे उपासने अन्तर्भावः भवति। ध्यानेन चित्तविक्षेपाणां क्षयात् चित्तस्य एकाग्रता भवति। यदा भक्तेः विषयः सगुणं ब्रह्म भवति तदा सा उपासनायाम् अन्तर्भवति। यदा उपास्यं निर्गुणं ब्रह्म भवति तदा निदिध्यासनपदवाच्या भवति। सगुणभक्तियोगस्य वैशिष्ट्यं हि कश्चित् लौकिकः सम्बन्धः पुत्रत्व-मित्रत्व-दासत्वादिः ईश्वरेण सह कल्प्यते। स सम्बन्धः यावत् दाढ्र्यं लभते तावत् चित्तं ईश्वरचिन्तने लग्नं भवति। सगुणब्रह्मणि भक्तिः कथम् अभ्यसनीया इति जिज्ञासा सम्भवति। नवभिः सोपानैः समन्वितः



कश्चन भक्तिमार्गः भक्तानां कृते भागवतमहापुराणे निरूपितो वर्तते। अयम् भक्तिमार्गः नवविधा भक्तिः इति प्रसिद्धः। तथाहि-

**श्रवणं कीर्तनं विष्णोः स्मरणम् पादसेवनम्।**

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ (भागवतमहापुराणम् ७.५.२३)**

श्रवणम् – विष्णोः सर्वव्यापिनः ईश्वरस्य नाम्नां माहात्म्यस्य च श्रवणम्।

कीर्तनम् – भगवतः गुणानां नाम्नां च सङ्कीर्तनम् अथवा गानम्।

स्मरणम् – भगवद्विषये एव सर्वदा स्मरणम्।

पादसेवनम् – भगवतः पादपद्मयोः सेवा।

अर्चनम् – भगवतः पूजनम्।

वन्दनम् – नमस्क्रिया।

दास्यम् – भगवतः दासरूपेण आचरणम्।

सख्यम् – भगवता सह सौहार्दम्।

आत्मनिवेदनम् – भगवति आत्मसमर्पणम्।

### कर्मयोगानन्तरमेव उपासनाया अनुष्ठाने को हेतुः।

चित्तस्य मलः धर्मः अधर्मश्च। तत्र अधर्मः कथम् ज्ञायते। निषिद्धाचरणं प्रति आकर्षणाद् अधर्मस्य सत्ता अन्तःकरणे अनुमीयते। अन्तःकरणे यावत् निषिद्धकर्मजनितानि पापानि सन्ति तावत् तानि पापानि निषिद्धकर्मसु प्रेरयन्ति। अतः मनः विषयेषु आकृष्टं भवति। इदं निषिद्धकर्मसु प्रेरणमपि येन अग्रे पापं जायते किञ्च चित्तस्य विक्षेपो भवति। अतः चित्तस्य विक्षेपस्य कारणं यावद् वर्तते तावद् उपासना अर्थात् एकाग्रतायाः प्रयासः कष्टाय कल्पेत। यतो हि विषयेषु आकर्षणमेव विक्षेपः खलु। इत्थं चित्तशुद्धिः भवति चेत् आकर्षणस्य कारणम् लघुतां गच्छति। तेन उपासनायां साफल्यं सम्भवति। एतत् प्रमाणीभवति गीतायां षष्ठाध्याये। तत्र भगवता श्रीकृष्णेन यदुक्तं तस्य सारांशः अत्र शांकरभाष्यानुरोधेन उपन्यस्यते।

ध्यानयोगस्य बहिरङ्गं भवति कर्म। तच्च कर्म कर्मफलम् अनाश्रित्य कर्तव्यम्। कर्मफलतृष्णां परिहृत्य कर्मयोगोऽनुष्ठेयः। किं कर्म कर्तव्यम्। नित्यं कर्म कर्तव्यम्। काम्यस्य त्यागः कर्तव्यः। नित्यं च अग्निहोत्रादिकम्। कर्मफलसंकल्पो हि चित्तविक्षेपहेतुः। यश्च सर्वकर्माणि तत्फलानि च त्यज्यति स परमार्थसंन्यासी इत्युच्यते। यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं सङ्कल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति। कर्मयोगी तु कर्म कुर्वाण एव फलविषयं संकल्पं त्यजति। संकल्पश्च फलविषयः अभिसन्धिः। कर्मफलसंकल्पो हि चित्तविक्षेपहेतुः। तस्मात् यः कश्चन कर्मी संन्यस्तफलसङ्कल्पो भवेत् स योगी समाधानवान् अविक्षिप्तचित्तो भवेत्।



फलनिरपेक्षः कर्मयोगो ध्यानयोगस्य बहिरङ्गं साधनम्। अधो गीतायाः श्लोकाः दीयन्ते यत्र स्पष्टमुक्तं यत् कर्मयोगः केन कर्तव्यः, कियन्तं कालं कर्तव्यः, कर्मयोगः सफलो न वेति कानि लक्षणानि इत्यादिकम्। श्लोकान् उपस्थाप्य अन्ते सारांशः प्रदास्यते-

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**

**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥६.३ ॥**

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**

**सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥६.४ ॥**

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।**

**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥६.५ ॥**

**बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।**

**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६.६ ॥**

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**

**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥६.७ ॥**

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**

**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥६.८ ॥**

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**

**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥६.९ ॥**

## सारांशः -

यः ध्यानयोगम् आरोढुम् इच्छति स आरुरुक्षुः। यश्च आरुरुक्षुः स कर्मफलं संन्यस्य कर्म कुर्यात्। तस्य तु कर्म कारणम् साधनम् उच्यते, कर्तव्यत्वेन उपदिश्यते। यदा च स योगारूढः भवति तदा कर्मणः शमः उपशमः, सर्वकर्मभ्यो निवृत्तिः कारणम् योगारूढस्य साधनम् उच्यते, तेषां कर्मणां त्यागः कर्तव्यः। कुत एवम्। यावद्यावत् कर्मभ्यः उपरमते, तावत्तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते। तथा सति स झटिति योगारूढो भवति। तथा चोक्तं व्यासेन -

**नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च।**

**शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः॥ (म.भा.मो.ध.१७५.३७)**

साधको योगारूढो न वेति कथं बोद्धव्यम्। उच्यते-

इन्द्रियाणाम् शब्दादयः हि अर्थाः। नित्यनैमित्तिककाम्यप्रतिषिद्धानि च कर्माणि। तेषु अर्थेषु कर्मसु च प्रयोजनाभावबुद्ध्या कर्तव्यताबुद्धिं न करोति, न अनुषज्जते। अर्थात् अर्थेभ्यः कर्मभ्यश्च यत्



प्राप्तव्यं तत् प्रयोजनं नास्ति इति बुद्धिः भवति। तदा अर्थेषु कर्मसु च नानुषज्जते। एवञ्च स सर्वान् कामान् सर्वाणि च कर्माणि संन्यस्यति तदा स सर्वसंकल्पसन्न्यासी योगारूढः उच्यते।

येन कार्यकारणसंघातरूपः आत्मा (न तु प्रत्यगात्मा) वशीकृतः स जितेन्द्रियः। तादृश एव आत्मा आत्मनः बन्धुः। अन्यो लौकिको बन्धुस्तु न बन्धुः। एवं जितात्मा प्रशान्तं च अन्तःकरणं यस्य स प्रशान्तात्मा, शीतोष्णसुखदुःखरूपेषु द्वन्द्वेषु समः। यस्य शास्त्रोक्तपदार्थानां परिज्ञानमस्ति, शास्त्रतो ज्ञातानां विषयाणां स्वानुभवो वर्तते इति ज्ञानविज्ञानतृप्तम् अन्तःकरणं यस्य सः। यश्च कूटस्थः अस्ति। यश्च लोष्टाश्मकाञ्चनेषु समः अस्ति स योगारूढः उच्यते। तेन कर्माणि कृत्वा ततः यत् चित्तशुद्धिरूपं फलं तत् आसादितम् इति भावः। एवञ्च स ध्यानयोगाय योग्यः।

ये च योगारूढाः तेषु अपि कश्चित् विशिष्टः भवति। तस्य लक्षणं हि-

साधुषु पापेषु च यः समबुद्धिः स योगारूढेषु अपि विशिष्टः अस्ति। के साधवः के च पापाः तदधो दीयते-

प्रत्युपकारम् अनपेक्ष्य उपकर्ता सुहृद् भवति। स्नेहवान् मित्रं भवति। यः कस्यापि पक्षं न भजते स उदासीनो भवति। यो विरुद्धयोः उभयोः हितैषी स मध्यस्थः कथ्यते। आत्मनः अप्रियः द्वेष्यः भवति। सम्बन्धी बन्धुः कथ्यते। एतेषु ये शास्त्रानुसारिणः सन्ति ते साधवः। ये च प्रतिषिद्धकारिणः ते पापाः।

इत्थम् विषयेषु कर्मसु अनुषङ्गहीनः, सर्वसंकल्पसंन्यासी, जितेन्द्रियः, जितात्मा, प्रशान्तः, समाहितः, शीतादिबाह्यद्वन्द्वेषु समः, मानापमानादि-मानसद्वन्द्वेषु समः, ज्ञानविज्ञानतृप्तात्मा, कूटस्थः, समलोष्टाश्मकाञ्चनः एव योगारूढः इति लक्ष्यते। तत्रापि साधुषु पापेषु च समबुद्धिः योगारूढेषु अपि विशिष्टः अस्ति।

इत्थं यो योगारूढः सः अग्रे ध्यानाभ्यासं कुर्यात्।

##  पाठगतप्रश्नाः ४

२४. उपासनाभेदाः कति। के च ते।

२५. उपासनायाः परं प्रयोजनं किम्।

२६. सगुणब्रह्मोपासनायाः भेदाः कति के च।

२७. उपासनालक्षणं किं वेदान्तसारे।

२८. सगुणब्रह्मोपासना निर्गुणब्रह्मोपासना इति द्वयोः मध्ये का साक्षात् मोक्षस्य साधनम्।

२९. कः परमार्थसंन्यासी।

(क) यः काम्यानि त्यजति (ख) यः उपासनां त्यजति। (ग) यः नित्यनैमित्तिकप्रायश्चित्तानि त्यजति। (घ) यः काम्यानि निषिद्धानि नित्यनैमित्तिकप्रायश्चित्तानि उपासनानि च त्यजति।

३०. कः चित्तविक्षेपहेतुः।



३१. ध्यानयोगस्य बहिरङ्गं साधनम् किम्।



## पाठसारः

अस्मिन् पाठे निष्कामकर्मयोगः उपासना चेति विषयः प्रामुख्येन वर्णितः। तत्रादौ साधनेषु यः क्रमः वर्तते तस्य उपस्थापनं कृतम्। वेदान्तसाधनानुकूलम् कर्मविभाजनं प्रदर्शितम्। अन्तरङ्गबहिरङ्गसाधनमिति विभागः संक्षेपेण प्रकटितः।

अज्ञानेन ज्ञानम् आवृतं भवति। अत एव जन्तुः मोहग्रस्तो भवति। यद्यपि ब्रह्म ज्ञानस्वरूपमेव तथापि तद् अज्ञानस्य विरोधि नास्ति। अत तेन अज्ञाननिवृत्तिः न भवति। चित्तस्य काचिद् विशिष्टा वृत्तिरेव अज्ञानं नाशयति। एते विषया उपस्थापिताः।

संन्यासो विविदिषाविद्वत्संन्यासभेदात् द्विविधः। काम्यकर्माणि बन्धनं कुर्वन्ति। तेषां त्याग एव विधीयते। तथापि फलाशां त्यक्त्वा तानि अनुष्ठीयन्ते चेत् चित्तशुद्धिः भवति। तत्र नित्यादिकर्माणि चित्तशुद्धये क्रियन्ते। चित्तस्य अशुद्धिश्च निषिद्धकर्मजन्यं पापमेव। स एव मलः। तस्यैव नाशः नित्यादिकर्मणा क्रियते। उपासना चित्तविक्षेपशान्तये क्रियते। नित्यादीन् यथा चित्तशुद्ध्यादिकं फलमस्ति तथैव पितृलोकदेवलोकप्राप्तिरूपमपि फलमस्ति। इति एते विषया अस्मिन् पाठे अन्तर्भवन्ति।



## पाठान्तप्रश्नाः

१. वेदान्ते अन्तरङ्गसाधनानि बहिरङ्गसाधनानि इति विभागः करणीयः।

२. कीदृशं ज्ञानम् अज्ञानस्य नाशकम् इति विवृणुत।

३. संन्यासभेदः विशदनीयः।

४. मोक्षसाधनेषु आनुपूर्वीं स्पष्टीकुरुत।

५. काम्यादिकर्मणां त्यागः केन क्रमेण कर्तव्यः मुमुक्षुणा।

६. कर्मभेदान् विवृणुत।

७. चित्तमलं स्पष्टीकुरुत।

८. गुणानां चित्ते प्रभावं विस्तारयत।

९. नित्यानि कर्माणि परिचाययत।

१०. काम्यं कर्म संक्षेपेण परिचाययत।

११. प्रायश्चित्तं विस्तारयत।

१२. नित्यादीनां फलं संगृह्णीत।

१३. उपासनां विशदतया लिखत।

१४. कर्मयोगानन्तरमेव उपासनाया अनुष्ठाने को हेतुः।

१५. कर्मयोगः कियद्दूरं कर्तव्यः। कथं कर्मयोगसाफल्यं ज्ञातुं शक्यते।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. वेदान्तोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या।

२. धर्मजिज्ञासायाः पूर्वमपि ब्रह्मजिज्ञासा सम्भवति।

३. काम्य-निषिद्ध-नित्य-नैमित्तिक-रूपाणां कर्मणां विधिवत् त्यागः एव सर्वकर्मसन्न्यासः।

४. बुद्धिवृत्तिरूपा विद्या आत्मावरकाम् अविद्यां नाशयति।

५. यः कर्मयोगं न करोति, फलाशया कर्म करोति स कर्मबद्धो भवति। संसारचक्रं प्राप्नोति।

६. ज्ञानस्य आवरणम् अज्ञानं भवति न तु कर्म।

७. (क)

८. तद्बुद्धिः तदात्मा तन्निष्ठः तत्परायणः ज्ञाननिर्धूतकल्मषः जन्तुः संसारचक्रम् अतिक्रामति।

९. विविदिषासंन्यासः विद्वत्संन्यास इति भेदात् संन्यासस्य द्वैविध्यमस्ति। विद्वत्संन्यासे सर्वकर्माणि त्यज्यन्ते। विविदिषुः कर्मयोगम् अनुवर्तयति चित्तशुद्धिं यावत्।

१०. यद्यपि सर्वकर्मत्यागेनैव मोक्षः भवति तथापि चित्तशुद्धये प्रतिबन्धकनिवृत्तये च नित्यादिकर्माणि कर्तव्यानि।

### उत्तराणि-२

११. काम्यं निषिद्धं नित्यं नैमित्तिकम् प्रायश्चित्तञ्चेति पञ्चविधानि कर्माणि प्रथन्ते।

१२. यः काम्यानि कर्माणि वर्णाश्रमकर्मरूपेण प्राप्तानि चेत् तानि यदि निष्कामभावनया क्रियन्ते तर्हि तानि अपि चित्तशुद्धिकराणि भवन्ति।

१३. चित्तमलस्य नाशाय अर्थात् चित्तस्य शुद्धये नित्यादीनि कर्माणि अष्ठेयानि।

१४. अन्तःकरणस्य घटकद्रव्याणि सत्त्वरजस्तमांसि त्रयो गुणाः सन्ति। तत्रापि सत्त्वरजस्तमोगुणमयाद् अज्ञानाद् सत्त्वगुणस्य प्राधान्येन उत्पन्नमन्तःकरणम्।

१५. विषयासक्तेः कारणं चित्तस्थमलः।

१६. नित्यादिकर्माणि चित्तमलं नाशयन्ति। चित्तैग्रतां न कुर्वन्ति। परन्तु नामजपः चित्तमलमपि नाशयति चित्तैकाग्रतामपि सम्पादयतीति विशेषः।

### उत्तराणि-३

१७. काम्यानि फलाशया कृतानि चेत् तज्जन्यफलभोगाय पुनः देहधारणम् आपपति। मोक्षे च सति पुनः देहधारणादिकं न भवति। एवं मोक्षेण काम्यानां फलस्य विरोधो वर्तते। अतः काम्यानि



त्यज्यन्ते। एवञ्च यत् कृतकं तदनित्यम् इति न्यायात् काम्यफलमनित्यम्। अतोऽपि अनित्यस्य त्यागः क्रियते।

१८. निषिद्धानि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि कर्माणि। वेदेन यानि कर्माणि निषिद्धानि तानि अत्र निषिद्धकर्माणि कथ्यन्ते।

१९. अकरणे प्रत्ययवायसाधनानि नित्यानि सन्ध्यावन्दनादीनि इति उक्तं वेदान्तसारे।

२०. नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि कर्माणि। निमित्तं कारणं यस्यास्ति तत् नैमित्तिकम्।

२१. प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि कर्माणि।

२२. नित्यनैमित्तिकप्रायश्चित्तानां बुद्धिशुद्धिः परम् अर्थात् आवश्यकं प्रयोजनम्।

२३. नित्यनैमित्तिकप्रायश्चित्तोपासनानाम् अवान्तरफलम् अर्थात् गौणं फलं पितृलोकप्राप्तिः सत्यलोकप्राप्तिः।

**उत्तराणि-४**

२४. उपासना द्वेधा – सगुणब्रह्मविषया निर्गुणब्रह्मविषया इति॥

२५. उपासनायाः परं प्रयोजनं चित्तस्य एकाग्रता।

२६. सगुणब्रह्मविषयकानि उपासनद्वयम् उपनिषत्सु श्रूयते– अहङ्ग्रहोपासनम् प्रतीकोपासनं चेति।

२७. उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि इति उपासनालक्षणं वेदान्तसारे।

२८. निर्गुणब्रह्मोपासना

२९. (घ)

३०. कर्मफलसंकल्पो हि चित्तविक्षेपहेतुः।

३१. फलनिरपेक्षः कर्मयोगो ध्यानयोगस्य बहिरङ्गं साधनम्।

॥ इति द्वाविंशः पाठः ॥



# २३

# साधना-३

## प्रस्तावना

अधिकारिविषयसम्बन्धप्रयोजनानि इति चत्वारोऽनुबन्धाः। तेषु अधिकारी गते पाठद्वये उपक्रान्तः न तु उपसंहृतः। अधिकारिणि अनुबन्धे एते पञ्च विषया आलोच्यन्ते-- १)वेदाध्ययनम् २)काम्यनिषिद्धवर्जनम् ३)नित्यनैमित्तिकप्रायश्चित्तानाम् अनुष्ठानम् ४)उपासना ५)साधनचतुष्टम्। एतेषु उपासनां यावत् विषयः पूर्वतनपाठद्वये प्रतिपादितः। साधनचतुष्टम् अवशिष्टम् अस्ति। तदस्मिन् प्रकृते पाठे उपस्थाप्य अवशिष्टाः त्रयोऽनुबन्धाः विषयसम्बन्धप्रयोजनानि वक्ष्यन्ते। ततश्च श्रवणमनननिदिध्यासनानि वक्ष्यन्ते। इत्थम् गतपाठस्य अयं पाठः शेषः अस्ति।



## उद्देश्यानि

पाठस्यास्याध्ययनेन-

- साधनचतुष्टयं ज्ञास्यति।
- विषयसम्बन्धप्रयोजनानि इति अवशिष्टान् अनुबन्धान् अवगच्छेत्।
- अधिकारी कदा गुरुम् उपसर्पति इति निर्धारयेत्।
- श्रवणमनननिदिध्यासनानि बुध्यात्।
- श्रवणेन तात्पर्यग्रहाय आवश्यकानि लिङ्गानि जानीयात्।

## २३.१) साधनचतुष्टयम्

मोक्षे अधिकारं लिप्सुना साधनचतुष्टम् अनुष्ठेयं भवति। तच्च १)नित्यानित्यवस्तुविवेकः २)इहामुत्रार्थभोगविरागः ३)शमदमादिसाधनसम्पत् ४)मुमुक्षुत्वं चेति। अत एतानि साधनानि एकैकशः अधस्तात् प्रस्तूयन्ते।

## २३.२) विवेकः

**नित्यानित्यवस्तुविवेकः अत्र विवेकः**। नित्यं वस्तु अनित्यं वस्तु इति द्विविधं वस्तु विद्यते जगति। तयोः विवेकः विवेचनम्, किं नित्यं वस्तु किम् अनित्यं वस्तु इति विचारपूर्वकज्ञानम् एव नित्यानित्यवस्तुविवेकः। तथाहि वेदान्तसारकार आह -



**नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् इति।**

**सरलार्थः**- ब्रह्म एव नित्यं वस्तु ततः अन्यत् अखिलं सर्वम् आकाशादिप्रपञ्चः अनित्यं वस्तु इति विचारपूर्वकं ज्ञानम्। नित्यं वस्तु किं भवति। यत् कालत्रये एव तिष्ठति तत् नित्यं वस्तु। अतीते काले अपि आसीत्। वर्तमानकाले अपि अस्ति। भविष्यत्काले अपि भविष्यति तत् नित्यं वस्तु। त्रिकालाबाध्यत्वं नित्यत्वम्। तादृशम् एकं ब्रह्म एव विद्यते।




ब्रह्म नित्यं वस्तु इत्यत्र प्रमाणम् - "अजो नित्यः शाश्वतः" (कठोपनिषद् १.२.१८), "सत्यं ज्ञानम् अनन्तं ब्रह्म" (तै.उ. २.१) इत्यादयः श्रुतयः। ब्रह्मभिन्नम् अन्यत् सर्वम् अपि अनित्यम्। तानि पूर्वं नासन्, इदानीं सन्ति, भविष्यत्काले अपि न स्थास्यन्ति। अतः तानि कालत्रये न तिष्ठन्ति। अतः तानि अनित्यवस्तूनि। त्रिकालाबाध्यं वस्तु नित्यम्। नित्यमपि द्विविधं भवति कूटस्थनित्यं प्रवाहिनित्यं च। ब्रह्म तु कूटस्थनित्यम्। ब्रह्मभिन्नानां सर्वेषाम् अनित्यत्वविषये "नेह नानास्ति किञ्चन" (बृ.उ.४.४.१९), 'एकमेवाद्वितीयम्'(छा.उ. ६.२.१), "अथ यदल्पं तन्मर्त्यम्" (छा.उ. ७.२४.१) इत्यादिश्रुतयः प्रमाणभूताः। नित्यवस्तुनः अनित्यवस्तुतः पृथक्करणम् एव नित्यानित्यवस्तुविवेकः।

ननु ब्रह्मैव नित्यम् अन्यद् अखिलम् अनित्यम् इति यद् विवेचनं तद् निश्चयः उत संशयः। यदि निश्चयः तर्हि श्रवणादिसाधनानां वैयर्थ्यं स्यात्। यदि उच्येत यत् संशय इति तर्हि संशयात्मकात् ज्ञानाद् वैराग्योदयो न स्यात्। विवेकः वैराग्यं प्रति कारणमिति सिद्धान्तः। कीदृशं ज्ञानमिदमिति चेदुच्यते- आनुमानिकम्। तथाहि अनुमानम्- इदम् अनित्यम् कृतकत्वाद्। यदनित्यं तस्य किमपि नित्यम् अधिष्ठानं स्यादेव। निरधिष्ठानम् अनित्यं न सम्भवति। एवंरूपेण आलोचनात्मकप्रत्ययविशेष एव विवेकपदवाच्यः। ईदृशविवेकाद् कृतकेभ्य ऐहिकामुष्मिकेभ्यो विरागः नितरां सम्भवति। विवेकचूडामणौ अपि उक्तम् -

**ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः।**
**सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः॥ इति**

**सरलार्थः** - ब्रह्म सत्यं जगत् मिथ्या इत्येवंरूपः यः विनिश्चयः निर्धारणम्, सः अयं नित्यानित्यवस्तुविवेकः समुदाहृतः कथितः उक्तः।

नित्यानित्यवस्तुविवेकः यदा भवति तदा एव द्वितीये इहामुत्रफलभोगविरागे यत्नः फलवान् भवति। एवञ्च विवेकाद् वैराग्यस्य उदयो भवति।

## २३.३) वैराग्यम्

**इहामुत्रफलभोगविरागः** अत्र वैराग्यपदार्थः। इह अस्मिन् लोके अमुत्र स्वर्गलोके कर्मजन्यं यत् फलं प्राप्यते तस्य भोगात् विरक्तिः, आसक्त्याः अभावः एव इहामुत्रफलभोगविरागः। वेदान्तसारे उक्तं -

**ऐहिकानां स्रक्-चन्दनवनितादिविषयभोगानाम् अनित्यत्ववद् आमुष्मिकाणाम् अपि अमृतादिविषयभोगानाम् अनित्यतया तेभ्यो नितरां विरतिः इहामुत्रफलभोगविरागः इति। (वेदान्तसारः)**

**सरलार्थः**- इहलोके भव ऐहिकः। स्रक् चन्दनं वनिता गृहम् इत्यादिविषया इहलोके भवाः। अर्थात् इहलोके एव जायन्ते। अत एते विषया ऐहिकाः। एतेषां विषयाणां भोगेन एव जन्तुः आत्मानं सुखिनं मन्यते। परन्तु ऐहिकवस्तुभ्यः यत् सुखं जायते तत् अनित्यम्। यतो हि विषयाः अनित्याः। अतः ततः जन्यं सुखम् अपि अनित्यम्। एवम् एव आमुष्मिकाणां परलोके लभ्यमानानां स्वर्गादिसुखानाम् अमृतादिविषयभोगानाम् अपि अनित्यत्वम्। तत्र प्रमाणम् -

**तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते।**

**(छा.उ.१.८.१६) इत्यादयः श्रुतयः।**

**सरलार्थः**- कर्मणा चितः पृथिवीलोको भोगेन क्षीयते तथैव पुण्येन चितो लोकः स्वर्गलोकः अपि भोगेन क्षीयते। "**क्षीणे पुण्ये मर्त्यलोकं विशन्ति**" इति गीतावचनम् अपि प्रमाणम्। अतो लौकिकं सुखं तथा स्वर्गसुखम् उभयम् अपि अनित्यम्। अतः तेभ्यो नितरां विरतिः अत्यन्ततया विमुखता एव इहामुत्रफलभोगविरागः। विवेकचूडामणौ अपि उक्तम् -

**तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः।**
**देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तुनि॥ (वि.चू.२१)**

**सरलार्थः**- स्वदेहात् आरभ्य ब्रह्मलोकपर्यन्ते भोग्यवस्तुनि दर्शनेन श्रवणेन वा या जुगुप्सा घृणा तत् एव वैराग्यम्। अर्थात् मनुष्यशरीरम् अनित्यम् इति सर्वे एव जानन्ति। अत्यन्तविशिष्टकर्मज्ञानसाध्यो दुष्प्रापो ब्रह्मलोकः। एवम् विशिष्टपुण्यकर्मणा पुरुषो ब्रह्मलोकं प्राप्नोति। यद्यपि तत्र निवासो दीर्घकालपर्यन्तं भवति तथापि स लोको न नित्यः। ब्रह्मलोके प्राप्तस्य सुखस्य अवसानं भवति एव। तथाहि स्मृतिः-

**आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥ (गीता ८.१६)**



**सरलार्थः**- आ ब्रह्मभुवनात् भवन्ति अस्मिन् भूतानि इति भुवनं, ब्रह्मणो भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः। आ ब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावा हे अर्जुन। माम् एकम् उपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिः न विद्यते॥

कानिचन वस्तूनि अनित्यानि इति दृष्ट्वा एव ज्ञायते। अपि च कानिचन वस्तूनि अनित्यानि इति आप्तजनेभ्यः श्रुत्वा ज्ञायन्ते। उभयप्रकारेण भोग्यवस्तुनः अनित्यत्वस्य ज्ञानात् तस्मिन् अनित्ये या जुगुप्सा घृणा तत् एव वैराग्यम् इति उच्यते।

भोग्यविषयः द्विविधः। दृष्टः आनुश्रविकश्च। दृष्टः ऐहिकः अर्थात् अस्मिन् मृत्युलोके उपलभ्यमानः। आनुश्रविकश्च श्रुतिप्रमाणाद् ज्ञातः, पारलौकिकः, आमुष्मिकः, वेदादिविहितकर्मणा लभ्यः। तेषां विषयाणां भोगेच्छायाः अभावः वैराग्यम्।



## पाठगतप्रश्नाः १

१. वेदान्ते अधिकारिणो विवेकः कः।

२. वेदान्ते अधिकारिणो वैराग्यं किम्।

३. स्वर्गफलं नित्यमनित्यं वेति सप्रमाणं वदत।

## २३.४) शमादिषट्कसम्पत्तिः

शमः दमः उपरतिः तितिक्षा श्रद्धा समाधानम् इति एतत् शमादिषट्कम्। साधनचतुष्टयमध्ये इदं तृतीयं साधनम्। इतः पूर्वं विवेकः वैराग्यम् इति साधनद्वयं वर्णितम्। अधुना शमादयः क्रमशः उपस्थाप्यन्ते।

सम्पत्तिः का। अनुरूपः आत्मभावः सम्पत्तिः। अनुरूपः योग्यः। आत्मभावः आत्मनः स्वस्य भावः। यथा कश्चित् क्षत्रियकुलोत्पन्नः जनः युद्धादिभ्यः प्रायः बिभेति। तर्हि तस्मिन् पर्याप्तः क्षत्रियत्वभावः नास्ति। यद्यपि किञ्चिदस्ति, तथापि यावत् परिमाणं सामान्यतः क्षत्रिये अभिप्रेतं तावन्नास्ति। अर्थात् तस्मिन् क्षत्रियत्वस्य सम्पत्तिः नास्ति इति कथ्यते। इत्थम् क्षत्रिय इति पदप्रयोगाय तस्मिन् जने पर्याप्तं क्षत्रियत्वम् आवश्यकम्। अन्यथा स क्षत्रियपदवाच्यो न भवति। इत्थं क्षत्रिय इति पदं न तत्र प्रवर्तते। अर्थात् तस्मिन् जने क्षत्रियपदस्य प्रवृत्तिनिमित्तं नास्ति।

अत्र प्रकरणे शमादिषट्कस्य सम्पत्तिः अभीष्टा। अर्थात् शमादीनाम् अनुष्ठानेन गुणा आसादनीयाः सन्ति। तेषां च विशिष्टा मात्रा अभीष्टा। तावती मात्रा अस्ति चेत् मोक्षाय अलम्। तदा तथा मात्रा एव सम्पत्तिः वक्तुं शक्यते।

## २३.४.१) शमः

"**शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः**" इति उक्तं वेदान्तसारे। वस्तुतः मनसः निग्रहः एव शमः। वेदान्ततत्त्वस्य श्रवण-मनन-निदिध्यासनेन एव तत्त्वज्ञानं जायते। येन वृत्तिविशेषेण आत्मविषयकश्रवणादिभिन्नविषयेभ्यः बलात् मनसः निग्रहः भवति सः शमः। यदि सम्पूर्णतया मनोनिग्रहः स्यात् तर्हि वेदान्तश्रवणमपि न स्यात्। अत उक्तं श्रवणादिव्यतिरिक्तविषयेभ्यः इति। श्रवणादिविषयान् विहाय अन्येभ्यः मनोनिग्रहः कर्तव्य इति फलितार्थः। जीवस्य चित्तम् अतिशयचपलम्। एकस्मिन् विषये दीर्घकालं यावत् न तिष्ठति। बुभुक्षोः भोजनं प्रति यथा अभिरुचिः भवति तथा एव वैराग्ययुक्तस्य पुरुषस्य मनः तत्त्वज्ञाने अभिरुचिसम्पन्नं सत् अपि पूर्वसंस्कारवशात् विक्षिप्तं भवति। तस्यां दशायां येन वृत्तिविशेषेण पार्थिवं सुखम् अनित्यं परिणामे च दुःखजनकम् इति विविच्य बलपूर्वकं विषयेभ्य आकर्षति स वृत्तिविशेषः शमः। विवेकचूडामणौ अपि उक्तम् -

**विरज्य विषयव्राताद् दोषदृष्ट्या मुहुर्मुहुः।**

**स्वलक्ष्ये नियतावस्था मनसः शम उच्यते॥** (वि.चू.२२)

**सरलार्थः**- मुहुर्मुहुः प्रतिक्षणं दोषदृष्ट्या दोषदर्शनेन विषयव्रातात् विषयसमूहात् विरज्य वैराग्यप्राप्त्या मनसः स्वलक्ष्ये ब्रह्मतत्त्वज्ञाने नियतावस्था निश्चलरूपेण अवस्थानं शमः उच्यते कथितो भवति।

## २३.४.२) दमः

"**दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्**" इति वेदान्तसारे उक्तम्। बाह्येन्द्रियाणां चक्षुः-कर्ण-नासिका-जिह्वा-त्वचां तद्विषयेभ्यः आकर्षणम्। चक्षुषः रूपात्, कर्णस्य शब्दात्, नासिकायाः गन्धात्, जिह्वायाः रसात्, त्वचः स्पर्शात् आकर्षणं येन वृत्तिविशेषेण क्रियते स दमः। वस्तुतः दमः हि बाह्येन्द्रियाणां निग्रहः। यदि सम्पूर्णतया इन्द्रियाणि निवृत्तानि तर्हि वेदान्तश्रवणमपि न स्यात्। अत उक्तं तद्व्यतिरक्तविषयेभ्यो निवर्तनम् इति। अर्थात् श्रवणादिव्यतिरिक्तविषयेभ्यः इति। श्रवणादिविषयान् विहाय अन्येभ्यः इन्द्रियाणां निवर्तनं कर्तव्यम् इति फलितार्थः।

आदौ अन्तरिन्द्रियस्य निग्रहः कर्तव्यः। ततः बाह्येन्द्रियाणां निग्रहः। तस्मात् आदौ शमस्य निर्देशः। ततः परं दमस्य निर्देशः। यदि मनः वशीभूतं भवति तर्हि चक्षुरादीनां निग्रहः शक्यसम्भवः। मनसः सङ्कल्पवशात् एव चक्षुरादयः रूपादीन् विषयान् प्रति धावन्ति। तद्यथा कोऽपि पुरुषः कस्मिंश्चित् विषये मनसः नियोगं करोति तदा तस्य सम्मुखे सुरूपं तिष्ठति चेदपि न पश्यति, सुगीतं भवति चेदपि न शृणोति। अतः मनसः निग्रहः भवति चेत् बहिरिन्द्रियाणां स्वतः निग्रहः भवति। परन्तु संस्कारवशात् विक्षिप्तं भवति। तस्मात् यत्नः कर्तव्यः। विवेकचूडामणौ दमविषये उक्तम् -

**विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके।**

**उभयेषामिन्द्रियाणां स दमः परिकीर्तितः॥ इति** (२३)



**सरलार्थः**- उभयेषाम् इन्द्रियाणां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च विषयेभ्यः स्वस्वविषयेभ्यः परावर्त्य विमुखीकृत्य स्वस्वगोलके स्वस्वस्थाने स्थापनं स्थिरीकृत्य निश्चलरूपेण रक्षणं, सः दमः परिकीर्तितः कथितः।

शमदमवान् पुरुषः एव स्थितप्रज्ञः इति भगवान् श्रीकृष्णः अपि गीतायाम् उक्तवान् -

**यदा संहरते चायं कुर्मोऽङ्गानीव सर्वशः।**

**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥ इति** (२.५८)

**सरलार्थः**- यदा अयं कुर्मः अङ्गानि इव सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तस्य प्रज्ञा प्रतिष्ठिता भवति इति अन्वयः। अर्थात् इन्द्रियाणि सर्वदा अपि शब्दादिषु विषयेषु प्रवृत्तानि भवन्ति। कूर्मः यथा भयात् स्वानि अङ्गानि संकोचयति तथा यदा अयं ज्ञाननिष्ठायां प्रवृत्तः जनः सर्वाणि इन्द्रियाणि शब्दादिभ्यः संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवति। स च स्थितप्रज्ञः भवति।

## २३.४.३) उपरतिः

वेदान्तसारे उपरतेः लक्षणद्वयम् उक्तम् - "**निवर्तितानाम् एतेषां तद्व्यतिरिक्तविषयेभ्यः उपरमणम् उपरतिः**" अथवा "**विहितानां कर्मणां विधिना परित्यागः**" इति।

मनसः तथा बहिरिन्द्रियाणां निग्रहेण एव तत्त्वज्ञानस्य मार्ग उन्मुक्तो न भवति। पूर्वतनवासनावशात् तानि पुनः चञ्चलानि भवन्ति। अतः निवर्तितानाम् बाह्येन्द्रियाणाम् मनसः च श्रवणादिव्यतिरिक्तविषयेभ्यः पुनः पुनः दोषदर्शनेन उपरमणम् निवृत्तिः एव उपरतिः।

उपरतेः अपरोऽप्यर्थः शास्त्रकृद्भिः प्रतिपाद्यते। शास्त्रविहितानां नित्यनैमित्तिकप्रायश्चित्तानां विधिपूर्वकं परित्यागः एव उपरतिः इति द्वितीयोऽर्थः। विवेकचूडामणौ उक्तम् - "**बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा**" इति। वृत्तेः मनसः विषयप्रकाशकशक्तेः, बाह्यानालम्बनं बाह्यानात्मवस्त्वाकारेण परिणामाभावः एव उत्तमा उपरतिः।

## २३.४.४) तितिक्षा

"**तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता**" इति उक्तम्। अर्थात् शीतोष्णप्रभृति-परस्परविरुद्धानां द्वन्द्वानां तथा ततः उत्पन्नसुखदुःखादीनां सहनम्। सर्वे जीवाः सुखेन आनन्दम् अनुभवन्ति। आनन्देन प्रमादः न भवति। परन्तु दुःखस्य सहनं सर्वे कर्तुं न शक्नुवन्ति। अतः दुःखकारणात् प्रमादं कुर्वन्ति बहवः। परन्तु यः तितिक्षाम् अभ्यस्यति तस्य समीपे सुखं दुःखम् उभयम् अपि समानम्। सः सुखेन अत्यधिकम् आनन्दम् न अनुभवति, दुःखेन अपि दुःखितः न भवति। अतः सः अप्रमादः धैर्यवान् भूत्वा साधनातः अविचलितः न भवति। विवेकचूडामणौ उक्तम् -

**सहनं सर्वदुःखानामप्रतीकारपूर्वकम्।**

**चिन्ताविलापरहितं सा तितिक्षा निगद्यते॥** (वि.चू.)



**सरलार्थः-** सर्वदुःखानां सर्वविधदुःखानां चिन्ताविलापरहितं चिन्तां विलापं च त्यक्त्वा अप्रतीकारपूर्वकम् प्रतीकारम् अकृत्वा सहनं स्वीकारः एव तितिक्षा निगद्यते उच्यते इत्यर्थः।

वस्तुतः शमदमोपरतिभ्यः बहिर्विषयेभ्यः निवृत्तिः भवति। तितिक्षायां तु अन्तर्विषयेभ्यः चित्तस्य निवर्तनं भवति इति एतावान् भेदः।

शमादीनां बोधाय उदाहरणमेकं प्रस्तूयते। तद्यथा कश्चिद् चञ्चलो बालः इतस्ततः धावति। स अपरत्र गतश्चेत् तम् माता स्वसमीपम् आनयति। पुनः स अन्यत्र धावति, गच्छति च। तदा पुनः माता तम् गृहीत्वा स्वसमीपम् आनयति। इत्थम् गतस्य शिशोः आनयनम् दमनम् दमः वा कथयितुम् शक्यते।

ततश्च यदा स बालः गमनाय उद्युक्तः तदा एव माता तं गमनाद् वारयति। किञ्च दूरगमनं विपज्जनकम् इत्यादि बोधयति। मातुः तादृशवचनात् वारं वारं निग्रहाच्च स शिशुः स्वस्थानाद् अन्यत्र न गच्छति। परन्तु तत्र गमनाय उद्युक्तश्चेत् माता सदा बोधयति। एवञ्च एतावता गमनसम्भावनापि वर्तते। एवं सति गमनाद् विरतिः शमः इति कथयितुं शक्यते।

बालो गतश्चेद् आनीतः। ततः गमनाद् वारितः। अधुना माता बालं तथा बोधयति येन बालस्य गमनसम्भावना एव नास्ति। गमनप्रवृत्तिरेव अपाकृता। यदर्थं गच्छति गन्तुमिच्छति तत्र अधुना बालो न रमते। इत्थमियम् उपरतिः इति वक्तुं शक्यते।

यदा बाले अनुकूलाः प्रतिकूला वा आघाता भवन्ति तदापि स न विचलितो भवति। इयं तस्य तितिक्षा।

एवं चित्तस्य विविधाः अवस्थाः वृत्तिविशेषाः शमदमोपरतितितिक्षाशब्दैः उच्यन्ते।

## २३.४.५) श्रद्धा

केवलेन श्रवणादिना तत्त्वसाक्षात्कारः न भवति। श्रवणादिकं श्रद्धापूर्वकं कर्तव्यम् एव। श्रद्धा का इति चेदुच्यते - "**गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा**"इति। गुरुवचनेषु तथा गुरूपदिष्टशास्त्रवचनेषु दृढतरविश्वासः एव श्रद्धा। आत्मतत्त्वजिज्ञासोः श्रद्धा एव मेरुदण्डः। श्रद्धा नास्ति चेत् शतशः उपदेशे अपि अर्थस्य अवधारणं न भविष्यति। अतः आत्मजिज्ञासोः श्रद्धायाः अवलम्बनम् अनिवार्यम्। विवेकचूडामणौ उक्तम् -

**शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम्।**

**सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते॥** (वि.चू.)

गुरुवाक्यस्य गुरुणा उपदिष्टस्य वाक्यस्य, तथा शास्त्रवाक्यस्य वेदान्तवाक्यस्य, सत्यबुद्ध्यवधारणं सत्यतया ग्रहणं, यया येन निश्चयेन वस्तूपलभ्यते आत्मनः उपलब्धिः भवति सा श्रद्धा कथिता सर्वैः उक्ता।

श्रद्धाविश्वासयोः को भेदः। दृढतरविश्वास एव श्रद्धा। यथा कश्चित् कञ्चित् तृषार्तमाह- समीपे कूपोऽस्ति। जलं चास्ति तस्मिन्। कृते प्रयत्ने लभेत इति। श्रुत्वा यदि कूपं प्रति गच्छेत् तर्हि तस्य अयं विश्वासः श्रद्धा कथितुम् शक्यते। यथा विश्वासः तथा प्रवृत्तिः चेत् स विश्वासः श्रद्धा। विश्वासे श्रद्धायां



वा विषयस्य प्रत्यक्षानुभवः नास्ति। अनुमानेन शब्दप्रमाणेन वा ज्ञातम्। यथा स्वर्गकामो यजेत इति वेदवाक्याद् ज्ञातं यत् स्वर्गादिसुखं लिप्सुः चेत् यागं कुर्यात्। तत्र यः यागं करोति तस्य वेदे श्रद्धा अस्ति। यश्च केवलं वेदप्रामाण्यं स्वीकरोति परन्तु वेदोक्तप्रकारेण नाचरति तस्य वेदे विश्वासः अस्ति, श्रद्धा नास्ति। अत इदं वक्तुं शक्यते यत् प्रवृत्तिजनको विश्वासः श्रद्धा भवति।

### २३.४.६) समाधानम्

“**निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्।**” अर्थात् विषयेभ्यः प्रत्याहृतस्य चित्तस्य आत्मनः विषये श्रवण-मनन-निदिध्यासने तथा तस्य अनुगुणविषये गुरुशुश्रूषादौ अवस्थानम् एव समाधानम्। अस्याम् दशायाम् एवं किमपि न कर्तव्यं येन समाधाननाशः स्यात्। विवेकचूडामणौ उक्तम् -

**सम्यगास्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वथा।**

**तत्समाधानमित्युक्तं न तु चित्तस्य लालनम्॥** (वि.चू.)

शुद्धे निर्गुणे ब्रह्मणि ब्रह्मविषयकतत्त्वज्ञाने बुद्धेः चित्तस्य सम्यक् यथार्थतया स्थापनं स्थिरीकरणम् एव समाधानम् इत्युक्तम्। तु किन्तु चित्तस्य लालनम् कौतुहलात् वेदान्ततत्त्वस्य आलोचनेन मनसः तृप्तिलाभः न समाधानम् इत्यर्थः।

अत्र यत् समाधानम् उच्यते तत् चित्तवृत्तिनिरोधरूपं नास्ति। यदि अत्रैव चित्तवृत्तिनिरोधः स्यात् तर्हि साधनचतुष्टयसम्पन्नः गुरुसमीपं न गच्छेत्। श्रवणादिमपि न कुर्यात्। निरोधे सति कुत एतद् उपपद्येत। अतः वेदान्तस्य श्रवणादौ तदनुकूलविषयाणां सदा चिन्तनमेव अत्र समाधानम्।

## २३.५) मुमुक्षुत्वम्

मोक्तुम् इच्छति इति मुमुक्षुः। तस्य भावो मुमुक्षुत्वम्। मुमुक्षुत्वं मोक्षेच्छा। मुमुक्षाया उदयात् मोक्षोपायस्य जिज्ञासा सुतारम् उदेति। ततो ब्रह्म जिज्ञासति। ब्रह्मजिज्ञासा कस्य भवति। न हि संसारविषयात् साध्यसाधनादिभेदलक्षणाद् अविरक्तस्य आत्मैकत्वज्ञानविषये अधिकारः, अतृषितस्य इव पाने।

मुमुक्षुत्वस्य अर्थस्तावत् मोक्षे इच्छा। आत्मज्ञानप्राप्तये एतत् एव प्रधानं साधनम्। यदि पुरुषस्य मोक्षप्राप्तये इच्छा न भवति तर्हि मोक्षोपायस्य अन्वेषणं न करोति। तस्मात् आत्मदर्शनम् अपि न करोति। तेन आत्मदर्शनं मोक्षस्य मार्गः, वेदान्ततत्त्व-श्रवण-मनन-निदिध्यासनम् आत्मदर्शने कारणम् इति बोद्धुं न शक्नोति। अतः वेदान्ते तस्य प्रवृत्तिः एव न स्यात्। तेन वेदान्तैकवेद्यस्य आत्मनः ज्ञानम् अपि तस्य न भवति। अतः अधिकारिणः मोक्षेच्छा अवश्यं स्यात्। विवेकचूडामणौ शङ्कराचार्येण उक्तम् -

**अहंकारादिदेहान्तान् बन्धानज्ञानकल्पितान्।**

**स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता॥** (वि.चू.)



**सरलार्थः-** अहंकारादिदेहान्तान् सूक्ष्मात् अहंकारात् आरभ्य स्थूलदेहपर्यन्तम्, अज्ञानकल्पितान् अज्ञानात् उत्पन्नान् बन्धान् बन्धसहमूहान् स्वस्वरूपावबोधेन आत्मज्ञानेन मोक्तुम् इच्छा एव मुमुक्षुता इति।

**साधनचतुष्टये कार्यकारणभावः।**

एवं साधनचतुष्टयं निरूपितम्। यावत् नित्यानित्यवस्तुविवेकः न भवति तावत् अनित्ये वस्तुनि वैराग्यं न उत्पद्यते। वैराग्यं विना शमादीनाम् अपि प्रतिष्ठा न सम्भवति। शमादीनाम् अभावे मोक्षविषयिणी इच्छा एव न सम्भवति। मोक्षे इच्छां विना ब्रह्मजिज्ञासा अपि न स्यात्। तस्मात् आदौ नित्यानित्यवस्तुविवेकः ततः इहामुत्रफलभोगविरागः ततः शमादिषट्कसम्पत्तिः ततः मुमुक्षुत्त्वम् इति क्रमेण तेषामुल्लेखः।



## पाठगतप्रश्नाः २

४. शमादिषट्कसम्पत्तौ शमादिषट्कं किम्।

५. शमादिषट्कसम्पत्तौ सम्पत्तिपदस्य कोऽर्थः।

६. शमः कः कथ्यते। कस्य शमः क्रियते।

७. दमः कः कथ्यते। किं दमनीयम्।

८. उपरतिः का। कुतः उपरतिः।

९. तितिक्षा का। तितिक्षाविषयः कः।

१०. श्रद्धापदस्य कोऽर्थः। श्रद्धाविषयः कः।

११. समाधानं किम्। कस्मिन् समाधानम्।

१२. का मुमुक्षा। कुतो मुमुक्षा।

## २३.६) विषयः

अनुबन्धेषु अधिकारी कः इति एतावता उक्तम्। द्वितीयः अनुबन्धस्तावद् विषयः। सोऽधुनात्रोपस्थाप्यते।

शास्त्रजप्रमानिवर्त्याज्ञानगोचरः विषयः कथ्यते। अर्थात्- प्रस्तुतशास्त्रस्य पठनेन काचित् प्रमा जायेत सा शास्त्रजप्रमा। तया प्रमया निवर्त्यं दूरीकर्तव्यं किमपि अज्ञानं स्यात्। तस्य अज्ञानस्य कश्चिद् विषयो भवति। स एव विषयः अनुबन्धेषु अन्यतमः विषयः भवति। यं विषयं ज्ञातुं शास्त्रं पठति स विषय एव अनुबन्धः। शास्त्राध्ययने अनुबन्धत्वेन कः विषयः उक्तः अस्ति इति स्पष्टं ज्ञानम् आवश्यकम्। यतो हि ग्रन्थे नैके विषया उच्यन्ते। समग्रं ग्रन्थं पठित्वा सारभूतं किं ग्राह्यम्, लेखकः किं ग्राहयितुम् ग्रन्थं



प्रणीतवान् इति स्पष्टता यदि अस्ति तर्हि तात्पर्यग्रहणे भ्रमो न भवति। अन्यथा लेखकेन अभीष्टं त्यक्त्वा अन्यदेव गृह्णीयात् पाठकः।

वेदान्तस्य विषयो भवति- **जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयम्।** कुतः इदमेव भवति विषयः। यतो हि तत्रैव वेदान्तानां तात्पर्यमस्ति। किमत्र प्रमाणं यत् तत्रैव वेदान्तानां तात्पर्यमिति। तत्र प्रमाणं श्रुतिः। तथाहि उपनिषद्वाक्यानि- अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि, प्रज्ञानं ब्रह्म इत्यादीनि। एतैः वाक्यैः जीवब्रह्मणोः ऐक्यम् एव प्रतिपाद्यते।

वेदान्तवाक्यैः जीवब्रह्मणोः कीदृशम् ऐक्यं विवक्षितम्। नीरक्षीरवत् गौणं वा घटाकाशपटाकाशवत् मुख्यं वा। नीरं क्षीरम् उभयं भिन्नम्। परन्तु तयोः मिश्रणे कृते जलदुग्धयोः साधारणतया पृथक्करणं न सम्भवति। तयोः ऐक्यम् अनुभूयते। वेदान्तवाक्यैः एतादृशम् ऐक्यं विवक्षितं वा। उच्यते "शुद्धचैतन्यम्" इति। अर्थात् ऐक्यशब्देन अत्र नीरक्षीरवत् गौणम् ऐक्यं न विवक्षितम्। अत्र ऐक्यशब्दार्थः अभेदः इति। घटमध्यवर्ती आकाशः महाकाशस्य एव अंशः। परन्तु घटरूपावरणवशात् पृथक् इति अनुभूयते। यथा घटमध्यवर्ती आकाशः घटस्य नाशे जाते महाकाशेन सह मिलितः भवति, द्वयोः औपाधिकः भेदः निवर्तते, द्वयोः ऐक्यं भवति। तथैव अज्ञाननाशे जाते जीवचैतन्यं शुद्धचैतन्यरूपेण ब्रह्मचैतन्येन सह एकात्मभावं प्राप्नोति। एतादृशं मुख्यम् ऐक्यम् एव वेदान्तस्य प्रतिपाद्यम्। आत्मोपनिषदि आम्नातं -

**घटे नष्टे यथा व्योम व्योमैव भवति स्वयम्।**
**तथोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम्॥** (१/२२)

**अर्थात्** - घटे नष्टे घटस्य नाशः भवति चेत् यथा व्योम घटमध्यवर्ती आकाशः व्योमैव स्वयं भवति, स्वयम् एव महाकाशः भवति, तथा उपाधिविलये आवरणनाशे अज्ञाननाशे जाते ब्रह्मवित् जीवात्मा ब्रह्मैव परं ब्रह्म एव स्वयं भवति।

वस्तुतः जीवब्रह्मणोः अभेदः एव विद्यते। तत्र या भेदप्रतीतिः सा अज्ञानमूला। एतादृशम् अज्ञानं तावत् तिष्ठति यावत् स्वरूपज्ञानं भवति। अतः अज्ञानं नाशयित्वा जीवब्रह्मणोः शुद्धचैतन्यरूपस्वरूपप्रतिपादनाय एव एतादृशः विषयः स्वीकृतः।

## २३.७) सम्बन्धः

अनुबन्धेषु अधिकारी विषयः च इति एतावता उक्तौ। तृतीयः अनुबन्धस्तावद् सम्बन्धः। सोऽधुनात्रोपस्थाप्यते।

सम्बन्धः द्विष्ठो भवति। चतुर्षु अनुबन्धेषु परस्परं के सम्बन्धाः इति अत्र द्रष्टव्यम्।

बोध्यबोधकभावसम्बन्धः- ग्रन्थो बोधकः। विषयो बोध्यः। अतः ग्रन्थविषययोः बोध्यबोधकभावसम्बन्धः भवति। विषयः प्रमेयः। बोधकं च प्रमाणम्। अतः प्रमेयप्रमाणयोः सम्बन्धः बोध्यबोधकभावसम्बन्धः।

प्रमेयं जीवब्रह्मणोः ऐक्यम्, अभेदः। तत्प्रतिपादकम् प्रमाणम् उपनिषदादि। ग्रन्थेन सह विषयस्य सर्वदा बोद्ध्यबोधकभावः एव सम्बन्धः भवति। शास्त्रं ग्रन्थः वा बोधकम्, विषयश्च बोध्यः। अतः विषयेण



सह शास्त्रस्य बोद्ध्यबोधकभावसम्बन्धः। बोद्ध्यशब्दार्थः बोधस्य विषयः, बोधकशब्दार्थः बोधस्य जनकः अर्थात् यः बोधं जनयति। शास्त्रात् ग्रन्थात् वा उत्पन्नस्य बोधस्य विषयः भवति ग्रन्थप्रतिपाद्यविषयः। अतः स बोध्यः इति उच्यते। शास्त्रं विषयबोधस्य जनकम्। अतः तद् बोधकम् इति उच्यते। एतादृशस्य एव सम्बन्धस्य ज्ञानं भवति चेत् विषयं जिज्ञासुः तस्य बोधके शास्त्रे प्रवर्तते। शास्त्राध्ययनं च करोति।

## २३.८) प्रयोजनम्

अनुबन्धेषु अधिकारी विषयः सम्बन्धश्च इति एतावता उक्ताः। चतुर्थः अनुबन्धस्तावद् प्रयोजनम्। तदधुनात्रोपस्थाप्यते।

**"प्रयोजनम् अनुद्दिश्य न मन्दोऽपि प्रवर्तते"।**

प्रयोजनम् अज्ञात्वा मन्दबुद्धिः जनः अपि कस्मिन्नपि कार्ये प्रवृत्तः न भवति, तर्हि मतिमतां का कथा। ते तु अवश्यम् एव प्रवृत्ता न भविष्यन्ति प्रयोजनज्ञानाभावे।

"यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्"(१.१.२४) इति गौतमीयं सूत्रम् अपि कथयति यत् यद् वस्तु अधिकृत्य अर्थात् यस्य वस्तुनः प्राप्तये पुरुषः कस्मिन्नपि कार्ये प्रवृत्तः भवति, तद् वस्तु एव प्रयोजनम्। कुमारिलभट्टः अपि आह -

**सर्वस्यैव तु शास्त्रस्य कर्मणो वापि कस्यचित्।**

**यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते॥**

अतः शास्त्रादौ ग्रन्थादौ वा शास्त्रस्य ग्रन्थस्य वा प्रयोजनम् उक्तं भवति। तस्मात् अनुबन्धचतुष्टये प्रयोजनस्य अन्तर्भावः।

वेदान्तशास्त्रस्य प्रयोजनम् हि **जीवब्रह्मैक्यरूपप्रमेयविषयकस्य अज्ञानस्य निवृत्तिः स्वस्वरूपानन्दावाप्तिश्च** इति। तदेव प्रकारान्तरेण कथ्यते - आत्यन्तिकी संसारनिवृत्तिः ब्रह्मप्राप्तिलक्षणा।

जीवब्रह्मणोः ऐक्यस्य प्रतिपादनमेव वेदान्तस्य मुख्यो विषयः। ऐक्यज्ञानेन मोक्षः सिध्यति। संसारस्य आत्यन्तिकनिवृत्तिः भवति।

जीवब्रह्मैक्यप्रमेयगताज्ञाननिवृत्तिः ब्रह्मणा सह आत्मन ऐक्यविषयकाज्ञानस्य निवृत्तिः तथा स्वस्वरूपानन्दावाप्तिश्च, स्वरूपज्ञाने य आनन्दः तस्य प्राप्तिः। ऐक्यगताज्ञाननिवृत्तिः भवति चेत् एव स्वस्वरूपानन्दप्राप्तिः भवति।



## पाठगतप्रश्नाः ३

१३. वेदान्तस्य विषयः कः। स एव विषयः कुतः।



१४. वेदान्तस्य अनुबन्धेषु सम्बन्धः कः। सम्बन्धः कयोः।

१५. वेदान्तस्य प्रयोजनं किम्। कथमिदं प्रयोजनं सिद्ध्यति।

१६. अयमनुबन्धेषु अन्यतमः।

(क) शमः (ख) विवेकः (ग) प्रयोजनम् (घ) वैराग्यम्

१७. अयमनुबन्धेषु अन्यतमः।

(क) शमः (ख) विवेकः (ग) विषयः (घ) वैराग्यम्।

१८. अयमनुबन्धेषु अन्यतमः।

(क) शमः (ख) विवेकः (ग) अधिकारी (घ) वैराग्यम्

१९. अयमनुबन्धेषु अन्यतमः।

(क) शमः (ख) विवेकः (ग) सम्बन्धः (घ) वैराग्यम्

२०. अयमनुबन्धेषु अन्यतमः नास्ति।

(क) शमः (ख) विषयः (ग) प्रयोजनम् (घ) अधिकारी

२१. अयमनुबन्धेषु अन्यतमः नास्ति।

(क) दमः (ख) विवेकः (ग) प्रयोजनम् (घ) वैराग्यम्

२२. अयमनुबन्धेषु अन्यतमः नास्ति।

(क) मुमुक्षुत्वम् (ख) विवेकः (ग) प्रयोजनम् (घ) वैराग्यम्

२३. अयं साधनचतुष्टये अन्यतमः।

(क) शमः (ख) विवेकः (ग) प्रयोजनम् (घ) श्रद्धा

२४. अयं साधनचतुष्टये अन्यतमः।

(क) विषयः (ख) विवेकः (ग) प्रयोजनम् (घ) अधिकारी

२५. शमादिषट्कसम्पत्तौ इदं नान्तर्भवति।

(क) उपरतिः (ख) तितिक्षता (ग) मुमुक्षुत्वम् (घ) श्रद्धा

२६. शमादिषट्कसम्पत्तौ इदं नान्तर्भवति।

(क) उपरतिः (ख) तितिक्षता (ग) वैराग्यम् (घ) श्रद्धा

२७. शमादिषट्कसम्पत्तौ इदं नान्तर्भवति।

(क) उपरतिः (ख) तितिक्षता (ग) सम्बन्धः (घ) श्रद्धा

२८. विषयेभ्यो मनसो निग्रहः किमुच्यते।

(क) शमः (ख) दमः (ग) उपरतिः (घ) वैराग्यम्

२९. विषयेभ्यो बाह्येन्द्रियाणां निग्रहः किमुच्यते।

(क) शमः (ख) दमः (ग) उपरतिः (घ) वैराग्यम्

३०. विषयेभ्यो निवर्तितानाम् इन्द्रियाणां मनसः च श्रवणादौ एकाग्रता किमुच्यते।

(क) शमः (ख) दमः (ग) उपरतिः (घ) वैराग्यम्



३१. शीतोष्णादिद्वन्द्वसहनं किमुच्यते।

(क) तितिक्षा (ख) दमः (ग) उपरतिः (घ) वैराग्यम्

३२. वेदान्तानां कुत्र तात्पर्यम्।

(क) कर्मणि (ख) ब्रह्मणि (ग) स्वर्गे (घ) देहधारणे

## २३.९) गुरूपसदनम्

इतः पूर्वम् अस्मिन् पाठे अनुबन्धा आलोचिताः। तेषु अधिकारी अन्यतमः। स च उक्तलक्षणलक्षितः अधिकारी जननमरणात्मकं चक्रं परीक्ष्य तद्गतव्याध्यादिकं च विचिन्त्य संसारानलसन्तप्तः गुरुम् उपसर्पति। तद्यथा सूर्यातपेन दग्धमस्तको दाहनिवृत्तिकामः शीतलं जलराशिम् अनुसरति तथा संसारतापत्रयदन्दह्यमानः तापनिवृत्तिकामः स्वस्वरूपं जिज्ञासुः संसारनिवर्तकं श्रौत्रियं ब्रह्मनिष्ठं करतलामलकवत् स्वप्रकाशात्मस्वरूपसमर्पकं गुरुम् उपसर्पति। गत्वा च तम् मनोवाक्कायकर्मभिः सेवते। तदा तथा उपस्थिते शिष्याय गुरुः उपदिशति परकरुणया-

**तस्मै स विद्वानुपसन्नाय सम्यक्**

**प्रशान्तचित्ताय शमान्विताय।**

**येनाक्षरं पुरुषं वेद सत्यं**

**प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥** (मु.१.२.१३)

**सरलार्थः**- तस्मै सः विद्वान् गुरुः ब्रह्मवित् , उपसन्नाय उपगताय। सम्यक् यथाशास्त्रमित्येतत्। प्रशान्तचित्ताय उपरतदर्पादिदोषाय। शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय, सर्वतो विरक्तायेत्येतत्। येन विज्ञानेन यया विद्यया च परया अक्षरम् पुरुषशब्दवाच्यं पूर्णत्वात्पुरि शयनाच्च, सत्यं तदेव परमार्थस्वाभाव्याद् अव्ययम् , अक्षरं चाक्षरणाद् अक्षतत्वाद् अक्षयत्वाच्च, वेद विजानाति तां ब्रह्मविद्यां तत्त्वतः यथावत् प्रोवाच प्रब्रूयादित्यर्थः। आचार्यस्य अपि अयमेव नियमो यद् न्यायप्राप्तसच्छिष्यनिस्तारणम् अविद्यामहोदधेः।

**शान्तो दान्त उपरतिस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्यति।** (बृ.उ. ४.४.२३)

**सरलार्थः**- शान्तः बाह्येन्द्रियव्यापारत उपशान्तः, तथा दान्तः अन्तःकरणतृष्णातो निवृत्तः, उपरतः सर्वैषणाविनिर्मुक्तः सन्न्यासी, तितिक्षुः द्वन्द्वसहिष्णुः, समाहितः इन्द्रियान्तःकरणचलनरूपाद् व्यावृत्त्या एकाग्रतारूपेण समाहितो भूत्वा सर्वं समस्तम् आत्मानमेव पश्यति, नान्यत् आत्मव्यतिरिक्तं बालाग्रमात्रम् अप्यस्तीत्येवं पश्यति। शान्तः इति पदेन शमः उक्तः। दान्तः इत्यनेन दमः उक्तः। उपरतः इत्यस्मात् उपरतिः ज्ञायते। तितिक्षुः इत्यनेन तितिक्षा अवगम्यते। समाहितः इति शब्देन समाधानं ज्ञायते। इत्थं यः शमदमोपरतितितिक्षासमाधानवान् स आत्मानं पश्यति। तस्यास्यार्थस्य संग्रहं करोति उपदेशसाहस्री-



**प्रशान्तचित्ताय जितेन्द्रियाय च**

**प्रहीणदोषाय यथोक्तकारिणे।**

**गुणान्विताय अनुगताय सर्वदा**

**प्रदेयमेतत् सततं मुमुक्षवे॥** (१६.१२)

**सरलार्थः**- प्रशान्तचित्ताय- प्रशान्तं चित्तं यस्य स प्रशान्तचित्तः। तस्मै। अनेन शमगुणयुक्त उक्तः। जितेन्द्रियाय- जितानि इन्द्रियाणि येन स जितेन्द्रियः। तस्मै। अनेन दमगुणयुक्त उक्तः। दोषाः रागादयः। ते च पापप्रभवाः। ते प्रहीणाः यस्य स प्रहीणदोषः। तस्मै। अनेन यस्य चित्तं शुद्धं स उक्तः। यथा उक्तं शास्त्रेण गुरुणा च तथा करोति स यथोक्तकारी। तस्मै। अनेन काम्यनिषिद्धवर्जनपुरःसरं नित्याद्यनुष्ठानेन ईश्वरप्रीतिः येन लब्धा स उक्तः। गुणा विवेकवैराग्योपरतितितिक्षासमाधानानि। तैः अन्वितः गुणान्वितः। तस्मै। अनुगताय गुरुसेवापराय। अनेन श्रद्धा उक्ता। श्रद्धालुः खलु अनुगतः गुरुसेवापरो भवति।

एवम् **अधिगताखिलवेदार्थः शुद्धचित्तः एकाग्रमानसः साधनचतुष्टयसम्पन्नः** अधिकारी भवति। एवम् अधिकारसम्पादनात् परं श्रवणादिकं कर्तव्यम्। परन्तु शास्त्रविदपि अधिकारी स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यात्। अतः अधिकारलाभोत्तरं श्रवणादीनां कृते गुरुसमीपं गन्तव्यमेव। तथाहि श्रुतिः-

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।**

**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥** (मु.१.२.१२)

**सरलार्थः** - ब्राह्मणः ब्रह्मविद्यां लब्धुम् इच्छुः लोकान् परीक्षेत। प्रत्यक्षानुमानोपनागमैः प्रमाणैः सर्वतः याथात्म्येन लोकान् अवधारयेदित्यर्थः। के लोकाः परीक्षणीयाः। अव्यक्तादिस्थावरान्ताः सर्वेऽपि परीक्षणीयाः। ईदृश्या परीक्षया किम् अवधारयेत्। इत्थम् अवधारयेत्- एते लोकाः उत्पत्तिविनाशशालिनः सन्ति। अनेकानर्थशतसहस्रसङ्कुलाः सन्ति। कदलीगर्भवद् असाराः सन्ति। मायामरीच्युदकसमाः सन्ति। गन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमाः सन्ति। प्रतिक्षणं प्रध्वंसिनः सन्ति। यश्च अविद्यावान् भवति स एव सकामो विहितानि कर्माणि करोति, तत्कर्मणा एते लोकाः प्राप्यन्ते। अत एव एते लोकाः कर्मचिताः। धर्माधर्मनिर्वर्तिताः इति। इत्थम् अवधारणं कुर्यात्। इत्थम् परीक्षेत।

परीक्षणानन्तरं किं कुर्यात्। उच्यते- स निश्चिनुयात् यत् - **नास्ति अकृतः कृतेन।** अर्थात् इह संसारे नास्ति कश्चिदपि अकृतः अर्थात् नित्यः पदार्थः। सर्वे लोकाः कर्मचिताः सन्ति। कर्मकृतत्वाच्च एते अनित्याः सन्ति। न नित्यं किञ्चिद्। सर्वं तु कर्म अनित्यस्यैव साधनम् अस्ति। यस्माच्चतुर्विधमेव हि सर्वं कर्म कार्यम् - उत्पाद्यम् आप्यं विकार्यं संस्कार्यं वा। नातः परं कर्मणो विषयोऽस्ति। अहं च नित्येन अमृतेन अभयेन कूटस्थेन अचलेन ध्रुवेण अर्थेन अर्थी, न तद्विपरीतेन। अतः किं कृतेन कर्मणा आयासबहुलेन अनर्थसाधनेन इत्येवं निर्विण्णः भवेत्। ततश्च अभयं शिवमकृतं नित्यं पदं यत् तद्विज्ञानार्थं



विशेषेण अधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेव अधिगच्छेत्। कीदृशम् गुरुम् अभिगच्छेत्। आचार्यं शमदमादिसम्पन्नम् अभिगच्छेत्। श्रोत्रियम्- अध्ययनश्रुतार्थसम्पन्नम्। ब्रह्मनिष्ठम्- हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठः जपनिष्ठः तपोनिष्ठ इति यद्वत्। न हि कर्मिणो ब्रह्मनिष्ठता सम्भवति, कर्मात्मज्ञानयोः विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेद् अक्षरं पुरुषं सत्यम्। शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्याद्। गुरुम् कथम् अभिगच्छेत्। स समित्पाणिः समिद्भारगृहीतहस्तः गुरुम् अभिगच्छेत्।

अनया श्रुत्या इदं स्पष्टं भवति यत् लोकपरीक्षायाः अनन्तरं निर्विण्णः वैराग्यसम्पन्नो भूत्वा गुरुम् उपसर्पेत्। ततः श्रवणादिकं कुर्यात्।

योग्यगुरुलाभस्तु पुण्यातिशयाद् भवति। तथाहि आचार्यः शंकर आह-

**पुण्यातिशयात् परमकारुणिकं कश्चित् सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदा आसादयति।** (छा.उ.भा.६.१४.२)

**आचार्यवान् पुरुषो वेद॥** (छा.उ. ६.१४.२) इति श्रुतितः अवगम्यते यद् यस्य आचार्यः अस्ति स ब्रह्म जानाति। आचार्यं विना मार्गोदेष्टा नास्ति।

**आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति।** (छा.उ.४.९.३) इति श्रुतितः अवगम्यते यद् आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापति प्राप्नोति।

स्वयं तर्केण ब्रह्मज्ञानस्य अन्वेषणं न कर्तव्यमिति इति निषेधोऽपि श्रुतौ उपलभ्यते-

**नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ।** (कठ.उ.१.२.९)

**अर्थात्** - नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेण आपनेया नापनीया न प्रापणीया इत्यर्थः। नापनेतव्या वा, नोपहन्तव्या। तार्किको हि अनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कल्पयति। अत एव च या इयम् आगमप्रभूता मतिः तार्किकात् अन्येनैव आगमाभिज्ञेन आचार्येणैव प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम।



## पाठगतप्रश्नाः ४

३३. मुमुक्षुः कदा गुरुम् उपसर्पति।

३४. गुरुः केन कारणेन उपदिशति विधिवदुपसन्नाय।

३५. गुरुसमीपं गत्वा अधिकारी किं करोति।

३६. लब्धाधिकारः मुमुक्षुः कथं ब्रह्मान्वेषणं कुर्यात्।

३७. गुरुलाभे को हेतुः।

३८. आचार्यवान् पुरुषो वेद इति श्रुतेरर्थं लिखत।



## २३.१०) श्रवणम्

वेदान्तसारे उच्यते "**श्रवणं** नाम षड्विधलिङ्गैः अशेषवेदान्तानाम् अद्वितीयवस्तुनि तात्पर्यावधारणम्। **मननं** तु श्रुतस्य अद्वितीयवस्तुनः वेदान्तानुगुणयुक्तिभिः अनवरतम् अनुचिन्तनम्। विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः **निदिध्यासनम्**" इति।

**श्रवणं शब्दजं ज्ञानमुपपत्त्यानुचिन्तनम्।**

**मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यते॥**

धर्मराजाध्वरीन्द्रविरचिते वेदान्तपरिभाषाभिधेये अद्वैतवेदान्तप्रकरणग्रन्थे अपि ब्रह्मसाक्षात्कारहेतुत्वेन श्रवणमनननिदिध्यासनानि निगदितानि। तत्र श्रवणस्य विषये उच्यते -

**श्रवणं नाम वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया इति।**

श्रवणं वै न केवलं कर्णाभ्यां वेदान्तवाक्यानां श्रवणम्, अपि तु अशेषवेदान्तवाक्यानां श्रवणेन तेषां च सर्वेषां वेदान्तवाक्यानाम् तात्पर्यम् अद्वैते ब्रह्मणि एव इति निश्चयसम्पादनम्। वेदान्तसारे अपि श्रवणविषये उच्यते- "**श्रवणं नाम षड्विधलिङ्गैः अशेषवेदान्तानाम् अद्वितीयवस्तुनि तात्पर्यावधारणम्**" इति। श्रवणं हि ब्रह्मात्मनि तत्त्वमसि-वाक्यस्य तच्छब्दश्रुत्यादिपर्यालोचनया तात्पर्यावगमः।

**इत्थं वाक्यैः तदर्थानुसन्धानं श्रवणं भवेत्।**

**युक्त्या सम्भावितत्वानुसंधानं मननं तु तत्॥** (प.द.१.५३)

### तात्पर्यशब्दार्थः

ननु किं वै तात्पर्यनिर्णायकलिङ्गम्। लीनमर्थं गमयतीति लिङ्गम्। व्याप्तिबलेन यद् यस्य गमकं तत् तस्य लिङ्गम्। तात्पर्यनिर्णयाय लिङ्गम् इति तात्पर्यनिर्णायकलिङ्गम्। ननु किं तात्पर्यम्। तत् अर्थः, स परो यस्य स तत्पर इति बहुव्रीहिः। अर्थपर इत्यर्थः। तस्य भावः तात्पर्यम् इति भावे ष्यञ्प्रत्ययः। शब्दः वाक्यं वा यदर्थपरं तत् तस्य तात्पर्यम्। **तत्प्रतीतिजननयोग्यत्वम्** एव तात्पर्यम् इति व्युत्पत्तिलब्धः अर्थः। अद्वैतमते अद्वितीये ब्रह्मणि एव अशेषवेदान्तानां तात्पर्यम्। आकाङ्क्षा योग्यता सन्निधिः च यथा तथा तात्पर्यम् अपि शाब्दबोधं प्रति हेतुः। वेदान्तमते- तत्प्रतीतिजननयोग्यत्वम् एव तात्पर्यम्। इष्टस्य अर्थस्य प्रतीतिजननसामर्थ्यम् एव तात्पर्यम् इति तस्यार्थः। शब्दस्य तादृशसामर्थ्यवशाद् एव भोजनप्रकरणे 'सैन्धवम् आनय' इति सैन्धवशब्दः लवणं बोधयति। ननु सैन्धवशब्दस्य अश्वबोधनसामर्थ्यसत्त्वे अपि कथं स लवणम् एव बोधयति इति चेत्- भोजनप्रकरणे सैन्धवशब्दात् अश्वार्थप्रतीतिः न भवतु इति इच्छावशात् अश्वार्थप्रतीतियोग्यतासत्त्वे अपि अश्वः न प्रतीयते। ननु एतेन इच्छा एव तात्पर्यत्वेन अभिहिता इति चेन्न, तदितरप्रतीतिजननेच्छया अनुच्चारितत्वे सति तत्प्रतीतिजननयोग्यत्वस्य

तात्पर्यत्वेन विवक्षितत्वात्। लौकिकवाक्येषु तु तात्पर्यं प्रकरणादिना अवगम्यते। तथाहि उच्यते वाक्यपदीये -

**वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः।**

**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलम्॥ इति।**

**अस्यार्थः** - वाक्यात् प्रकरणात् अर्थात् औचित्यात् देशतः कालतः च शब्दानाम् अर्थाः भिन्नाः भवन्ति। तस्मात् एतान् सर्वान् विषयान् विचार्य एव केनचित् शब्दानाम् तात्पर्यम् अवगन्तव्यम् इति।

वैदिकानां वाक्यानां तु केषाञ्चित् मते अधिकरणमुखेन, केषाञ्चित् मते उपक्रमादिना तात्पर्यनिर्णयः क्रियते।

अधिकरणं वै विषय-संशय-पुर्वपक्ष-उत्तरपक्ष-सङ्गत्यात्मकं पञ्चलिङ्गकम्। तथाहि उच्यते -

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**

**सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥ इति।**

## २३.१०.१) तात्पर्यनिर्णायकानि षट् लिङ्गानि

प्रकृते उपक्रमादिना तात्पर्यनिर्णयः क्रियते इत्यतः उपक्रमादीनां सामान्यपरिचयः प्रदीयते।

उपक्रमादितात्पर्यनिर्णायकलिङ्गप्रतिपादकः श्लोको हि -

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**

**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ इति।**

१)उपक्रमोपसंहारौ, २)अभ्यासः, ३)अपूर्वता, ४)फलम्, ५)अर्थवादः, ६)उपपत्तिः चेति षट् तात्पर्यग्राहकलिङ्गानि। इदानीम् एतेषाम् उपक्रमादिलिङ्गानां विवरणं प्रस्तूयते-




## २३.१०.२) उपक्रमोपसंहारौ

प्रकरणप्रतिपाद्यस्य अर्थस्य प्रकरणस्य आदौ अन्ते च उपपादनम् उपक्रमोपसंहारौ इति। यथा-छान्दोग्योपनिषदि षष्ठे अध्याये आदौ 'एकमेवाद्वितीयम्', अन्ते 'ऐतदात्म्यमिदं सर्वम्' इति अद्वितीयवस्तुनः प्रतिपादनं क्रियते। उपक्रमः आरम्भः। उपसंहारः परिसमाप्तिः।



### २३.१०.३) अभ्यासः

प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनम् अभ्यासः। यथा - छान्दोग्योपनिषदि अद्वितीयवस्तुनः मध्ये 'तत्त्वमसि' इति नवकृत्वा प्रतिपादनम् विद्यते। अभ्यासः आवृत्तिः, पुनःपुनः कथनम्।

### २३.१०.४) अपूर्वता

प्रकरणप्रतिपाद्यस्य अर्थस्य प्रमाणान्तरेण अविषयीकरणम् अपूर्वता इति। यथा छान्दोग्योपनिषदि अद्वितीयवस्तुनः प्रत्यक्षादिप्रमाणान्तरेण अविषयीकरणम्। यो विषय आगमप्रमाणेन ज्ञायते स नान्येन केनचिदपि प्रमाणेन ज्ञायते चेत् स प्रमाणान्तराविषयः।

### २३.१०.५) फलम्

प्रकरणप्रतिपाद्यस्य आत्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनं फलम्। यथा - छान्दोग्योपनिषदि 'आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छा.उ.६.१४.२) इति अद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनम्।

### २३.१०.६) अर्थवादः

प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम् अर्थवादः। यथा छान्दोग्योपनिषदि 'उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा.उ.६.१.३) इति अद्वितीयवस्तुनः प्रशंसनम् क्रियते।

### २३.१०.७) उपपत्तिः

उपपत्तिर्हि युक्तिः। प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः। यथा - 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादौ अद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते।

इत्थं छान्दोग्योपनिषदः षष्ठाध्यायस्य तात्पर्यम् अद्वितीयं ब्रह्म इति सुस्पष्टम्। एवमेव अन्यानि शास्त्राणि, अन्ये ग्रन्थाः चापि द्रष्टव्याः। एवम् वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणम् एव श्रवणम् इति निगदितं यथाविस्तरम्।

**श्रवणादेव आत्मसाक्षात्कारः**

अत्र यत् प्रस्तूयते तदेकं मतम् अस्तीति अवधेयम्। आत्मसाक्षात्कारं प्रति केचित् प्रतिबन्धाः सन्ति। ते असम्भावना विपरीतभावना च भवतः। यस्य अधिकारिणः युक्तसाधनानुष्ठानात् प्रतिबन्धाः अपगताः सन्ति स निवृत्तप्रतिबन्धकः अधिकारी उत्तमाधिकारी भवति। तस्य महावाक्यश्रवणमात्रेणैव अद्वैतात्मसाक्षात्कारः सिद्ध्यति। तथा च गुरुमुखाद् वेदान्तानां तात्पर्यनिर्धारणरूपश्रवणाभिन्नो विचार एव आत्मसाक्षात्कारे हेतुः। विचारो हि आत्मानात्मनोः बन्धमोक्षयोश्च स्वरूपं यथाशास्त्रं विमृश्य निर्णयः।



मननं निदिध्यासनं च प्रतिबन्धकनिवृत्त्यै अनुष्ठेयं भवति। मनननिदिध्यासनयोः संशयविपर्ययनिवृत्तौ उपयोगित्वम् भवति। असम्भावना प्रमाणगता प्रमेयगता च भवति। प्रमाणगता असम्भावना श्रवणेन निवर्तते। प्रमेयगता असम्भावना च मननेन निवर्तते। विपरीतभावना तु निदिध्यासनेन निवर्तते।

**प्रमाणगता असम्भावना** - प्रमाणम् उपनिषद् ब्रह्मसूत्रं भगवद्गीता इत्यादयो ग्रन्थाः। तद्गता असम्भावना। अर्थात् उपनिषदां कुत्र तात्पर्यमिति विषये संशयः एव प्रमाणगता असम्भावना। कर्मणि ब्रह्मणि वा। यतो हि पूर्वमीमांसानुसारेण कर्मणि एव तात्पर्यम्। आम्नायः क्रियार्थः अस्ति, यस्य वेदवाक्यस्य क्रियार्थत्वं नास्ति तद् वेदवाक्यं निरर्थकमिति अतः अर्थवादे अन्तर्भवति इति अभिप्रैति जैमिनिमुनिः। इत्थं जैमिनिमुनिरपि कर्मणि वेदानां तात्पर्यं प्रतिपादयति चेत् अन्येषां का कथा। अतः समेषामपि वेदान्तानां ब्रह्मात्मैक्ये तात्पर्यमिति यद्यपि वेदान्ते व्यवस्थापितम्। तथापि कश्चित् दुरितबलात् पीड्यमानः तात्पर्यं ग्रहीतुमसमर्थो भवति। दुरितस्य परिणाम एव इयम् असम्भावना। इयमेव प्रतिबन्धिका। अतः दुरितनाशपुरःसरं यथाविधि वेदान्तानां श्रवणं क्रियते चेत् तात्पर्यग्रहः भवेत्। तदा प्रमाणगता असम्भावना दूरीभवेत्।

**प्रमेयगता असम्भावना**- श्रवणेन इदं ज्ञातं यत् ब्रह्मणि वेदान्तानां तात्पर्यमस्ति, न तु कर्मणि। तथापि योऽयं जीवब्रह्मणोः अभेदः प्रतिपाद्यते सः अभेदः वास्तविक उत भेद इति संशयो जायते। अयं संशयः वेदान्तस्य यो विषयः प्रमेयं जीवब्रह्मैक्यं तद्विषयकोऽस्ति। अत इयं प्रमेयगता असम्भावना। इयमेव प्रतिबन्धिका, दुरितस्य परिणामरूपा। अतो दुरितनाशपुरःसरं यथाप्रविधि श्रुतस्य वेदान्तस्य मननं क्रियते चेदयं संशयो दूरीभवेत्। इत्थं प्रमेयगता असम्भावना दूरीभवेत्।

असम्भावना- चित्तस्य ब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्त्ययोग्यतोच्यते।

**विपरीतभावना**- शरीराद्यध्याससंस्कारप्रचयः। शरीरादौ आत्मत्वभावना विपरीतभावना। अनेकजन्मार्जितसंस्कारवशाद् देहादौ आत्माध्यासः भवति। अहन्ता ममता च उदेति। अहं देहः। अहं स्थूलः। अहं काणः। मम इदम् इत्यादिरूपेण तादात्म्याध्यासः विपरीतभावना कथ्यते। इत्थं देहादीनां सत्यत्वनिश्चयः जीवब्रह्मणोः भेदनिश्चय एव विपरीतभावना। निदिध्यासनेन विपरीतभावना नश्यति।



## पाठगतप्रश्नाः ५

३९. श्रवणं किम्।

४०. तात्पर्यं किम्।

४१. तात्पर्यनिर्णायकानि लिङ्गानि कति। कानि च।

४२. उपक्रमोपसंहारौ कौ। क्वान्तर्भवति।

४३. अभ्यासः कः। क्वान्तर्भवति।



४४. अपूर्वता का। क्वान्तर्भवति।

४५. फलम् किम्। क्वान्तर्भवति।

४६. अर्थवादः कः। क्वान्तर्भवति।

४७. उपपत्तिः का। क्वान्तर्भवति।

४८. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्॥

(क) विवेकः (ख) वैराग्यम् (ग) प्रयोजनम् (घ) उपपत्तिः

४९. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्॥

(क) विवेकः (ख) वैराग्यम् (ग) प्रयोजनम् (घ) फलम्

५०. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्॥

(क) विवेकः (ख) वैराग्यम् (ग) प्रयोजनम् (घ) उपक्रमौपसंहारौ

५१. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्॥

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) अपूर्वता

५२. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् नास्ति।

(क) विवेकः (ख) फलम् (ग) अपूर्वता (घ) उपपत्तिः

५३. तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् नास्ति।

(क) वैराग्यम् (ख) फलम् (ग) अपूर्वता (घ) उपपत्तिः

५४. उपपत्तिः क्वान्तर्भवति।

(क) अनुबन्धेषु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु

५५. फलम् क्वान्तर्भवति।

(क) अनुबन्धेषु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु

५६. विवेकः क्वान्तर्भवति।

(क) अनुबन्धेषु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु

५७. विषयः क्वान्तर्भवति।

(क) अनुबन्धेषु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु

५८. दमः क्वान्तर्भवति।

(क) अनुबन्धेषु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु

५९. प्रायश्चित्तं क्वान्तर्भवति।

(क) चित्तशोधककर्मसु (ख) साधनचतुष्टये (ग) शमादिषट्कसम्पत्तौ (घ) तात्पर्यनिर्णायकलिङ्गेषु



## २३.११) मननम्

मननस्य लक्षणं निगद्यते वेदान्तपरिभाषाकारेण धर्मराजाध्वरिन्द्रेण–

**मननं नाम शब्दावधारिते अर्थे मानान्तरविरोधशङ्कायाम्**

**तन्निराकरणानुकूलतर्कात्मकज्ञानजनको मानसो व्यापार इति।**

**अस्यार्थः** - श्रवणेन यः अर्थः निश्चितः भवति तत्र प्रमाणान्तरेण बहवः विरोधाः समागच्छन्ति। अन्येऽपि आक्षेपादिना भ्रामयितुं शक्नुवन्ति। अथवा स्वमनसि एव विरुद्धाः युक्तयः आविर्भवितुम् अर्हन्ति। एवं सति येन मनोवृत्तिविशेषेण वेदान्तानुगुणयुक्तिभिः विरुद्धमतानां खण्डनं विधाय स्वमते दृढता सम्पाद्यते तदेव मननम् इति उच्यते। अध्यात्मोपनिषदि अपि आम्नायते -

**युक्त्या सम्भावितत्त्वानुसन्धानं मननं तु तत्।**

मननं हि तर्कात्मकम्, परन्तु एतेन वेदसिद्धान्ताविरोधी तर्कः ज्ञातव्यः, न तु वेदसिद्धान्तविरोधी तर्कः। तस्मादेव भगवता भाष्यकारेण उच्यते - "श्रुत्यनुगृहीतः एव ह्यत्र तर्कोनुभवाङ्गत्वेन आश्रियते" इति। मनुना अपि उक्तम् -

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**

**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ (मनुसंहिता १०.१०६)**

**अस्यार्थः** - यः ऋषीणाम् धर्मोपदेशं **वेदस्मृत्यादिशास्त्राविरोधिणा** तर्केण अनुसन्धत्ते सः एव धर्मस्य यथार्थं स्वरूपं वेत्ति, नान्य इति।

वेदान्तसारकारेण मननविषये उच्यते -

**"मननं तु श्रुतस्य अद्वितीयवस्तुनः वेदान्तानुगुणयुक्तिभिः अनवरतम् अनुचिन्तनम्" इति।**

अतः वेदान्तवाक्यानि श्रुत्वा अद्वैतं ब्रह्मैव वेदान्तानाम् तात्पर्यम् इति विज्ञाय विरुद्धयुक्तीनां वेदसिद्धान्ताविरोधियुक्तिभिः निराकरणम् एव मननम् इति अर्थः फलति।

अनुमानं वेदान्ताविरोधि, तदुपजीवि च इत्यपि द्रष्टव्यम्। शब्दाविरोधिन्या तदुपजीविन्या च युक्त्या विवेचनं मननम्। युक्तिश्च अर्थापत्तिरनुमानं वा। (ब्र.सू. भामती १.१.२)

### मनने तर्कस्य उपयोगः

विद्या उदितापि न प्रतिष्ठां लभते, असंभावनाभिभूतविषयत्वात्। तथा च लोकेऽस्मिन् देशे काले च इदं वस्तु स्वरूपत एव न सम्भवति इति दृढभावितम्। यदि तत् कथञ्चिद् दैववशाद् उपलभ्येत, तदा स्वयम् ईक्षमाणोऽपि तावन्न अध्यवस्यति यावत् तत् सम्भवम् नानुसरति। तेन सम्यग् ज्ञानमपि स्वविषये अप्रतिष्ठितम् अनवाप्तम् इव भवति। तेन तत्स्वरूपप्रतिष्ठायै तर्कं सहायीकरोति। अत एव प्रमाणानाम् अनुग्राहकः तर्कः इति तर्कविदः॥ (पञ्चपादिका प्रथमवर्णकम्)

मननेन प्रमेयगतासम्भावना निवर्तते।



## २३.१२) निदिध्यासनम्

श्रवणमननयोः अनन्तरं निदिध्यासनं क्रियते। तल्लक्षणम् हि निगद्यते वेदान्तपरिभाषायाम् -

**निदिध्यासनं नाम अनादिदुर्वासनया विषयेषु आकृष्यमाणचित्तस्य विषयेभ्यः अपकृष्य आत्मविषयक-स्थैर्यानुकूलो मानसो व्यापारः इति।**

वेदान्तसारे तु निदिध्यासनविषये उच्यते -

**"विजातीयदेहादिप्रत्ययरहित-अद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः निदिध्यासनम्" इति।**

अशेषाणां वेदान्तानाम् तात्पर्यम् अद्वितीये ब्रह्मणि इति श्रवणेन निश्चितम्। तेन प्रमाणगतासम्भावना अपगता। मननेन प्रमेयगतासम्भावना दूरीभूता। तथापि अनादिकालाद् दुर्वासना काचिद् अन्तःकरणे विद्यते। तत्र अहं देहः मम इदम् इति अहंताममतारूपा भावना मूलमस्ति। परन्तु श्रवणमननाभ्यां निश्चितं यद् 'आत्मा देहादिव्यतिरिक्तः श्रुत्या तथा प्रतिपादितत्वात्' इत्यादिभिः युक्तिभिः। तदा 'अहं देहादिकम्' इति विजातीयप्रत्ययं त्यक्त्वा 'अहमात्मा' इति अद्वितीयवस्तुसजातीयप्रत्ययस्य प्रवाहः निदिध्यासनपदवाच्यः। चित्तं विषयेषु एव आकृष्टं भवति। एवञ्च विषयेषु आकृष्यमाणं चित्तं येन मनोवृत्तिविशेषेण विषयेभ्यः अपकृष्यते किञ्च आत्मविषयिणि स्थिरता सम्पाद्यते तत् निदिध्यासनम् उच्यते। वेदान्तपरिभाषाकारमते निदिध्यासनं हि ब्रह्मसाक्षात्कारे साक्षात्कारणम्। तथाहि तेन उच्यते- "निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणम्" इति।

यदा मनः स्थिरं भवति, अर्थात् मनसि देहादिप्रत्ययाः न आविर्भवन्ति, तदा स्थिरे शान्ते एकाग्रे च मनसि अविच्छिन्नतैलधारावत् अद्वितीयब्रह्मज्ञानं सततं प्रवहते, तदेव निदिध्यासनम् उच्यते। तथाहि उच्यते-

**ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत्।**
**एकतानत्वमेतद्धि निदिध्यासनमुच्यते॥ इति।**

अर्थात् श्रवणमननाभ्यां यदा अर्थः निःसन्दिग्धः भवति तदा तस्मिन् निःसन्दिग्धे वस्तुनि मनसः एकतानता हि निदिध्यासनम् उच्यते।

एवं श्रवण-मनन-निदिध्यासनानि ब्रह्मसाक्षात्कारं प्रति कारणानि। तथाहि उच्यते -

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**मत्वा च सततं ध्येयम् एते दर्शनहेतवः॥ इति।**

### तदयं संग्रयः-

आनन्दरूपब्रह्मप्राप्तिरेव मोक्षः। स च ज्ञानमात्रसाध्यः। ज्ञानं च जीवब्रह्मैक्यगोचरापरोक्षसाक्षात्काररूपमेव। तच्च तत्त्वमसि अति महावाक्याधीनम्। अथवा श्रवणादिसंस्कृतमनोनिबन्धनम्। सर्वथा च नोपासनात्मकक्रियासाध्यो मोक्षः। न वा कर्मसाध्यः।



## पाठगतप्रश्नाः ६

६०. मननं किम्। मननेन कस्य निवृत्तिः भवति।

६१. निदिध्यासनं किम्। तेन कस्य निवृत्तिः भवति।

६२. प्रमाणगतासम्भावनाया निवर्तकं किम्।

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) विवेकः

६३. प्रमेयगतासम्भावनाया निवर्तकं किम्।

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) विवेकः

६४. विपरीतभावनाया निवर्तकं किम्।

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) विवेकः

६५. चित्तमलस्य नाशकं किम्।

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) निष्कामकर्मयोगः

६६. चित्तविक्षेपस्य शामकं किम्।

(क) श्रवणम् (ख) मननम् (ग) निदिध्यासनम् (घ) उपासना

## २३.१३) गीताभाष्यम्

मोक्षः परमनिःश्रेयसम् कथ्यते। तस्य साधनं किमिति विषये नैके पूर्वपक्षाः सन्ति। बहुयुक्तिजालमपि विस्तीर्णमस्ति। प्रायः समग्रस्यास्य विषयस्य साधकबाधकयुक्तिभिः परीक्षणं कृतं भगवता भाष्यकारेण शङ्करेण गीताया अन्तिमाध्याये। तदेवात्र उपन्यस्यते।

**गीताभाष्यम्--**

अस्मिन्गीताशास्त्रे परमनिःश्रेयससाधनं निश्चितं किं ज्ञानं कर्म वा आहोस्विद् उभयम् इति। कुतः संशयः। 'यज्ज्ञात्वामृतमश्नुते' (भ. गी. १३.१२) 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' (भ. गी. १८.५५) इत्यादीनि वाक्यानि केवलाज्ज्ञानात् निःश्रेयसप्राप्तिं दर्शयन्ति। 'कर्मण्येवाधिकारस्ते' (भ. गी. २.४७) 'कुरु कर्मैव' (भ. गी. ४.१५) इत्येवमादीनि कर्मणाम् अवश्यकर्तव्यतां दर्शयन्ति। एवं ज्ञानकर्मणोः कर्तव्यत्वोपदेशात् समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यात् इति भवेत् संशयः कस्यचित्। किं पुनरत्र मीमांसाफलम्। ननु एतदेव – एषाम् अन्यतमस्य परमनिःश्रेयससाधनत्वावधारणम्। अतः विस्तीर्णतरं मीमांस्यम् एतत्॥

आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसायित्वात्। क्रियाकारकफलभेदबुद्धिः अविद्यया आत्मनि नित्यप्रवृत्ता - 'मम कर्म, अहं कर्ता, अमुष्मै फलायेदं कर्म करिष्यामि' इति इयम् अविद्या अनादिकालप्रवृत्ता। अस्या अविद्याया निवर्तकम् 'अयमहमस्मि



केवलोऽकर्ता अक्रियोऽफलः; न मत्तोऽन्योऽस्ति कश्चित्' इत्येवंरूपम् आत्मविषयं ज्ञानम् उत्पद्यमानम् कर्मप्रवृत्तिहेतुभूतायाः भेदबुद्धेः निवर्तकत्वात्। तु- शब्दः पक्षव्यावृत्त्यर्थः- न केवलेभ्यः कर्मभ्यः, न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिः इति पक्षद्वयं निवर्तयति। अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः। न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते। केवलं ज्ञानमपि अनर्थकं तर्हि। न। अविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात्। अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वं रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत्। विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलम्। तथा ज्ञानम्। दृष्टार्थानां च च्छिदिक्रियाग्निमन्थनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलात् अन्यफले कर्मान्तरे वा व्यापारानुपपत्तिः यथा, तथा दृष्टार्थायां ज्ञाननिष्ठाक्रियायां व्यापृतस्य ज्ञात्रादिकारकस्य आत्मकैवल्यफलात् कर्मान्तरे प्रवृत्तिः अनुपपन्ना इति न ज्ञाननिष्ठा कर्मसहिता उपपद्यते। भुज्यग्निहोत्रादिक्रियावत् स्यात् इति चेत्। न। कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः। कैवल्यफले हि ज्ञाने प्राप्ते, सर्वतःसम्प्लुतोदकफले कूपतटाकादिक्रियाफलार्थित्वाभाववत् फलान्तरे तत्साधनभूतायां वा क्रियायाम् अर्थित्वानुपपत्तिः। न हि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारः उपपद्यते, तद्विषयं वा अर्थित्वम्। तस्मात् न कर्मणोऽस्ति निःश्रेयससाधनत्वम्। न च ज्ञानकर्मणोः समुच्चितयोः। नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा, अविद्यानिवर्तकत्वेन विरोधात्। न हि तमः तमसः निवर्तकम्। अतः केवलमेव ज्ञानं निःश्रेयससाधनम् इति। न ; नित्याकरणे प्रत्यवायप्राप्तेः, कैवल्यस्य च नित्यत्वात्। यत् तावत् केवलाज्ज्ञानात् कैवल्यप्राप्तिः इत्येतत् , तत् असत् ; यतः नित्यानां कर्मणां श्रुत्युक्तानाम् अकरणे प्रत्यवायः नरकादिप्राप्तिलक्षणः स्यात्। ननु एवं तर्हि कर्मभ्यो मोक्षो नास्ति इति अनिर्मोक्ष एव। नैष दोषः। नित्यत्वात् मोक्षस्य। नित्यानां कर्मणाम् अनुष्ठानात् प्रत्यवायस्य अप्राप्तिः, प्रतिषिद्धस्य च अकरणात् अनिष्टशरीरानुपपत्तिः, काम्यानां च वर्जनात् इष्टाशरीरानुपपत्तिः, वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये, पतिते अस्मिन् शरीरे देहान्तरोत्पत्तौ च कारणाभावात् आत्मनः रागादीनां च अकरणे स्वरूपावस्थानमेव कैवल्यमिति अयत्नसिद्धं कैवल्यम् इति। अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्य अनारब्धकार्यस्य उपभोगानुपपत्तेः क्षयाभावः इति चेत्। न। नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः। प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थं नित्यं कर्म। आरब्धानां च कर्मणाम् उपभोगेनैव क्षीणत्वात् अपूर्वाणां च कर्मणाम् अनारम्भे अयत्नसिद्धं कैवल्यमिति। न। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. उ. ३.८) इति विद्याया अन्यः पन्थाः मोक्षाय न विद्यते इति श्रुतेः, चर्मवदाकाशवेष्टनासम्भववत् अविदुषः मोक्षासम्भवश्रुतेः, 'ज्ञानात्कैवल्यमाप्नोति' इति च पुराणस्मृतेः; अनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च। यथा पूर्वोपात्तानां दुरितानाम् अनारब्धफलानां सम्भवः, तथा पुण्यानाम् अनारब्धफलानां स्यात् सम्भवः। तेषां च देहान्तरम् अकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः। धर्माधर्महेतूनां च रागद्वेषमोहानाम् अन्यत्र आत्मज्ञानात् उच्छेदानुपपत्तेः धर्माधर्मोच्छेदानुपपत्तिः। नित्यानां च कर्मणां पुण्यफलत्वश्रुतेः, 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः' (गौ. ध. सू. २.२.२९) इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः॥



ये तु आहुः- नित्यानि कर्माणि दुःखरूपत्वात् पूर्वकृतदुरितकर्मणां फलमेव, न तु तेषां स्वरूपव्यतिरेकेण अन्यत् फलम् अस्ति, अश्रुतत्वात् , जीवनादिनिमित्ते च विधानात् इति। न अप्रवृत्तानां कर्मणां फलदानासम्भवात् ; दुःखफलविशेषानुपपत्तिश्च स्यात्। यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति, तदसत्। न हि मरणकाले फलदानाय अनङ्कुरीभूतस्य कर्मणः फलम् अन्यकर्मारब्धे जन्मनि उपभुज्यते इति उपपत्तिः। अन्यथा स्वर्गफलोपभोगाय अग्निहोत्रादिकर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिः न स्यात्। तस्य दुरितस्य दुःखविशेषफलत्वानुपपत्तेश्च - अनेकेषु हि दुरितेषु सम्भवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वन्द्वरोगादिबाधनं निर्निमित्तं न हि शक्यते कल्पयितुम् , नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति। अप्रकृतं च इदम् उच्यते - नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलम् इति। कथम्। अप्रसूतफलस्य हि पूर्वकृतदुरितस्य क्षयः न उपपद्यत इति प्रकृतम्। तत्र प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखम् आह भवान् , न अप्रसूतफलस्येति। अथ सर्वमेव पूर्वकृतं दुरितं प्रसूतफलमेव इति मन्यते भवान् , ततः नित्यकर्मानुष्ठानायासदुःखमेव फलम् इति विशेषणम् अयुक्तम्। नित्यकर्मविध्यानर्थक्यप्रसङ्गश्च, उपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः। किञ्च, श्रुतस्य नित्यस्य कर्मणः दुःखं चेत् फलम् , नित्यकर्मानुष्ठानायासादेव तत् दृश्यते व्यायामादिवत् ; तत् अन्यस्य इति कल्पनानुपपत्तिः। जीवनादिनिमित्ते च विधानात् , नित्यानां कर्मणां प्रायश्चित्तवत् पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन् पापकर्मणि निमित्ते यत् विहितं प्रायश्चित्तम् न तु तस्य पापस्य तत् फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलम् , जीवनादिनिमित्तेऽपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव फलं प्रसज्येत, नित्यप्रायश्चित्तयोः नैमित्तिकत्वाविशेषात्। किञ्च अन्यत् - नित्यस्य काम्यस्य च अग्निहोत्रादेः अनुष्ठानायासदुःखस्य तुल्यत्वात् नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलम् , न तु काम्यानुष्ठानायासदुःखम् इति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत। तथा च सति नित्यानां फलाश्रवणात् तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलम् इति अर्थापत्तिकल्पना च अनुपपन्ना, एवं विधानान्यथानुपपत्तेः अनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम्। विरोधाच्च ; विरुद्धं च इदम् उच्यते - नित्यकर्मणा अनुष्ठीयमानेन अन्यस्य कर्मणः फलं भुज्यते इति अभ्युपगम्यमाने स एव उपभोगः नित्यस्य कर्मणः फलम् इति, नित्यस्य कर्मणः फलाभाव इति च विरुद्धम् उच्यते। किञ्च, काम्याग्निहोत्रादौ अनुष्ठीयमाने नित्यमपि अग्निहोत्रादि तन्त्रेणैव अनुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलम् उपक्षीणं स्यात् , तत्तन्त्रत्वात्। अथ काम्याग्निहोत्रादिफलम् अन्यदेव स्वर्गादि, तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत। न च तदस्ति, दृष्टविरोधात् ; न हि काम्यानुष्ठानायासदुःखात् केवलनित्यानुष्ठानायासदुःखं भिन्नं दृश्यते। किञ्च अन्यत् - अविहितमप्रतिषिद्धं च कर्म तत्कालफलम् , न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेत्। तदा स्वर्गादिष्वपि अदृष्टफलाशासनेन उद्यमो न स्यात् - अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषे अनुष्ठानायासदुःखमात्रेण उपक्षयः नित्यानाम् ; स्वर्गादिमहाफलत्वं काम्यानाम् , अङ्गेतिकर्तव्यताद्याधिक्ये तु असति, फलकामित्वमात्रेणेति। तस्माच्च न नित्यानां कर्मणाम् अदृष्टफलाभावः कदाचिदपि उपपद्यते। अतश्च अविद्यापूर्वकस्य कर्मणः विद्यैव शुभस्य अशुभस्य वा



क्षयकारणम् अशेषतः, न नित्यकर्मानुष्ठानम्। अविद्याकामबीजं हि सर्वमेव कर्म। तथा च उपपादितमविद्वद्विषयं कर्म, विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा - 'उभौ तौ न विजानीतः' (भ. गी. २.१९) 'वेदाविनाशिनं नित्यम्' (भ. गी. २.२१) 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' (भ. गी. ३.३) 'अज्ञानां कर्मसङ्गिनाम्' (भ. गी. ३। २६) 'तत्त्ववित्तु महाबाहो गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते' (भ. गी. ३.२८) 'सर्वकर्माणि मनसा संन्यस्यास्ते' (भ. गी. ५.१३) 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' (भ. गी. ५. ८), अर्थात् अज्ञः करोमि इति ; आरुरुक्षोः कर्म कारणम् , आरूढस्य योगस्थस्य शम एव कारणम् ; उदाराः त्रयोऽपि अज्ञाः, 'ज्ञानी त्वात्मैव मे मतम्' (भ. गी. ७.१८) 'अज्ञाः कर्मिणः गतागतं कामकामाः लभन्ते' ; अनन्याश्चिन्तयन्तो मां नित्ययुक्ताः यथोक्तम् आत्मानम् आकाशकल्पम् उपासते ; 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते', अर्थात् न कर्मिणः अज्ञाः उपयान्ति। भगवत्कर्मकारिणः ये युक्ततमा अपि कर्मिणः अज्ञाः, ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः ; अनिर्देश्याक्षरोपासकास्तु 'अद्वेष्टा सर्वभूतानाम्' (भ. गी. १२.१३) इति आध्यायपरिसमाप्ति उक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च। अधिष्ठानादिपञ्चकहेतुकसर्वकर्मसंन्यासिनाम् आत्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदाम् अनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति ; भवत्येव अन्येषामज्ञानां कर्मिणामसंन्यासिनाम् इत्येषः गीताशास्त्रोक्तकर्तव्यार्थस्य विभागः॥

अविद्यापूर्वकत्वं सर्वस्य कर्मणः असिद्धमिति चेन्न; ब्रह्महत्यादिवत्। यद्यपि शास्त्रावगतं नित्यं कर्म, तथापि अविद्यावत एव भवति। यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्म अनर्थकारणम् अविद्याकामादिदोषवतः भवति, अन्यथा प्रवृत्त्यनुपपत्तेः, तथा नित्यनैमित्तिककाम्यान्यपीति। देहव्यतिरिक्तात्मनि अज्ञाते प्रवृत्तिः नित्यादिकर्मसु अनुपपन्ना इति चेन्नन; चलनात्मकस्य कर्मणः अनात्मकर्तृकस्य 'अहं करोमि' इति प्रवृत्तिदर्शनात्। देहादिसङ्घाते अहंप्रत्ययः गौणः, न मिथ्या इति चेन्न; तत्कार्येष्वपि गौणत्वोपपत्तेः। आत्मीये देहादिसङ्घाते अहंप्रत्ययः गौणः ; यथा आत्मीये पुत्रे 'आत्मा वै पुत्रनामासि' (तै. आ. एका. २.११) इति, लोके च 'मम प्राण एव अयं गौः' इति, तद्वत्। नैवायं मिथ्याप्रत्ययः। मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोः अगृह्यमाणविशेषयोः। न गौणप्रत्ययस्य मुख्यकार्यार्थता, अधिकरणस्तुत्यर्थत्वात् लुप्तोपमाशब्देन। यथा 'सिंहो देवदत्तः' 'अग्निर्माणवकः' इति सिंह इव अग्निरिव क्रौर्यपैङ्गल्यादिसामान्यवत्त्वात् देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यम् अग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किञ्चित्साध्यते ; मिथ्याप्रत्ययकार्यं तु अनर्थमनुभवति इति। गौणप्रत्ययविषयं जानाति 'नैष सिंहः देवदत्तः', तथा 'नायमग्निर्माणवकः' इति। तथा गौणेन देहादिसङ्घातेन आत्मना कृतं कर्म न मुख्येन अहंप्रत्ययविषयेण आत्मना कृतं स्यात्। न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यात्। न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किञ्चित् क्रियते, स्तुत्यर्थत्वेन उपक्षीणत्वात्। स्तूयमानौ च जानीतः 'नाहं सिंहः' 'नाहम् अग्निः' इति ; न हि 'सिंहस्य कर्म मम अग्नेश्च' इति। तथा 'न सङ्घातस्य कर्म मम मुख्यस्य आत्मनः' इति प्रत्ययः युक्ततरः स्यात् ; न पुनः 'अहं कर्ता मम कर्म' इति। यच्च आहुः 'आत्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिरात्मा कर्म करोति' इति, न; तेषां मिथ्याप्रत्ययपूर्वकत्वात्। मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वकाः हि



स्मृतीच्छाप्रयत्नादयः। यथा अस्मिन् जन्मनि देहादिसङ्घाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथा अतीते अतीततरेऽपि जन्मनि इति अनादिरविद्याकृतः संसारः अतीतोऽनागतश्च अनुमेयः। ततश्च सर्वकर्मसंन्याससहितज्ञाननिष्ठया आत्यन्तिकः संसारोपरम इति सिद्धम्। अविद्यात्मकत्वाच्च देहाभिमानस्य, तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः। देहादिसङ्घाते आत्माभिमानः अविद्यात्मकः। न हि लोके 'गवादिभ्योऽन्योऽहम् , मत्तश्चान्ये गवादयः' इति जानन् तान् 'अहम्' इति मन्यते कश्चित्। अजानंस्तु स्थाणौ पुरुषविज्ञानवत् अविवेकतः देहादिसङ्घाते कुर्यात् 'अहम्' इति प्रत्ययं, न विवेकतः जानन्। यस्तु 'आत्मा वै पुत्र नामासि' (तै. आ. एका. २। ११) इति पुत्रे अहंप्रत्ययः, स तु जन्यजनकसम्बन्धनिमित्तः गौणः। गौणेन च आत्मना भोजनादिवत् परमार्थकार्यं न शक्यते कर्तुं, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत्॥

अदृष्टविषयचोदनाप्रामाण्याद् आत्मकर्तव्यं गौणैः देहेन्द्रियात्मभिः क्रियत एव इति चेन्न; अविद्याकृतात्मत्वात्तेषाम्। न च गौणा आत्मानो देहेन्द्रियादयः; किं तर्हि। मिथ्याप्रत्ययेनैव अनात्मानः सन्त आत्मत्वमापाद्यन्ते, तद्भावे भावात् , तदभावे च अभावात्। अविवेकिनां हि अज्ञानकाले बालानां दृश्यते 'दीर्घोऽहम्' 'गौरोऽहम्' इति देहादिसङ्घाते अहंप्रत्ययः। न तु विवेकिनाम् 'अन्योऽहं देहादिसङ्घातात्' इति जानतां तत्काले देहादिसङ्घाते अहंप्रत्ययो भवति। तस्मात् मिथ्याप्रत्ययाभावे अभावात् तत्कृत एव, न गौणः। पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोः अग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यात्, न अगृह्यमाणविशेषसामान्ययोः। यत्तु उक्तम् 'श्रुतिप्रामाण्यात्' इति, तन्न; तत्प्रामाण्यस्य अदृष्टविषयत्वात्। प्रत्यक्षादिप्रमाणानुपलब्धे हि विषये अग्निहोत्रादिसाध्यसाधनसम्बन्धे श्रुतेः प्रामाण्यं, न प्रत्यक्षादिविषये, अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य। तस्मात् न दृष्टमिथ्याज्ञाननिमित्तस्य अहंप्रत्ययस्य देहादिसङ्घाते गौणत्वं कल्पयितुं शक्यम्। न हि श्रुतिशतमपि 'शीतोऽग्निरप्रकाशो वा' इति ब्रुवत् प्रामाण्यमुपैति। यदि ब्रूयात् 'शीतोऽग्निरप्रकाशो वा' इति, तथापि अर्थान्तरं श्रुतेः विवक्षितं कल्प्यम् , प्रामाण्यान्यथानुपपत्तेः, न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा। कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात् कर्तुरभावे श्रुतेरप्रामाण्यमिति चेन्न; ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः॥

कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरपि अप्रामाण्यप्रसङ्ग इति चेन्न; बाधकप्रत्ययानुपपत्तेः। यथा ब्रह्मविद्याविधिश्रुत्या आत्मनि अवगते देहादिसङ्घाते अहंप्रत्ययः बाध्यते, तथा आत्मन्येव आत्मावगतिः न कदाचित् केनचित् कथञ्चिदपि बाधितुं शक्या, फलाव्यतिरेकादवगतेः, यथा अग्निरुष्णः प्रकाशश्च इति। न च एवं कर्मविधिश्रुतेरप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेन उत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात्। मिथ्यात्वेऽपि उपायस्य उपेयसत्यतया सत्यत्वमेव स्याद् यथा अर्थवादानां विधिशेषाणां; लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम्। प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यं सिद्धं, प्रागात्मज्ञानाद् देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत्। यत्तु मन्यसे- स्वयम् अव्याप्रियमाणोऽपि आत्मा संनिधिमात्रेण करोति, तदेव मुख्यं कर्तृत्वम् आत्मनः; यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयम् अयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति, तथा सेनापतिः वाचैव करोति; क्रियाफलसम्बन्धश्च राज्ञः सेनापतेश्च दृष्टः। यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्म आत्मकृतं स्यात् , फलस्य आत्मगामित्वात्। यथा वा भ्रामकस्य लोहभ्रामयितृत्वात्



अव्यापृतस्यैव मुख्यमेव कर्तृत्वम् , तथा च आत्मनः इति। तत् असत्। अकुर्वतः कारकत्वप्रसङ्गात्। कारकमनेकप्रकारमिति चेन्न; राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात्। राजा तावत् स्वव्यापारेणापि युध्यते; योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वं, तथा जयपराजयफलोपभोगे। यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम्। तस्माद् अव्यापृतस्य कर्तृत्वोपचारो यः, सः गौणः इति अवगम्यते। यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां, तदा संनिधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत; यथा भ्रामकस्य लोहभ्रमणेन, न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते। तस्मात् संनिधिमात्रेण कर्तृत्वं गौणमेव। तथा च सति तत्फलसम्बन्धोऽपि गौण एव स्यात्। न गौणेन मुख्यं कार्यं निर्वर्त्यते। तस्मात् असदेव एतत् गीयते 'देहादीनां व्यापारेण अव्यापृतः आत्मा कर्ता भोक्ता च स्यात्' इति। भ्रान्तिनिमित्तं तु सर्वम् उपपद्यते, यथा स्वप्ने; मायायां च एवम्। न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते। तस्मात् भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमो न तु परमार्थ इति सम्यग्दर्शनाद् अत्यन्त एवोपरम इति सिद्धम्॥ (गी.भा.१८.६६)

##  पाठसारः

साधनस्य त्रयः पाठाः सन्ति। तत्र प्रथमपाठे साधनायाः सामान्यस्वरूपम् उक्तम्। द्वितीयपाठे निष्कामकर्मयोगः उपासना चेति विषयः साधकबाधकयुक्तिभिः उपन्यस्तः। द्वितीये पाठे उपासनां यावत् विषयः समापितः।

अस्मिन् तृतीये पाठे अधिकारी इति योऽबन्धः तस्यैव अवशिष्टभागः आदौ उपस्थापितः अस्ति। स चांशः साधनचतुष्टयमिति।

नित्यानित्यवस्तुविवेकः अत्र विवेकपदार्थः। इहामुत्रफलभोगविरागः वैराग्यपदवाच्यः। शमः दमः उपरतिः तितिक्षा श्रद्धा समाधानम् इति एतत् शमादिषट्कम्। मुमुक्षुत्वं मोक्षेच्छा। इति विवेकवैराग्यशमादिषट्कसम्पत्तिमुमुक्षुत्वानि साधनचतुष्टयपदाभिधेयानि। एतानि अस्मिन् पाठे क्रमशः विशदीकृतानि। एवम् अधिकारी इति अनुबन्धः उपसंहृतः।

ततः विषयसम्बन्धप्रयोजनानि इति त्रयोऽनुबन्धाः उपवर्णिताः।

इत्थं वेदज्ञः निर्मलः एकाग्रः साधनचतुष्टयसम्पन्नः एव अधिकारी बन्धनम् असहमानः गुरुम् विधिवत् उपसर्पति। ततश्च गुरुः तं वेदान्तम् श्रावयति। इतः परं श्रवणमनननिदिध्यासननि अनुतिष्ठति अधिकारी। यदि युक्तः अधिकारः अस्ति तर्हि तत्क्षणमेव ब्रह्मज्ञानम् उत्पद्यते। अन्यथा पूर्वपूर्वसाधनानि पुनः अनुष्ठेयानि। अत एव विविदिषाविद्वत्संन्यासभेदेन संन्यासस्य द्वैविध्यमापद्यते।





## पाठान्तप्रश्नाः

१. वेदान्ते अधिकारिणो विवेकः उपस्थाप्यः।

२. वेदान्ते अधिकारिणो वैराग्यं प्रतिपादयत।

३. शमः परिचेयः।

४. दमः विवरणीयः।

५. उपरतिः प्रकटनीया।

६. श्रद्धाम् स्पष्टीकुरुत।

७. समाधानं किमिति लेख्यम्।

८. मुमुक्षुत्वम् विशदयत।

९. साधनचतुष्टये कार्यकारणभावः वक्तव्यः।

१०. वेदान्तस्य विषयः स्पष्टीकर्तव्यः।

११. अनुबन्धेषु सम्बन्धः उपस्थाप्यः।

१२. वेदान्तस्य प्रयोजनं विशदयत।

१३. गुरूपसदनं लिखत।

१४. गुरुलक्षणानि लिखत।

१५. श्रवणं विशदयत।

१६. तात्पर्यनिर्णायकलिङ्गानि व्याख्यात।

१७. मननं विवृणुत।

१८. निदिध्यासनं प्रकटनीयम्।

१९. श्रवणादिकं प्रतिबन्धकानि कानि। कथं वा तन्निवृत्तिः।

२०. मनने तर्कस्य उपयोगितां लिखत।

२१. मनने प्रयुज्यमानाया उपपत्तेः का विशेषता।

२२. संशयविपर्ययौ प्रतिपादनीयौ।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् इति वेदान्ते अधिकारिणो विवेकः।



२. कर्मजन्यानां समेषामपि भोगानाम् अनित्यत्वात् दृष्टानुश्रविकभोग्यभ्यः नितरां विरतिः वैराग्यम्।

३. स्वर्गोऽपि लब्धश्चेत् यदा पुण्यक्षयः भवति तदा पुनः जन्मग्रहणं कर्तव्यम् भवति। तथाहि गीतावचन् - क्षीणे पुण्ये मर्त्यलोकं विशन्ति। अतः स्वर्गफलम् अनित्यम्।

**उत्तराणि-२**

४. शमः दमः उपरतिः तितिक्षा श्रद्धा समाधानम् इति एतत् शमादिषट्कम्। साधनचतुष्टयमध्ये इदं तृतीयं साधनम्।

५. अनुरूपः आत्मभावः सम्पत्तिः कथ्यते। अनुरूपः योग्यः। आत्मभावः आत्मनः स्वस्य भावः।

६. शमो हि श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः। मनसः शमः क्रियते। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ आद्यः शमः।

७. दमो हि बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। बाह्येन्द्रियाणि दमनीयानि। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ द्वितीयो दमः।

८. निवर्तितानाम् बाह्येन्द्रियाणाम् मनसः च श्रवणादिव्यतिरिक्तविषयेभ्यः उपरमणम् उपरतिः इति एकः अर्थः। द्वितीयोऽपि अर्थोऽस्ति। स हि विहितानां कर्मणां विधिना परित्यागः इति। श्रवणादिव्यतिरिक्तविषयेभ्यः उपरतिः। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ तृतीया उपरतिः।

९. तितिक्षा हि शीतोष्णादिद्वन्द्वसहिष्णुता। तितिक्षाविषयो हि शीतोष्णादिद्वन्द्वो बाह्यः, मानापमानादिद्वन्द्वः आभ्यन्तरः। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ चतुर्थी तितिक्षा।

१०. गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा। श्रद्धाविषयः गुरूपदिष्टवेदान्तवाक्यम्। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ पञ्चमी श्रद्धा।

११. निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। आत्मविषये श्रवण-मनन-निदिध्यासने तथा तस्य अनुगुणविषये गुरुशुश्रूषादौ अवस्थानम् एव समाधानम्। साधनचतुष्टये अन्यतमं साधनं शमादिषट्कसम्पत्तिः। तत्सम्पत्तौ अन्त्यं षष्ठं समाधानम्।

१२. मोक्तुम् इच्छा मुमुक्षा। संसारबन्धनाद् अर्थात् सूक्ष्मात् अहंकारात् आरभ्य स्थूलदेहपर्यन्तम् अज्ञानकल्पिताद् बन्धसहमूहाद् मुमुक्षा।

**उत्तराणि-३**

१३. वेदान्तस्य चत्वारः अनुबन्धाः। तेषु अन्यतमः विषयः। वेदान्तस्य विषयो हि जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयम्। यतो हि तत्रैव वेदान्तानां तात्पर्यमस्ति॥

१४. वेदान्तस्य चत्वारः अनुबन्धाः। तेषु अन्यतमः सम्बन्धः। प्रमेयप्रमाणयोः सम्बन्धः बोध्यबोधकभावसम्बन्धः। विषयः प्रमेयः। बोधकं च प्रमाणम् उपनिषद्।

१५. वेदान्तशास्त्रस्य प्रयोजनम् हि जीवब्रह्मैक्यरूपप्रमेयविषयकस्य अज्ञानस्य निवृत्तिः स्वस्वरूपानन्दावाप्तिश्च इति। प्रयोजनसिद्धिश्च आत्मज्ञानेन भवति।



१६. (ग)

१७. (ग)

१८. (ग)

१९. (ग)

२०. (क)

२१. (क)

२२. (क)

२३. (ख)

२४. (ख)

२५. (ग)

२६. (ग)

२७. (ग)

२८. (क)

२९. (ख)

३०. (ग)

३१. (क)

३२. (ख)

**उत्तराणि-४**

३३. उक्तलक्षणलक्षितः अधिकारी जननमरणात्मकं चक्रं परीक्ष्य तद्गतव्याध्यादिकं च विचिन्त्य संसारानलसन्तप्तः गुरुम् उपसर्पति॥

३४. गुरुः करुणया एव उपदिशति विधिवदुपसन्नाय।

३५. गुरुसमीपं गत्वा अधिकारी श्रवणादीनि अन्तरङ्गसाधनानि करोति।

३६. लब्धाधिकारः मुमुक्षुः गुरुसमीपं गत्वा गुरूपदेशानुगुणं ब्रह्मान्वेषणं कुर्यात्। शास्त्रविदपि स्वान्त्र्येण न कुर्यात्।

३७. पुण्यातिशय एव गुरुलाभे हेतुः।

३८. आचार्यवान् पुरुषो वेद॥ (छा.उ. ६.१४.२) इति श्रुतितः अवगम्यते यद् यस्य आचार्यः अस्ति स ब्रह्म जानाति। आचार्यं विना मार्गोदेष्टा नास्ति।

**उत्तराणि-५**

३९. श्रवणं नाम षड्विधलिङ्गैः अशेषवेदान्तानाम् अद्वितीयवस्तुनि तात्पर्यावधारणम्।

४०. तत्प्रतीतिजननयोग्यत्वम् एव तात्पर्यम्।

४१. तात्पर्यनिर्णायकानि लिङ्गानि षट्। तानि - १)उपक्रमोपसंहारौ, २)अभ्यासः, ३)अपूर्वता,



४)फलम्, ५)अर्थवादः, ६)उपपत्तिः चेति

४२. प्रकरणप्रतिपाद्यस्य अर्थस्य प्रकरणस्य आदौ अन्ते च उपपादनम् उपक्रमोपसंहारौ इति। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४३. प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनम् अभ्यासः। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४४. प्रकरणप्रतिपाद्यस्य अर्थस्य प्रमाणान्तरेण अविषयीकरणम् अपूर्वता इति। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४५. प्रकरणप्रतिपाद्यस्य आत्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनं फलम्। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४६. प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनम् अर्थवादः। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४७. प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः। तात्पर्यनिर्णायकेषु षट्सु लिङ्गेषु इदम् अन्यतमम्।

४८. (घ)

४९. (घ)

५०. (घ)

५१. (घ)

५२. (क)

५३. (क)

५४. (घ)

५५. (घ)

५६. (ख)

५७. (क)

५८. (ग)

५९. (क)

**उत्तराणि-६**

६०. मननं हि श्रुतस्य अद्वितीयवस्तुनः वेदान्तानुगुणयुक्तिभिः अनवरतम् अनुचिन्तनम्। अन्तरङ्गसाधानेषु अन्तर्भवति। मननेन प्रमेयगतासम्भावनाया निवृत्तिः भवति।

६१. विजातीयदेहादिप्रत्ययरहित-अद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः निदिध्यासनम् इति। तेन देहादिविपरीतभावना निवर्तते।

६२. (क)

# २४

# समाधिस्वरूपम्

## प्रस्तावना

धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः। दुःखस्य आत्यन्तिकनिवृत्तिः परमानन्दप्राप्तिश्च मोक्षः। अयञ्च मोक्षः बद्धस्य जीवस्य स्वस्वरूपाज्ञाननाशाद् भवति। स्वस्वरूपाज्ञानस्य नाशश्च अखण्डाकारचित्तवृत्त्या सञ्जायते। अखण्डाकारचित्तवृत्तिश्च निदिध्यासनेन सम्भवति। श्रवणेन शास्त्रगुरुवाक्यादीनां ब्रह्मणि तात्पर्यं बुद्ध्वा, मननेन च ब्रह्मविषयकविरुद्धयुक्तीनां खण्डनं विधाय ब्रह्मविषये असन्दिग्धा अविपर्यस्ता च बुद्धिः भवति। तादृशब्रह्मणि मनसः स्थैर्यसम्पादनमेव निदिध्यासनम्। इदं निदिध्यासनम् एव ब्रह्मसाक्षात्कारे कारणम्, आम्नातं च – "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति। अतो वेदान्ताचार्यैः निदिध्यासनम् महता यत्नेन प्रतिपादितम्। निदिध्यासनम् एव समाधिः। निदिध्यासनस्य आद्यावस्थायां सविकल्पकसमाधिः भवति, पक्वावस्थायां च निर्विकल्पकसमाधिः भवति। निर्विकल्पसमाधिरेव निदिध्यासनस्य परा काष्ठा। निर्विकल्पकसमाधौ सति अखण्डाकारा चित्तवृत्तिरुदेति। सा चित्तवृत्तिः जीवस्य स्वरूपविषयकमज्ञानं नाशयति स्वयमपि नश्यति। तेन च जीवः मुच्यते कर्मसंसारबन्धनात्। अतः अस्माभिरस्मिन् प्रबन्धे समाधेः स्वरूपम्, समाधेः आवश्यकता, समाधेः प्रकाराः इत्यादिविषये आलोचनं विधास्यते।



## उद्देश्यानि

एतं पाठं पठित्वा अध्येतारः अधःस्थविषयान् ज्ञास्यन्ति –

- मोक्षस्य उपायाः के, किं च तेषां स्वरूपम्।
- निदिध्यासनस्य विशेषस्वरूपम्।
- निदिध्यासनसमाध्योरभेदः।
- समाधेरावश्यकता।
- समाधेः भेदद्वयम्।
- चित्तवृत्तेः अज्ञाननाशकत्वम्।
- अखण्डाकारचित्तवृत्तिस्वरूपम् अज्ञाननाशप्रकारश्च।
- ज्ञेयानां वृत्तिविषयत्वं फलविषयत्वं च।

## २४.१) भूमिका

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति अद्वैतवेदान्तसिद्धान्तः। ब्रह्म नित्यशुद्धबुद्धमुक्तस्वरूपम्। अन्तःकरणोपहितं ब्रह्म एव जीवः, अन्तःकरणरूपस्य उपाधेः नाशाद् एव जीवत्वनाशः। जीवत्वनाशे सति कर्तृत्व-भोक्तृत्वादिसमुपजनितं दुःखादीनामपि नाशः। अयम् आत्यन्तिकदुःखनाश एव मोक्षः। एवंविधस्य मोक्षस्य प्राप्तये केचन उपायाः उपनिषत्सु समुपनिबद्धाः। आम्नातं च बृहदारण्यकोपनिषदि – "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति। स्वस्वरूपाज्ञाननाशाय मुमुक्षुणा श्रवणं मननं निदिध्यासनं च समाचरणीयानि। तेषु श्रवणं नाम – "वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया" इति। सर्वाणि वेदान्तवाक्यानि अद्वैतं ब्रह्म एव प्रतिपादयन्ति इति तात्पर्यावधारणाय विहिता मानसक्रिया एव श्रवणम्। मननं च शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मकज्ञानजनकमानसव्यापारः इति। गुरुशास्त्रवाक्यानां ब्रह्मणि तात्पर्यं बुद्ध्वा ब्रह्मविषये समापतितानां विरोधियुक्तीनां खण्डनाय विहिता मानसी क्रिया तावत् मननम्। मननेन शास्त्रावधारिते अर्थे दृढा मतिर्भवति। श्रवणमननाभ्यां दृढनिश्चिते अर्थे तद्भिन्नविषयेभ्यः अपकृष्टस्य मनसः स्थैर्यमेव निदिध्यासनम्। उच्यते च वेदान्तपरिभाषायां – "निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्य आत्मविषयकस्थैर्यानुकूलो मानसव्यापारः" इति। एवं श्रवण-मनन-निदिध्यासनानाम् अनुष्ठानेन मुक्तिः भवतीति वेदान्तिनां सिद्धान्तः। निदिध्यासनम् एव समाधिः। निदिध्यासन-समाध्योः स्वरूपविज्ञानं विना न हि तयोरैक्यम् अनैक्यं वा प्रतिपादयितुं शक्यते। अतः आदौ निदिध्यासनस्वरूपम् आलोच्यते।

## २४.२) निदिध्यासनस्वरूपम्

निदिध्यासनस्वरूपविषये उच्यते वेदान्तसारे – "विजातीय-देहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः निदिध्यासनम्" इति। जाग्रदवस्थायां विविधविषयाणां ज्ञानमस्माकं भवति। अज्ञाननाशाद् एव ज्ञानं जायते। चित्तवृत्तिः अज्ञानं नाशयति। अतः ज्ञानस्थले अवश्यं चित्तवृत्तिः उत्पद्यते। तथाहि घटज्ञानादनन्तरं पटज्ञानं, पटज्ञानादनन्तरं दण्डज्ञानमेवं विविधज्ञानानाम् उत्पत्तेः जाग्रदवस्थायां चित्तवृत्तयोऽपि क्षणानन्तरमेव भिद्यन्ते। तेन चेतसः स्थिरता न सम्भवति। यदि एकस्य घटस्यैव निरन्तरं ज्ञानं भवेत् तदा निरन्तरं घटविषयिणी चित्तवृत्तिर्भवति, तेन च चित्तस्य स्थिरता सम्भवति। यदा निरन्तरम् एकजातीया एव चित्तवृत्तिर्भवति तदा चित्तं विविधविषयेषु न गच्छतीति हेतोः चित्तं स्थिरम् इति कथ्यते।

निदिध्यासनं हि मोक्षजनकम्। अतो न हि घटपटादिविषये निरन्तरचित्तवृत्तिप्रवाहः निदिध्यासनं भवति।"तमेव विदित्वातिमृत्युमेति", "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतिषु ज्ञायते यद् उपनिषत्प्रतिपादितस्य ब्रह्मणः ज्ञानादेव मुक्तिर्भवति इति। अतः ब्रह्मविषयिणी निरन्तरचित्तवृत्तिरेव निदिध्यासनम्। सर्वैरेव इन्द्रियैः ब्रह्मणः ज्ञानं सम्भवति। यथा चक्षुषा अयं घटः अस्ति इति घटस्य ज्ञानं भवति। तस्मिन् ज्ञाने घटस्य सत्ता ज्ञायते। न हि घटज्ञानादनन्तरं कस्यचित् सन्देहो भवति – घटः अस्ति न वेति। सत्ता च ब्रह्मणः एव। ब्रह्मणि अखिलस्य प्रपञ्चस्य आरोपात् ब्रह्म अधिष्ठानम्, प्रपञ्चश्च



आरोप्यः। आरोपस्थले अधिष्ठानस्य अंशः आरोप्यज्ञाने भासते इत्येव नियमः। यथा शुक्तिरजतभ्रमस्थले इदं रजतमिति शुक्तौ विद्यमाना इदन्ता (सन्निकृष्टता) रजतज्ञाने रजताभेदेन ज्ञायते तथैव घटज्ञानस्थले ब्रह्मणः स्वरूपभूता सत्ता एव घटेन सह अभिन्नतया ज्ञायते। अतः चक्षुषा सत्ताग्रहणात् ब्रह्म ज्ञातमिति स्पष्टम्।

परन्तु एतेषु प्रापञ्चिकवस्तूनां ज्ञानस्थले न हि केवलम् अद्वितीयं ब्रह्म ज्ञायते, तद्विजातीयैः घटपटादिभिः सह तादात्म्येन ब्रह्म ज्ञातं भवति। एवं देहात्मबुद्धिस्थले देहेन सह अभेदेन आत्मा ज्ञायते। परन्तु विजातीयदेहघटादिभिः तादात्म्येन भासमानस्य ब्रह्मणः ज्ञानेन न मुक्तिः सम्भवति। तेभ्यः देहघटादिभ्यः पृथक्तया यदा अद्वितीयस्य ब्रह्मवस्तुनः ज्ञानं भवति तदा स्वस्वरूपज्ञानात् मोक्षो भवति। अतः न हि विजातीयवस्तुभिः तादात्म्येन भासमानस्य ब्रह्मणः विषये निरन्तरचित्तवृत्तिः निदिध्यासनम्, परन्तु विजातीयैः देहादिप्रत्ययैः रहितस्य अद्वितीयब्रह्मणः विषये निरन्तरं चित्तवृत्तिः भवति चेत् निदिध्यासनं सम्भवति। अतो देहादिभिः भेदेन विद्यमानस्य अद्वैतब्रह्मणः विषये निरन्तरं चित्तवृत्तिरेव निदिध्यासनम् इति वेदान्तसारकर्तुः सदानन्दयतेः अभिप्राय इति स्पष्टम्। आत्मविषयकस्थैर्यानुकूलः मानसः व्यापार एव निदिध्यासनम् इति वेदान्तपरिभाषाकारः ख्यापितवान्। वेदान्तपरिभाषाकारेण प्रतिपादितस्य अर्थस्य एव विस्तारः वेदान्तसारे परिदृश्यते। विद्यारण्यस्वामी पञ्चदशीग्रन्थे निदिध्यासनलक्षणं श्लोकेनाह –

**"ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत्।**
**एकतानत्वमेतद्धि निदिध्यासनमुच्यते॥" इति।**

श्रवणमननाभ्याम् अवधारिते निःसन्दिग्धे ब्रह्मविषये स्थापितस्य चित्तस्य यदेकतानत्वम् एकाकारवृत्तिप्रवाहः तदेव निदिध्यासनम् इति श्लोकार्थः। निदिध्यासनं च यावद्ब्रह्मज्ञानं न भवति तावदनुष्ठेयम्। एवं यावत्कालपर्यन्तं ब्रह्मणि श्रुतीनां तात्पर्यावधारणं न भवेत् तावत्कालपर्यन्तं श्रवणं, यावच्च ब्रह्मणि असन्दिग्धा अविपर्यस्ता च बुद्धिः नोदीयात् तावत् मननं कर्तव्यम्। न हि **"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** इत्यादिश्रुतिषु सकृच्छ्रवणं सकृत् मननं सकृत् निदिध्यासनं वा उपदिश्यते। एतादृशीनां श्रुतीनां नैकवारं दर्शनादेव इदं स्पष्टं भवति यत् श्रवण-मनन-निदिध्यासनादीनां ब्रह्मसाक्षात्कारं यावत् आवृत्तिः उपदिश्यते इति। यथा अवहननेन धान्येभ्यः तण्डूलाः संग्रहणीयाः चेत् यावत् तण्डूलानां निष्कासनं न भवति तावद् अवहननं विधीयते तथैव प्रकृतेऽपि यावन्न ब्रह्मज्ञानं भवति तावत् श्रवणादीनाम् आवृत्तिः विधातव्येति स्पष्टम्। उक्तं च तस्माद् भगवता बादरायणेन – 'आवृत्तिरसकृदुपदेशात्' इति।



## पाठगतप्रश्नाः १

१. कः परमपुरुषार्थः?

२. को नाम मोक्षः?



३. के मोक्षोपायाः?

४. अखण्डाकारचित्तवृत्तेः किं कार्यम्?

५. जीवस्य उपाधिः कः?

६. मोक्षसाधननिर्देशिका श्रुतिः का?

७. किं तावत् श्रवणम्?

८. किं नाम मननम्?

९. निदिध्यासनं नाम किम्?

१०. चित्तवृत्तिः किं करोति?

११. लौकिकज्ञानस्थले कथं ब्रह्म ज्ञायते?

१२. श्रवणादीनाम् आवृत्तिः कतिवारं विधेयम्?

## २४.३) समाधेः आवश्यकताविचारः

इदानीम् अयं प्रश्नः सुतरामुदेति यत् श्रवणमननाभ्याम् अनन्तरं निदिध्यासनस्य कथनात्, निदिध्यासनस्यैव ब्रह्मज्ञानं यावत् विधानात् कुत्र समाधेः अवसरः इति? यदि च निदिध्यासनाद् भेदेन समाधेः उपन्यासो भवति तर्हि द्रष्टव्यादिश्रुतेः अपलापः स्यात्। अत्रोच्यते, न हि समाधिः निदिध्यासनाद् व्यतिरिक्तः, येन श्रुतिविरोधः स्यात्। निदिध्यासनमेव समाधिः। अतः वेदान्तसारे निदिध्यासनस्वरूपकथनाद् अनन्तरमेव समाधिस्वरूपम् अकथयित्वा साक्षात् समाधिः द्विविध इति कथ्यते। निदिध्यासनमेव यदि समाधिः न स्यात् तर्हि निदिध्यासनात् परं सङ्गतिनिर्देशं विना साक्षात् समाधेः आलोचनम् अप्रासङ्गिकोपन्यास एव स्यात्। परन्तु निदिध्यासनसमाध्योः भेदाभावात् न तत्र अप्रासङ्गिकः उपन्यास आशङ्कनीयः।

विद्यारण्यस्वामिनस्तु निदिध्यासनलक्षणम् उक्त्वा ततो भिन्नतया समाधेः लक्षणमाहुः। तथाहि समाधिलक्षणं तेनैवं विधीयते –

**"ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्।**

**निवातदीपवच्चितं समाधिरभिधीयते॥" इति।**

श्लोकार्थो हि – ध्यातारं ध्यानं च परित्यज्य यदा चित्तं ध्येयगतमेव भवति, ध्येये च निरवच्छिन्नतया निवातदीवत् तिष्ठति, सा स्थितिः समाधिः इत्युच्यते। अत्र समाधिपदेन निर्विकल्पकसमाधिः एव उपदिष्टः। शङ्कराचार्या अपि विवेकचूडामणौ निदिध्यासनाद् भेदेन समाधिमाहुः। उच्यते च विवेकचूडामणौ –

**"श्रुतेः शतगुणं विद्यान्मननं मननादपि।**

**निदिध्यासं लक्षगुणमनन्तं निर्विकल्पकम्॥" इति।**



अत्रायं श्लोकार्थः – श्रुतेः शतगुणं गुरुत्वावहं भवति मननं, मननाद् लक्षगुणं गुरुत्वावहं भवति निदिध्यासनं, अनन्तं गुरुत्वावहः च निर्विकल्पकसमाधिः इति। किञ्च, निर्विकल्पकसमाधिः एव मोक्षं प्रति कारणमिति भगवता शङ्कराचार्येण प्रतिपाद्यते-

**"अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा।**

**समाधिनाऽविकल्पेन तदाद्वैतात्मदर्शनम्॥" इति।**

अत्रार्थो हि – यदा निर्विकल्पकसमाधिना अद्वैतस्य आत्मनः ज्ञानं भवति तदा एव अज्ञानरूपहृदयग्रन्थीनां निःशेषं विलयो भवति इति।

इदानीं विद्यारण्यवाक्यात् शाङ्करवाक्यात् च इदम् आयातं यत् समाधिः नाम निर्विकल्पकसमाधिः, अस्य समाधेरुदये च अज्ञाननाशात् मुक्तिः सम्भवति इति। "निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते" इत्यादिविवेकचूडामणिवचनाच्च इदं ज्ञायते यत् अत्र निदिध्यासनपदेन साधारणतया सविकल्पकसमाधिः एव समुपदिश्यते। ननु निदिध्यासनसमाध्योः यदि अभेदः तर्हि कथं तयोः निदिध्यासनपदेनैव उपदेशः विद्यारण्यैः शङ्कराचार्यैः वा न विधीयते इति चेदुच्यते समाधिस्तु निदिध्यासनविशेषः। विशेषं सामान्यात् अतिरिच्यते, अतः निर्विकल्पसमाधेः गोबलीवर्दन्यायेन वशिष्ठब्राह्मणन्यायेन वा पृथक्तया उपदेशो विहितः। निदिध्यासनस्य पक्वावस्था हि निर्विकल्पसमाधिः। उच्यते च पञ्चदशीटीकाकारेण रामकृष्णेन – "तस्यैव निदिध्यासनस्य परिपाकदशारूपं समाधिमाह" इति। आम्रं पक्वं भवति चेत् यथा न तत् पनसमिति कथ्यते तथैव निदिध्यासनस्य पक्वावस्था अपि निदिध्यासनान्तर्गता एव। अतो समाधिना ब्रह्मलाभे न श्रुतिविरोधः, ब्रह्मज्ञानं यावत् निदिध्यासनस्य आवृत्तिविधानात्।

यतः निर्विकल्पसमाधेरेव अज्ञाननाशः प्रतिपाद्यते, अतः निर्विकल्पसमाधेः तत्र च द्वारभूतस्य सविकल्पसमाधेः स्वरूपं सुतरामालोचनीयम्।

## २४.४) समाधिद्वैविध्यम्

समाधिः द्विविधः सविकल्पकः निर्विकल्पकश्च। उभयविधसाधारणं समाधिलक्षणं तावदुच्यते वेदान्तसारटीकायां सुबोधिन्यां नृसिंहसरस्वतीस्वामिभिः – "व्युत्थान-निरोधसंस्कारयोः अभिभवप्रादुर्भावे सति चित्तस्य एकाग्रतापरिणामः समाधिः" इति। चित्तस्य हि धर्मद्वयम् – प्रत्ययः संस्कारश्च। प्रत्ययरूपेण चित्तस्य उत्थानमेव व्युत्थानम्, तच्च प्रत्ययात्मकम्। चित्तस्य निरुद्धावस्थां व्यतिरिच्य क्षिप्त-मूढ-विक्षिप्तैकाग्र्यावस्थाः व्युत्थानरूपा एव। ऐकाग्र्यावस्थायां जायमानः सविकल्पकोऽपि निर्विकल्पकदृष्ट्या व्युत्थानरूप एव। तस्य व्युत्थानस्य संस्कारा हि व्युत्थानसंस्काराः। चित्तस्य निरोधस्य अभ्यासेन जायमानः संस्कारः निरोधसंस्कारः। व्युत्थानसंस्कारस्य हि निरोधसंस्कारेण अभिभवः, न हि प्रत्ययेन संस्कारस्य अभिभवः सम्भवति। एवं चित्तस्य व्युत्थानसंस्कारस्य अभिभवे निरोधसंस्कारस्य प्रादुर्भावे च सति चित्तस्य या एकाग्रतया स्थितिः, सा एव समाधिः। एवं चित्तस्य ज्ञेयात्मना निश्चलावस्थानं समाधिरिति तात्पर्यं रामतीर्थाचार्यस्य अभिप्रेतम्।



सविकल्पकः समाधिरेव योगप्रोक्तः सम्प्रज्ञातसमाधिः, निर्विकल्पकश्च असम्प्रज्ञातसमाधिः। परन्तु योगप्रोक्तस्य असम्प्रज्ञातसमाधेः वेदान्तप्रतिपादितस्य निर्विकल्पकसमाधेश्च सन्ति भेदाः। ते चाग्रे आलोचयिष्यन्ते। इदानीं सविकल्पक-निर्विकल्पकसमाध्योः स्वरूपमालोच्यते।



## पाठगतप्रश्नाः २

१३. विद्यारण्यस्वामिना समाधिलक्षणं किं विहितम्?

१४. व्युत्थानावस्था नाम का?

१५. व्युत्थानसंस्कारस्य अभिभवः कथं भवति?

१६. सविकल्पकसमाधेः योगदर्शने किं नाम?

१७. समाधिः कतिविधः, कौ च तौ?

## २४.५) सविकल्पकः समाधिः

विकल्पो नाम भेदः। यत्र समाधौ विकल्पभाने सत्यपि चित्तं ज्ञेयब्रह्मविषये एकाग्रं भवति सः सविकल्पकः समाधिः। अयं घटः इति घटज्ञानम्। अत्र ज्ञाने घटः ज्ञेयः। अहं हि ज्ञाता। एवं ज्ञानस्थले एतत् पुटत्रयं सुतरां तिष्ठति। सविकल्पकसमाधौ एषा त्रिपुटी विद्यते, ज्ञेयाकारा निरवच्छिन्नचित्तवृत्तयश्च भवन्ति। उच्यते च वेदान्तसारे सविकल्पकसमाधिविषये – "तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अवस्थानम्" इति। तदा मृन्मयगजादिभाने अपि मृद्भानवत् द्वैतभाने अपि अद्वैतं वस्तु भासते" इति। यत्र समाधौ ज्ञातृज्ञानज्ञेयरूपविकल्पाः भासन्ते, न तेषां लयो भवति, किञ्च, अद्वितीयब्रह्मविषयिणी निरवच्छिन्ना चित्तवृत्तिरुदेति स सविकल्पकः समाधिः।

ननु समाधिस्तावत् सकलभेदनिरासपूर्वकम् अद्वैतब्रह्मवस्तुसाक्षात्काराय प्रवर्तितः, परन्तु सविकल्पकसमाधौ ज्ञातृज्ञानादिभेददर्शनात् कथम् अद्वैतं ब्रह्मवस्तु भासेत इति चेदुच्यते, सविकल्पकसमाधौ ज्ञातृज्ञानभेदस्य ज्ञाने सत्यपि अद्वैतं ब्रह्म भासते। यथा सुवर्णकुण्डलादिज्ञाने सति तदुपादानस्य सुवर्णस्य ज्ञानं भवति, यथा वा मृन्मयगजादिज्ञाने सति तदुपादानभूताया मृत्तिकाया ज्ञानं भवति तथैव ज्ञातृ-ज्ञानादीनाम् ब्रह्मविवर्तत्वात् वाचारम्भणमात्रत्वात् ज्ञातृज्ञानादिभाने सति अपि अद्वैतं ब्रह्मवस्तु एव भासते। "सर्वं खल्विदं ब्रह्म", "ऐतदात्म्यमिदं सर्वम्" – इत्यादिश्रुतेः सर्वेषु विषयेषु आत्मानुभवे सति दग्धपटन्यायेन प्रपञ्चभाने सत्यपि अद्वैतं वस्तु भासते। उच्यते च शङ्कराचार्येण उपदेशसाहस्र्यां -

**"दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्।**

**अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तमोम्॥" इति।**



अस्यार्थो हि – द्रष्टृस्वरूपं, गगनेन तुल्यं, श्रेष्ठम्, एकरूपेण प्रकाशमानम्, जन्मरहितम्, सकलोपाधिशून्यं, कूटस्थम्, असङ्गं, सर्वव्यापि, सदा विमुक्तं च यत् अद्वयं वस्तु तद् अहमेवेति। उच्यते च श्रीमद्भगवद्गीतायाम् -

**"वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।" इति च।**

सविकल्पकसमाधौ त्रिपुटी विद्यते, अद्वैतब्रह्माकाराकारिता चित्तवृत्तिश्च विद्यते। अयमेव समाधिः योगशास्त्रे सम्प्रज्ञातसमाधिः इत्युच्यते। सम्प्रज्ञायते अस्मिन् ज्ञेयतत्त्वम् इति सम्प्रज्ञातः। अस्मिन् समाधौ ज्ञेयतत्त्वं सम्यक् बुद्ध्यारूढं भवति, तस्मादेवम् अभिधानम्।

## २४.६) निर्विकल्पकः समाधिः

सर्वविकल्पलये सति ज्ञेयाकारा चित्तवृत्तिः यदा भवति सा हि निर्विकल्पकः समाधिरित्युच्यते। उच्यते च वेदान्तसारे सदानन्दयोगीन्द्रेण – "निर्विकल्पकः तु ज्ञातृज्ञानादिविकल्पलयापेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अतितराम् एकीभावेन अवस्थानम्" इति। अस्मिन् समाधौ ज्ञातृज्ञानज्ञेयादिभेदबुद्धेः लयो भवति, अखण्डाकाराकारिता चित्तवृत्तिश्च अवतिष्ठते। निर्विकल्पकसमाधौ चित्तवृत्तिसत्त्वेऽपि तस्य अवभासो न भवति, अद्वितीयब्रह्मवस्तुमात्रम् अवभासते। यथा लवणजलयोः मिश्रणे सति न तयोः भेदो गृह्यते जलमात्रं गृहीतं भवति, तथैव निर्विकल्पकसमाधौ अद्वितीयब्रह्माकाराकारितायाः चित्तवृत्तेः अवभासो न भवति, केवलम् अद्वितीयं ब्रह्म एव अवभासते।

योगदर्शने प्रतिपादितात् असम्प्रज्ञातसमाधेः निर्विकल्पकसमाधेरस्ति किञ्चिद्वैलक्षण्यम्। तथाहि, असम्प्रज्ञातसमाधौ चित्तवृत्तयः तिरोभवन्ति, संस्कारमात्रम् अवशिष्यते। निर्विकल्पकसमाधौ तु न हि सर्वासां चित्तवृत्तीनां तिरोभावो भवति, अखण्डाकारा ब्रह्मविषयिणी चित्तवृत्तिरज्ञायमाना सती अवतिष्ठते इत्यनयोर्भेदः। उच्यते च पञ्चदशीकारेण विद्यारण्यस्वामिना –

**"वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः।**
**स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात्॥" इति।**

'एतावन्तं कालं समाहितोऽभूवम्' इत्यादि-समाहितोत्थित-परामशात् समाधौ अज्ञाततया वृत्तिसद्भावः अनुमीयते।

निर्विकल्पकसमाधेः सुषुप्तिमूर्च्छादीनाञ्च अस्ति भेदः। सुषुप्तौ अपि चित्तवृत्तेः अभानं भवति, समाधौ अपि तथा, परन्तु सुषुप्तौ न हि चित्तवृत्तिः विद्यते। निर्विकल्पकसमाधौ तु चित्तवृत्तिर्वर्तते परन्तु तस्याः भानं न भवति इति समाधिसुषुप्त्योर्भेदः। उच्यते च वेदान्तसारे –

"ततश्च तस्य सुषुप्तेश्च अभेदशङ्का न भवति, उभयत्र वृत्त्यभाने समाने अपि तत्सद्भावासद्भावमात्रेण अनयोः भेदोपपत्तेः" इति।





## पाठगतप्रश्नाः ३

१८. समाधेः साधारणं लक्षणं किम्?

१९. त्रिपुटी नाम का?

२०. सविकल्पकसमाधिः कः?

२१. विकल्पभानेऽपि कथं सविकल्पकसमाधौ अद्वैतं ब्रह्म भासते?

२२. ब्रह्मणः सर्वात्मकत्वद्योतिकाः श्रुतयः काः?

२३. कदा निर्विकल्पकः समाधिः भवति?

२४. वेदान्तसारे निर्विकल्पकसमाधेः स्वरूपविषये किमुक्तम्?

२५. निर्विकल्पकसमाधौ चित्तवृत्तिस्तिष्ठति न वा?

२६. निर्विकल्पकसमाधेः असम्प्रज्ञातसमाधेश्च को भेदः?

२७. निर्विकल्पकसमाधेः सुषुप्तेश्च को भेदः?

२८. समाधौ वृत्तेः स्थितिविषये विद्यारण्यस्वामिना किमुक्तम्?

## २४.७) अखण्डाकारचित्तवृत्तिः अज्ञाननाशश्च

शुद्धं ब्रह्म न हि अज्ञानं नाशयति। चित्तवृत्त्युपहितं चैतन्यमेव अज्ञानं नाशयति। चित्तवृत्तिर्नाम चित्तस्य विषयाकारः परिणामः। तथाहि घटज्ञानस्थले चक्षुरिन्द्रियेण सह घटस्य सम्बन्धो भवति। तदा चक्षुरिन्द्रियद्वारा मनः घटेन सह संयुनक्ति। तेन च मनः घटाकारेण परिणमते। मनसः अयं परिणाम एव वृत्तिरित्युच्यते। यथा तडागात् जलं कुल्याद्वारा केदारान् प्रविशति, केदारान् प्रविश्य च केदाराकारं धत्ते, तथैव मनः चक्षुरिन्द्रियद्वारा विषयदेशं गच्छति विषयाकारं च धत्ते। यस्मिन् विषये चित्तवृत्तिर्भवति तद्विषयकम् अज्ञानं नश्यति। तथाहि यदि घटाकारा चित्तवृत्तिर्भवति तर्हि घटविषयकम् अज्ञानं नश्यति घटश्च प्रकाशते, यदा च पटाकारा चित्तवृत्तिर्भवति तदा पटविषयकम् अज्ञानं नश्यति पटश्च प्रकाशितो भवति। येषां च वस्तूनाम् आकारो नास्ति तेषु विषयेषु संलग्नस्य चित्तस्य कथं तदाकारता स्यादिति प्रश्नश्चेत् उच्यते यत् या अन्तःकरणवृत्तिः यद्विषयकमज्ञानं नाशयति सा अन्तःकरणवृत्तिः तदाकारा इति बोध्यम्। तथाहि या अन्तःकरणवृत्तिः घटविषयकम् अज्ञानं नाशयति सा घटाकारा, या अन्तःकरणवृत्तिः पटविषयकम् अज्ञानं नाशयति सा पटाकारा, एवमन्यत्रापि ऊहनीयम्। तडागकेदारादि उदाहरणं तु बालबोधाय।

घटादयः ब्रह्मणि अध्यस्ताः। न हि घटे अज्ञानं तिष्ठति। घटो हि अज्ञानकार्यम्, अज्ञानमेव तत्। अज्ञानं तु सर्वदा ब्रह्मणि एव तिष्ठति। घटः ब्रह्मणि अध्यस्तः, घटावच्छिन्ने ब्रह्मणि हि अज्ञानं वर्तते। घटो न प्रकाशते इति उच्यते चेत् घटावच्छिन्ने चैतन्ये अज्ञानं वर्तते इति प्रतीयते। तस्य च अज्ञानस्य विषयो भवति घटः। घटाकारा अन्तःकरणवृत्तिः तावत् घटावच्छिन्ने ब्रह्मणि विद्यमानम् अज्ञानं नाशयति। अज्ञानावरणस्य नाशात् घटावच्छिन्नं चैतन्यं प्रकाशितं भवति। चैतन्यं हि प्रकाशस्वरूपं, सदा



प्रकाशमानम्। यथा ज्वलति दण्डदीपे यदि गाढं मालिन्यं स्यात् तदा दीपालोकः आवृतो भवति, यदा च मालिन्यं परिष्कृतं भवति तदा दीपप्रकाशः ज्ञायते; तथैव सर्वदा प्रकाशमाने चैतन्ये अज्ञानावरणकारणात् तस्य प्रकाशो नैव ज्ञायते परन्तु अन्तःकरणवृत्त्या अज्ञानावरणस्य नाशे तु पुनः चैतन्यस्य प्रकाशः भवति। यदा च अज्ञानेन अनावृतं घटावच्छिन्नं चैतन्यं प्रकाशितं भवति तदा घटावच्छिन्नचैतन्ये विद्यमानः घटः अपि प्रकाशितो भवति। दृश्यते च लोके दीपः प्रकाशते चेत् तत्सन्निधौ विद्यमानानां द्रव्याणामपि प्रकाशो भवति। अतः घटाकारा अन्तःकरणवृत्तिः घटावच्छिन्नचैतन्यस्य आवरकम् घटविषयकम् अज्ञानं दूरीकरोति, तेन च घटावच्छिन्नं चैतन्यं प्रकाशते। तेन चैतन्येन विषयीकृतः घटः अपि प्रकाशमानघटावच्छिन्नचैतन्ये अध्यस्तत्वात् प्रकाशितो भवति। अतो ब्रह्मभिन्नो घटादिः चित्तवृत्तेः विषयो भवति, अज्ञाननाशेन अनावृतस्य चैतन्यस्यापि विषयो भवति। अनावृतं चैतन्यं शास्त्रेषु फलशब्देन कथ्यते। अतो घटादयः वृत्तिविषयाः फलविषयाः च भवन्ति। उच्यते च पञ्चदश्यां विद्यारण्याचार्येण –

**"बुद्धितत्स्थचिदाभासौ द्वावेव व्याप्नुतो घटम्।**

**तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥" इति।**

एवं जीवस्य स्वरूपं ब्रह्म अज्ञानेन आवृतं, तस्मादेव जीवाः स्वेषां नित्यशुद्धबुद्धमुक्तस्वरूपतां न जानन्ति। ब्रह्मविषयकस्य अज्ञानस्य नाशाय ब्रह्मविषयिणी चित्तवृत्तिः अपेक्षिता। सा च चित्तवृत्तिः निर्विकल्पकसमाधौ समुदेति। एषा एव चित्तवृत्तिः शास्त्रेषु अखण्डाकारचित्तवृत्तिः इत्युच्यते। ब्रह्म निरवयवम्, अवयवविशिष्टस्य अवयवानाम् उपचयापचयवशात् वृद्धिनाशौ स्तः। ब्रह्मणो नित्यत्वात् निरवयवत्वात् न हि वृद्धिनाशौ सम्भवतः। अतः ब्रह्म अखण्डम्। तस्मादेव ब्रह्माकारचित्तवृत्तिः अखण्डाकारचित्तवृत्तिः इत्यपि उच्यते। एवं निर्विकल्पकसमाधौ यदा ब्रह्माकारा चित्तवृत्तिरुदेति तदा ब्रह्मविषयकम् अज्ञानं नश्यति, स्वयंप्रकाशं ब्रह्म च आवरणनाशात् प्रकाशितं भवति। ब्रह्मणः प्रकाशार्थं तु अज्ञाननाशमात्रम् अपेक्षते, अतो ब्रह्म चित्तवृत्तेरेव विषयो भवति। ब्रह्मणः स्वप्रकाशत्वात् न हि ब्रह्म फलविषयो भवति। उच्यते च पञ्चदश्यां विद्यारण्याचार्येण -

**"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।" इति।**

**"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।" इति च।**

एवं निर्विकल्पकसमाधौ अखण्डाकारचित्तवृत्तेरुदयात् ब्रह्मविषयकम् अज्ञानं नश्यति, अखण्डाकारचित्तवृत्तेरपि अज्ञानकार्यत्वात् तदपि विनश्यति। तदा जीवः नित्यशुद्धबुद्धमुक्तस्वभावं स्वरूपभूतं ब्रह्म एव भवति, यथा घटनाशे घटाकाशः महाकाश एव भवति तद्वत्।



## पाठगतप्रश्नाः ४

२९. किंविधं चैतन्यम् अज्ञानं नाशयति?

३०. चित्तवृत्तिर्नाम का?

३१. चित्तस्य विषयाकारता नाम का?

३२. ब्रह्मभिन्नविषयाणां प्रकाशार्थं किमपेक्षितम्?

३३. ब्रह्मणः प्रकाशार्थं ब्रह्मणः फलविषयत्वमपेक्षितं न वा?



## पाठसारः

"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिश्रुतिषु श्रवण-मनन-निदिध्यासनैः ब्रह्मसाक्षात्कार उपदिश्यते श्रुतिषु। श्रवणं हि सर्वेषाम् उपनिषदां ब्रह्मणि एव तात्पर्यम् इति अवधारणानुकूला मानसी क्रिया। मननं तावत् ब्रह्मविषये समापतितानां विरुद्धयुक्तीनां खण्डनानुकूला मानसी क्रिया। एवं श्रवणमननाभ्यां दृढनिश्चिते ब्रह्मणि तद्भिन्नविषयेभ्यः अपकृष्टस्य मनसः स्थैर्यमेव निदिध्यासनम्। निदिध्यासनेन अखण्डाकारचित्तवृत्तेः उदयात् ब्रह्मविषयकम् अज्ञानं नश्यति, जीवश्च स्वस्वरूपज्ञानात् मुच्यते।

निदिध्यासनम् एव समाधिः। निदिध्यासनस्य प्राथमिकी अवस्था तावत् सविकल्पकसमाधिः, परा काष्ठा तावत् निर्विकल्पकसमाधिः। सविकल्पकः समाधिर्हि योगदर्शनप्रोक्तः सम्प्रज्ञातसमाधिः, निर्विकल्पकसमाधिश्च योगदर्शनप्रोक्तः असम्प्रज्ञातः समाधिः। सविकल्पकसमाधिर्हि ज्ञातृज्ञानादिविकल्पसत्त्वेऽपि ब्रह्मणि तदाकाराकारितायाः चित्तवृत्तेः अवस्थानम्। सविकल्पकसमाधौ ज्ञातृ-ज्ञान-ज्ञेयरूपा त्रिपुटी तिष्ठति, ब्रह्माकारा अबाधितनिरवच्छिन्नचित्तवृत्तिश्च उदेति। निर्विकल्पकसमाधिः हि सर्वविकल्पलये सति ब्रह्मणि तदाकाराकारितायाः चित्तवृत्तेः एकीभावेन अवस्थानम्। निर्विकल्पकसमाधौ हि अखण्डब्रह्माकारा चित्तवृत्तिस्तिष्ठति, परन्तु तस्याः वृत्तेः अवभासो न भवति। योगदर्शनप्रोक्तात् असम्प्रज्ञातसमाधेः निर्विकल्पकसमाधेः अयमेव भेदो यत् असम्प्रज्ञातसमाधौ न हि चित्तवृत्तेः स्थितिः अङ्गीक्रियते, निर्विकल्पकसमाधौ चित्तवृत्तिः राजते एव।

घटादीनां प्रकाशः घटाकारान्तःकरणवृत्त्या घटविषयकाज्ञाननाशे सति सम्भवति। घटविषयकम् अज्ञानं घटावच्छिन्नचैतन्ये विद्यते। चक्षुषा घटसंयोगे सति अन्तःकरणेन सह घटस्य सम्बन्धवशात् घटाकारान्तःकरणवृत्तिः उदेति, सा च अन्तःकरणवृत्तिः घटावच्छिन्नचैतन्यस्यावरकम् अज्ञानं नाशयति। तेन च घटावच्छिन्नचैतन्यं प्रकाशते, प्रकाशमानं च चैतन्यं स्वस्मिन् अध्यस्तं घटमपि प्रकाशयति। अतो घटो यथा अन्तःकरणवृत्तेः विषयो भवति, तथा अनावृतस्य प्रकाशमानस्य चैतन्यस्यापि (फलस्यापि) विषयो भवति। अतो घटः वृत्तिविषयः फलविषयश्च भवति। स्वरूपभूतचैतन्ये ब्रह्मणि विद्यमानस्य अज्ञानस्य नाशाय अखण्डाकारचित्तवृत्तिः अपेक्षते, अज्ञाननाशे सति ब्रह्मणः प्रकाशः स्वत एव भवति, ब्रह्मणः स्वप्रकाशत्वात्। अतो ब्रह्म वृत्तिविषयो भवति, परन्तु फलविषयो न भवति।

निर्विकल्पकसमाधौ अखण्डाकारचित्तवृत्तेरुदये सति अज्ञानबन्धनाशात् जीवो मुच्यते। जीवस्तदा स्वरूपे प्रतिष्ठितो भवति। प्रारब्धकर्मणि विद्यमाने सति मुक्तोऽपि जीवः शरीरनाशपर्यन्तं शरीरे निर्लिप्ततया विद्यमानस्तिष्ठति, सा च अवस्था जीवन्मुक्तिः इत्युच्यते। प्रारब्धकर्मनाशे तु शरीरनाशात् विदेहमुक्तिः सम्भवति।





## पाठान्तप्रश्नाः

१. निदिध्यासनमूर्च्छयोः को भेदः?

२. सविकल्पकसमाधेः निर्विकल्पकसमाधेश्च कथं निदिध्यासने अन्तर्भावः?

३. सम्प्रज्ञातपदस्य कोऽर्थः?

४. अखण्डाकारवृत्तेः उदये सति किं भवति?

५. का नाम जीवन्मुक्तिः?

६. कदा जीवस्य विदेहमुक्तिः भवति?

७. ब्रह्मणः वृत्तिविषयत्वं किमर्थम् अपेक्षितम्?

८. ब्रह्मणः सर्वव्यापकत्वद्योतकं भगवद्गीतावाक्यं किम्?

९. सविकल्पकः समाधिः कस्यां चित्तभूमौ जायते?

१०. निर्विकल्पकसमाधिः कस्यां चित्तभूमौ जायते?



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि-१

१. मोक्ष एव परम पुरुषार्थः।

२. आत्यन्तिकदुःखनिवृत्तिः परमानन्दप्राप्तिश्च मोक्षः।

३. श्रवण-मनन-निदिध्यासनानि हि मोक्षोपायाः।

४. अखण्डाकारा चित्तवृत्तिः जीवस्य स्वस्वरूपविषयकम् अज्ञानं नाशयति।

५. अन्तःकरणमेव जीवोपाधिः।

६. "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति।

७. वेदान्तानाम् अद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया।

८. शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनकः मानसः व्यापारः मननम्।

९. निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्य आत्मविषयकस्थैर्यानुकूलो मानसव्यापारः।

१०. चित्तवृत्तिः अज्ञानं नाशयति।

११. लौकिकज्ञानस्थले घटपटादिभिः सह तादात्म्येन ब्रह्म ज्ञातं भवति।



१२. यावन्न ब्रह्मज्ञानं भवति तावत् श्रवणादीनाम् आवृत्तिर्विधेया।

### उत्तराणि- २

१३. ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्।
निवातदीपवच्चितं समाधिरभिधीयते॥ इति।

१४. क्षिप्त-मूढ-विक्षिप्तावस्था हि चित्तस्य व्युत्थानावस्थाः।

१५. निरोधसंस्कारेण व्युत्थानसंस्कारस्य अभिभवो भवति।

१६. सम्प्रज्ञातसमाधिः इति।

१७. समाधिः द्विविधः सविकल्पकः समाधिः निर्विकल्पकः समाधिश्चेति।

### उत्तराणि- ३

१८. व्युत्थाननिरोधसंस्कारयोः अभिभवप्रादुर्भावे सति चित्तस्य एकाग्रतापरिणामः समाधिः इति।

१९. ज्ञाता ज्ञानं ज्ञेयः इत्येतेषां त्रयाणां समाहार एव त्रिपुटी।

२०. सविकल्पकसमाधिः नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अवस्थानम्।

२१. यथा सुवर्णकुण्डलादिज्ञाने सति तदुपादानस्य सुवर्णस्य ज्ञानं भवति, यथा वा मृन्मयगजादिज्ञाने सति तदुपादानभूताया मृत्तिकाया ज्ञानं भवति तथैव ज्ञातृ-ज्ञानादीनाम् ब्रह्मविवर्तत्वात् वाचारम्भणमात्रत्वात् ज्ञातृज्ञानादिभाने सति अपि अद्वैतं ब्रह्मवस्तु एव भासते।

२२. 'ऐतदात्म्यमिदं सर्वं', 'सर्वं खल्विदं ब्रह्म' इत्याद्याः।

२३. सर्वविकल्पलये सति ब्रह्माकारा चित्तवृत्तिः यदा भवति तदा निर्विकल्पकः समाधिः भवति।

२४. निर्विकल्पकः तु ज्ञातृज्ञानादिविकल्पलयापेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाः चित्तवृत्तेः अतितराम् एकीभावेन अवस्थानम् इति।

२५. निर्विकल्पकसमाधौ चित्तवृत्तिस्तिष्ठति परन्तु तस्य अवभासो न भवति।

२६. असम्प्रज्ञातसमाधौ चित्तवृत्तयः तिरोभवन्ति, संस्कारमात्रम् अवशिष्यते। निर्विकल्पकसमाधौ तु न हि सर्वासां चित्तवृत्तीनां तिरोभावो भवति, अखण्डाकारा ब्रह्मविषयिणी चित्तवृत्तिरज्ञायमाना सती अवतिष्ठते इत्यनयोर्भेदः।

२७. निर्विकल्पकसमाधौ चित्तवृत्तिस्तिष्ठति परन्तु तस्य भानं न भवति, परन्तु सुषुप्तौ चित्तवृत्तिः न तिष्ठति चित्तवृत्तेश्च भानमपि न भवति इति भेदः।

२८. वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात्॥ इति।

### उत्तराणि- ४

२९. चित्तवृत्त्युपहितं चैतन्यमेव अज्ञानं नाशयति।

३०. चित्तस्य विषयाकारः परिणाम एव चित्तवृत्तिः।



३१. या अन्तःकरणवृत्तिः यद्विषयकम् अज्ञानं नाशयति सा अन्तःकरणवृत्तिः तद्विषयाकारा इति बोध्यम्।

३२. ब्रह्मभिन्नविषयाणां वृत्तिविषयत्वं फलविषयत्वं चापेक्षिते।

३३. ब्रह्मणः प्रकाशार्थं वृत्तिविषयत्वमात्रम् अपेक्षितम्। ब्रह्मणः स्वप्रकाशत्वात् फलविषयत्वं न सम्भवति।

॥ इति चतुर्विंशः पाठः ॥



# २५

# समाधेरङ्गानि अन्तरायाश्च

## प्रस्तावना

निर्विकल्पकसमाधौ अखण्डाकारचित्तवृत्तेरुदये सति अज्ञानं नश्यति। यथा कतकरेणुः जलस्थं मलं विनाश्य स्वयमपि लीयते तथैव अखण्डाकारचित्तवृत्तिः अज्ञानं विनाश्य स्वयमपि अज्ञानकार्यत्वात् नश्यति। निर्विकल्पकसमाधेरुदये अज्ञाननाशे सत्येव मोक्षः सम्भवति। न हि श्रवण-मननाभ्यामेव निर्विकल्पकसमाधिः सम्भवति। निर्विकल्पकसमाधेः समुदयार्थं काचिद् योग्यता अपेक्षते, सा च अष्टानाम् अङ्गानाम् आचरणेन सम्भवति। निर्विकल्पकसमाधेः एतानि अष्टौ अङ्गानि तावत् यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः। **श्रेयांसि बहुविघ्नानि** इति हि प्राज्ञानां वचनम्। निर्विकल्पकसमाधेरपि सन्ति विघ्नाः। ते हि लय-विक्षेप-कषाय-रसास्वादरूपाः। अस्मिन् पाठे निर्विकल्पकसमाधेः अङ्गानां स्वरूपं भेदपुरःसरम् आलोचयिष्यते। समाधेः विघ्नानां च स्वरूपं आलोचितं भविष्यति।



## उद्देश्यानि

एतं पाठं पठित्वा छात्रा अधःस्थान् विषयान् ज्ञास्यन्ति।

- निर्विकल्पकसमाधेः अङ्गानि।
- अद्वैतवेदान्तमते पातञ्जलमते च तेषां कीदृशं स्वरूपम्।
- तेषु अङ्गेषु योगिनः सिद्धौ कीदृशः फललाभः।
- निर्विकल्पकसमाधेः के अन्तरायाः।
- कथं च अन्तरायेभ्यः योगिनः आत्मानं रक्षेयुः।
- धारणा-ध्यान-समाधीनां भेदः।

## २५.१) निर्विकल्पकसमाधेः अङ्गानि

निर्विकल्पकसमाधेः अष्टौ अङ्गानि सन्ति। उच्यते च वेदान्तसारे सदानन्दयोगीन्द्रेण – "अस्य अङ्गानि यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधयः" इति। महर्षि-पतञ्जलि-प्रणीते योगसूत्रेऽपि उच्यते – "यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधयोऽष्टावङ्गानि" इति। एतेषां स्वरूपम् अधः आलोच्यते।



## २५.१.१) यमः

यमस्वरूपविषये उच्यते वेदान्तसारे – "तत्र अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः" इति। सामान्यतः अहिंसा नाम वाचा मनसा कायेन च परपीडनात् प्रतिनिवृत्तिः, सत्यं नाम यथार्थभाषणम्, अस्तेयं च परस्वहरणरहितता, ब्रह्मचर्यं च अष्टाङ्गमैथुनवर्जनम्, अपरिग्रहश्च समाधेः अनुष्ठानार्थम् अनुपयुक्तानां वस्तूनाम् असङ्ग्रहः। अहिंसादीनां विषये विस्तरशः आलोचनं पातञ्जलयोगसूत्रे दृश्यते। तदनुसारेण अहिंसादीनां निरूपणम् अधो विधीयते।

### अहिंसा

यमेषु अहिंसा नाम सर्वथा सर्वदा च भूतानाम् अपीडनं, तेषां प्राणवियोगानुकूलायाः चेष्टाया अभावश्च। सत्यादयः अन्ये यमाः नियमाश्च अहिंसामूलाः। अहिंसायाः सिद्धिश्च सत्यादिभिः सम्भवति इति हेतोः सत्यादयः प्रतिपादिता भवन्ति। अहिंसायाः वैशद्यं भवति सत्यादिभिः। भारतीयशास्त्रान्तरेष्वपि अहिंसा महाफलत्वेन प्रशंसिता। श्रुतौ आम्नायते – "मा हिंस्यात् सर्वा भूतानि" इति। उच्यते हि महाभारते – "अहिंसा परमो धर्मः" इति। श्रीमद्भगवद्गीतायां दैवीसम्पदां निरूपणप्रसङ्गे 'अहिंसासत्यमक्रोध' इत्यादिश्लोके अहिंसा आलोचिता। हिंसामात्रमेव हेयम्। यज्ञे विधीयमाना वैधी हिंसा अपि पापं जनयति इति सांख्यशास्त्रविदां मतम्। परन्तु केषुचित् स्थलेषु हिंसायां सत्यामपि दोषो न भवति साधारणमानवानामिति स्मृतिकारैः प्रतिपादितम्। तथाहि गुरुः बालः वृद्धः ब्राह्मणः इत्यादयः केचिदपि यदि आततायिनो भवन्ति तर्हि तेषां हननं न पापाय कल्पते। आततायिनां स्वरूपं च एवमुच्यते मनुसंहितायाम् –

**"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहा।**

**क्षेत्रदारहरश्चैव षडेते आततायिनः॥" इति।**

योगिनस्तु सर्वथा हिंसारहिताः भवेयुः। आततायिनः हिंस्रपशून् प्रत्यपि ते हिंसां न प्रदर्शयन्ति, मृदुहिंसामात्रं कदाचिद्वा प्रदर्शयन्ति। योगिनः अहिंसायां प्रतिष्ठा भवति चेत् हिंस्रपशवोऽपि तं प्रति हिंसां न प्रदर्शयन्ति। सूत्रितं च पतञ्जलिना – "अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग" इति।

### सत्यम्

सत्यं नाम यथार्थभाषणम्। यथा दृष्टम् अनुमितं श्रुतं वा तथैव कथनं चिन्तनं च सत्यम्। श्रुतिरुपदिशति – "सत्यं वद" इति। सत्यस्य माहात्म्यं कीर्त्यते मुण्डकोपनिषदि –

**"सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।**

**येनाऽक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परमं निधानम्॥" इति।**

यस्य सत्यस्य अवलम्बनेन प्राणिनाम् अहितं सिध्यति तत् सत्यम् आलोच्य परित्यक्तव्यम्। स्वार्थप्रतिपादनेच्छया यदि छलेन अर्धसत्यम् उच्यते तर्हि तदपि पापाय कल्पते। युधिष्ठिरस्य द्रोणहननाभीप्सया "अश्वत्थामा हतः" इति अर्धसत्यकथनेन द्रोणस्य व्यामोहजननं पापम् अजनयत्। अत उच्यते सत्यस्य स्वरूपम् –



**"यथार्थकथनं यच्च सर्वलोकसुखप्रदम् ।**

**तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः॥" इति।**

योगिनः सत्ये प्रतिष्ठा भवति चेत् स क्रियाफलदाता भवति। तस्य आशीर्वादमात्रेण जनानां धर्मस्वर्गादिलाभः सम्भवति। तथाहि योगसूत्रे उच्यते – "सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" इति।

### अस्तेयम्

स्तेयं नाम शास्त्रविधिमुत्सृज्य द्रव्याणाम् परतः स्वीकरणम् परद्रव्यहरणाभिलाषो वा। तस्य अभावः अस्तेयम्। स्तेयनिषेधाय साक्षात् श्रुतिः उपदिशति –

**"ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**

**तेन त्यक्तेन भुञ्जीयात् मा गृधः कस्यस्विद्धनम्॥" इति।**

परद्रव्येषु लोभः न कार्यः इति तात्पर्यम्। योगी अस्तेये प्रतिष्ठां लभते चेत् सङ्कल्पमात्रेण तस्य सर्वरत्नानां लाभो भवति। तथाहि सूत्रितं योगसूत्रे पतञ्जलिना – "अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्" इति।

### ब्रह्मचर्यम्

ब्रह्मचर्यं नाम गुप्तेन्द्रियस्य उपस्थस्य संयमः। स च अष्टाङ्गमैथुनवर्जनेन सम्भवति। अष्टाङ्गमैथुनं दक्षसंहिताग्रन्थे निरूपितम् –

**"स्मरणं कीर्तनं केलिः प्रेक्षणं गूह्यभाषणम्।**

**सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥" इति।**

एतद् अष्टाङ्गमैथुनम्, एतेषाम् विपरीतं हि ब्रह्मचर्यम्। मैथुनत्यागश्च कर्मणा मनसा वाचा च विधेयः। अतः शास्त्रेषु ब्रह्मचर्यविषये उच्यते –

**"कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।**

**सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते॥" इति।**

ब्रह्मचर्ये योगिनः प्रतिष्ठा भवति चेत् योगिनो वीर्यलाभो भवति। तेन च तस्य शरीरेन्द्रियमनःसु निरतिशयं सामर्थ्यम् उपजायते, योगिनः अणिमादिसिद्धयोऽपि सुलभा भवन्ति। स्वयं सिद्धः सन् योगी शिष्येषु ज्ञानमुत्पादयितुं समर्थो भवति ब्रह्मचर्यबलात्।

### अपरिग्रहः

समाधेः अनुष्ठानार्थं यानि द्रव्याणि अपेक्षितानि तदतिरिक्तानां द्रव्याणाम् असंग्रह एव अपरिग्रहः। अपरिग्रहो हि विषयेषु वैराग्यम्। विषयार्जने अस्ति कष्टं महत्, अतो विषयस्य अर्जनदोषो विराजते। कष्टेनार्जितं धनं तस्करः अपहरिष्यति इति दुश्चिन्ता एव रक्षादोषः। विषयोपभोगे सति शीघ्रमेव विषयस्य क्षयो भवतीति क्षयदोषो विषयस्य। विषयस्य भोगेन पुनर्भोगाय इच्छा बलवती भवति, तदा च विषयस्य अलाभे महत्कष्टं भवति; अयमेव विषयस्य सङ्गदोषः। एकस्य विषयोपभोगः अपरस्य ईर्ष्यायाः कारणं



भवतीति विषयस्य हिंसादोषः। विषयेषु एतान् दोषान् वीक्ष्य योगी विषयान् परित्यजेत्। योगी यदि अपहिग्रहे प्रतिष्ठां लभते तर्हि तस्य अतीतवर्तमानभविष्यजन्मनां ज्ञानं सम्भवति। तथाहि सूत्रितं पतञ्जलिना – "अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः" इति।

## २५.१.२) नियमः

नियमास्तावत् शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि। एतेषां विस्तरश आलोचनमधो विधीयते।

### शौचम्

शौचं नाम शुचिता पवित्रता वा। तच्च शौचं द्विविधं बाह्यम् आभ्यन्तरञ्च। बाह्यं शौचं तावत् मृज्जलादिद्वारा बाह्यशरीरमलदूरीकरणं पवित्रभोज्यग्रहणञ्च। आभ्यन्तरं शौचं तावत् मदमानासूयादीनां चित्तमलानां प्रक्षालनम्। उच्यते च तस्मात् दक्षसंहितायाम् –

**शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।**

**मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्॥ इति।**

योगिनः शौचम् अत्यन्तमपेक्षितम्। शौचं विना न हि काचिद् आध्यात्मिकी सिद्धिः सम्भवति। काममदमानादिषु लिप्तस्य चित्तस्य शास्त्रप्रतिपादितविषयेषु स्थैर्यं न सम्भवति। योगिनः बाह्यशौचसिद्धौ स्वशरीरे घृणा परशरीरस्पर्शे अनीहा च उत्पद्यते। आभ्यन्तरशौचेन च चित्तशुद्धिः, चित्तशुद्धेः मनसः प्रसादः, मनःप्रसादात् चित्तैकाग्र्यं, ततः इन्द्रियजयः, इन्द्रियजयाच्च आत्मदर्शनयोग्यता योगिनः सम्भवति।

### सन्तोषः

यदृच्छालाभसन्तुष्टिः अलाभे च अविषादः सन्तोषः। ये विषयाः योगिनः सन्निहिताः तैरेव विषयैः योगिनः जीवनं धारयेयुः। ततः अधिकानां द्रव्याणां ग्रहणाय अभिलाषः योगिनः न स्यात्। न हि कामानाम् उपभोगेन कामा उपशान्ताः भवन्ति। उच्यते च –

**न जातु कामः कामानामुपभोगेन शाम्यति।**

**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति।**

तृष्णाक्षयेण यत् सुखं लभ्यते इहलोकस्थानां परलोकस्थानां च वस्तूनां भोगेनापि तत् सुखं न लब्धुं शक्यते। अतः सन्तोष एव सुखमूलम्। योगिनः चित्तसन्तोषे सति निरतिशयानन्दप्राप्तिः भवति। तथाहि सूत्रितं पतञ्जलिना – सन्तोषादनुत्तमसुखलाभः इति।

### तपः

तपो नाम कामानामनशनम्। आम्नातं च महानारायणोपनिषदि – "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति। पातञ्जलदर्शने तु शीतोष्णम्, जिघत्सापिपासे, सुखदुःखे – इत्यादीनां द्वन्द्वानां सहनं, कृच्छ्र-चान्द्रायणादिव्रतानि च तपश्शब्देन निर्दिष्टानि। तपसा मलक्षयो भवति, तपसा कल्मषं हन्ति

इत्यादिश्रुतेः। तपसा मलक्षये सति योगिनः अणिमादिकायसिद्धिः दूरश्रवणाद्धिः इन्द्रियसिद्धयोऽपि भवन्ति।

**स्वाध्यायः**

स्वाध्यायो नाम प्रणवजपः उपनिषद्ग्रन्थावृत्तिश्च। आम्नातं च – "ओमित्येव ध्यायथ आत्मानम्" इति। स्वाध्यायेन योगिनः इष्टदेवदर्शनं सम्भवति। सूत्रितं च – "स्वाध्यायादिष्टदेवतासम्प्रयोग" इति।

**ईश्वरप्रणिधानम्**

मानसैः उपचारैः ईश्वरस्य अर्चनमेव ईश्वरप्रणिधानम्। आम्नायते च श्वेताश्वतरोपनिषदि – "तं ह देवात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति। ईश्वरे सर्वकर्मफलसमर्पणं हि ईश्वरप्रणिधानम्। उच्यते च श्रीमद्भगवद्गीतायां भगवता कृष्णेन –

**यत्करोषि यदश्नासि यज्जुहोति ददासि यत्।**

**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ इति।**

ईश्वरप्रणिधानेन सिद्धो योगी सर्वदा स्वरूपस्थः सन् संशयविपर्ययादिरहितः सन् अविद्यासंस्कारादीनां क्षयमनुभवति, ततश्च क्रमेण नित्यमुक्तः सन् ब्रह्मास्वादमनुभवति। ईश्वरप्रणिधानेन आत्मज्ञानं भवति व्याधिप्रभृतीनाम् अन्तरायाणां च विनाशो भवति।

## २५.१.३) आसनम्

आसनानि हि करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीनि। लोके च पद्मासनं स्वस्तिकासनम् इत्यादिकं प्रसिद्धम्। यस्याम् अवस्थायां स्थिरतया बहुक्षणं यावद् उपवेष्टुं शक्यते तद्धि आसनम्। सूत्रितं च पतञ्जलिना – "स्थिरसुखम् आसनम्" इति। सर्वविधबाह्यप्रयत्नं वर्जयित्वा निष्कम्पतया उपवेशनेन आकाशादिषु अनन्तविषयेषु मनःसमाधानेन च आसनसिद्धिः सम्भवति। आसनसिद्धौ सति शीतोष्णादिद्वन्द्वैः योगी नाभिभूतो भवति।

## २५.१.४) प्राणायामः

"रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः" इति वेदान्तसारे सदानन्दयोगीन्द्रेण उच्यते। प्राणायामो हि आसनसिद्धौ सत्यां भवति। श्वासप्रश्वासयोर्गतिविच्छेद एव प्राणायामः। बाह्यस्य वायोः अन्तः ग्रहणं श्वासः, कौष्ठस्य वायोः बहिः निःसारणं प्रश्वासः। रेचको नाम प्राणवायोः शनैः वामनासापुटाद् दक्षिणनासापुटाद् वा सव्यापसव्यन्यायेन बहिर्निःसारणम्। पूरको नाम तेनैव प्रकारेण वायोः अन्तःप्रवेशनम्। कुम्भकश्च पूरितस्य वायोः अन्तः निरोधः। प्राणवायोः निरोधात् एते प्राणायामपदेन उच्यन्ते। प्राणायामस्य अभ्यासेन ज्ञानावरकाणां क्लेशकर्माधर्मादीनां क्षयो भवति। सूत्रितं च पतञ्जलिना – "ततः क्षीयते प्रकाशावरणम्" इति।



### २५.१.५) प्रत्याहारः

इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्यावर्तनमेव प्रत्याहारः। श्रोत्रादीनाम् इन्द्रियाणां स्वस्वविषयेभ्यः शब्दादिभ्यः प्रत्यावर्तनं हि प्रत्याहारः। श्रूतौ आम्नातं – "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति। वैषयिकानन्दत्यागेन एव निरतिशयानन्दस्य ब्रह्मरूपस्य लाभः सम्भवति। अतः मुमुक्षोः प्रत्याहारः सुतरामपेक्षते। योगसूत्रे प्रत्याहारस्वरूपविषये उच्यते – "स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहार" इति। चित्तं निरुद्धं भवति चेत् चित्तेन सह इन्द्रियाणामपि निरोधः सम्भवति। स्वस्वविषयैः सह इन्द्रियाणां सम्बन्धाभावे सति इन्द्रियाणि चित्तवत् निरुद्धानि भवन्ति। अयम् इन्द्रियाणां विषयेभ्यो निरोध एव प्रत्याहारः। योगिनः प्रत्याहारसिद्धौ इन्द्रियाणि तस्य परमवश्यानि भवन्ति।

### २५.१.६) धारणा

वेदान्तसारे धारणास्वरूपविषये उक्तम् – "अद्वितीयवस्तुनि अन्तरिन्द्रियधारणं धारणा" इति। अद्वितीयवस्तुनि ब्रह्मणि अन्तरिन्द्रियस्य चित्तस्य स्थापनं हि धारणा। योगसूत्रे पतञ्जलिना सूत्रितं – "देशबन्धश्चित्तस्य धारणा" इति। अस्यार्थो हि नाभिचक्र-हृदयपुण्डरीकादिषु देहदेशेषु बाह्येषु वा देवमूर्तिप्रभृतिषु चित्तस्थैर्यं हि धारणा।

### २५.१.७) ध्यानम्

ध्यानं हि अद्वितीयवस्तुनि ब्रह्मणि विच्छिद्य विच्छिद्य अन्तरिन्द्रियवृत्तिप्रवाहः। धारणापटुत्वाभावेन चित्तस्थैर्यस्य अभावात् यदा ब्रह्मविषयिणी विच्छिद्य विच्छिद्य चित्तवृत्तिः भवति तत् ध्यानम् इत्युच्यते। पातञ्जलमते तावत् यत्र चित्तं स्थिरीकृतं तत्र चित्तवृत्तेः प्रत्ययान्तरेण अस्पृष्टः सदृशः प्रवाह एव ध्यानम्। सूत्रितं च – "तत्र प्रत्ययैकतानता ध्यानम्" इति।

### २५.१.८) समाधिः

निर्विकल्पकसमाधेरङ्गरूपेण उक्तः अयं समाधिस्तु सविकल्पक एव। योगसूत्रे तु ध्यानमेव यदा ध्येयाकारेण भासते, वर्तमाना अपि चित्तवृत्तिः यदा न गृहीता भवति सा हि समाधिः इत्युच्यते। योगमते अयं च सम्प्रज्ञातसमाधेः भिन्नः साधनरूपः समाधिः। तथाहि सूत्रितं – "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति।

एतानि हि निर्विकल्पकसमाधेः अङ्गानि भवन्ति। एतेषु सत्सु निर्विकल्पकसमाधिः सम्भवति।



## पाठान्तर्गतप्रश्नाः १

१. निर्विकल्पकसमाधेः अष्टाङ्गानि कानि?

२. को नाम यमः?



३. का अहिंसा?

४. अहिंसाया उपोद्बलकं श्रुतिवाक्यं किम्?

५. आततायिनः के?

६. योगिनः अहिंसाप्रतिष्ठायां किं सिध्यति?

७. किं नाम सत्यम्?

८. सत्यमाहात्यकीर्तकं मुण्डकश्रुतिवाक्यं किम्?

९. योगिनः सत्यप्रतिष्ठायां किं भवति?

१०. अस्तेयं नाम किम्?

११. अस्तेयप्रतिष्ठायां योगिनः किं भवति?

१२. किं नाम ब्रह्मचर्यम्?

१३. किं तावत् अष्टाङ्गमैथुनम्?

१४. ब्रह्मचर्यप्रतिष्ठायां योगिनः किं भवति?

१५. अपरिग्रहो नाम कः?

१६. अपरिग्रहस्थैर्ये योगिनः किं भवति?

१७. नियमाः के?

१८. शौचं कतिविधं, के च ते?

१९. किं नाम बाह्यं शौचम्?

२०. आभ्यन्तरं शौचं किम्?

२१. शौचप्रतिष्ठायां योगी किं लभते?

२२. कः सन्तोषः?

२३. सन्तोषात् किं भवति?

२४. किं नाम तपः?

२५. कः स्वाध्यायः?

२६. ईश्वरप्रणिधानं नाम किम्?

२७. किं तावत् आसनम्?

२८. आसनसिद्धौ सति योगिनः किं भवति?

२९. प्राणायामो नाम कः?

३०. प्राणायामप्रतिष्ठायां किं भवति योगिनः?

३१. प्रत्याहारस्वरूपं किम्?

३२. का नाम धारणा?

३३. किं नाम ध्यानम्?



३४. निर्विकल्पकसमाधेः अङ्गभूतः समाधिः कः?

## २५.२) समाधेः अन्तरायाः

निर्विकल्पकसमाधेः चत्वारः विघ्नाः सन्ति। पूर्वोक्तेषु अङ्गेषु आचरितेष्वपि विघ्नवशात् न हि निर्विकल्पकसमाधिः सम्भवति। एते विघ्ना हि लय-विक्षेप-कषाय-रसास्वादरूपाः। उक्तं च वेदान्तसारे सदानन्दयोगीन्द्रेण – "एवम् अस्य अङ्गिनः निर्विकल्पकस्य लय-विक्षेप-कषाय-रसास्वादलक्षणाः चत्वारः विघ्नाः सम्भवन्ति" इति। एतेषां स्वरूपम् अध आलोच्यते।

**लयः**

वेदान्तसारे उच्यते – "लयः तावत् अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेः निद्रा" इति। अयञ्च लयो द्विधा व्याख्यायते। तथाहि बहुकालं यावत् अष्टाङ्गसहितस्य निर्विकल्पकसमाधेः अभ्यासपटुतावशात् प्रत्यगभिन्ने परमानन्दे ब्रह्मणि चित्तवृत्तेः लयः प्रथमविधः। यदा च आलस्यवशात् बाह्यशब्दाविषयग्रहणं न भवति प्रत्यगात्मस्वरूपज्ञानमपि न भवति तदा चित्तवृत्तेः स्तब्धीभावरूपा या निद्रा सा हि द्वितीयविधः लयः। द्वितीयविधः लय एव निर्विकल्पकसमाधेः विघ्नो भवतीति तस्य त्यागाय तस्य स्वरूपम् आलोचितं वेदान्तसारे।

**विक्षेपः**

अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेः अन्यालम्बनं विक्षेपः। अखण्डवस्तुनः ब्रह्मणो ग्रहणाय अन्तर्मुखतया प्रवृत्तायाः चित्तवृत्तेः ब्रह्मवस्तु न अवलम्ब्य पुनः बाह्यवस्तुग्रहणे प्रवृत्तिः विक्षेपो भवति। संस्कारा हि प्रबला भवन्ति। अतः पूर्वार्जितसंस्कारवशात् कदाचित् विक्षेपश्चित्तस्य भवेत्। अतो योगी सदा अतन्द्रः तिष्ठेत्।

**कषायः**

लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः इति। एते रागादयः त्रिविधाः बाह्याः आभ्यन्तरा वासनारूपाश्च। बाह्याः हि पुत्रादिविषयाः रागाः। आभ्यन्तरा हि मनोराज्यादयः। संस्काररूपाः हि वासनामया रागाः। अनादिकालात् बाह्याभ्यन्तराणां रागादीनाम् अनुभवात् सञ्जातैः संस्कारैः कलुषितं चित्तं कदाचित् श्रवणादीनाम् अभ्यासेन अन्तर्मुखीनम् अपि ब्रह्मग्रहणाय असमर्थं सत् स्तब्धं भवति। यथा हि कश्चित् साधारणो जनो राजदर्शनाय स्वगृहान्निर्गत्य राजमन्दिरं प्रविष्टोऽपि द्वारपालेन निरुद्धः सन् स्तब्धो भवति तथैव बाह्यविषयान् परित्यज्य अखण्डवस्तुग्रहणाय प्रवृत्तस्य चित्तस्य रागादिसंस्कारोद्बोधकारणात् स्तब्धीभावः तस्माच्च ब्रह्मवस्तुनः अग्रहणं कषाय इत्युच्यते।

**रसास्वादः**

रसास्वादो हि अखण्डवस्त्वनवलम्बनेन अपि चित्तवृत्तेः सविकल्पकानन्दास्वादनं, समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा। सविकल्पकसमाधौ अपि योगी आनन्दमनुभवति। तमेव आनन्दं ब्रह्मानन्दं मन्वानस्य योगिनः कदापि ब्रह्मस्वरूपलाभः न सम्भवति। अत्रोदाहरणं तावत् –



कश्चित् निधिग्रहणाय प्रवृत्तः निधिरक्षकान् भूतप्रेतादीन् अनिष्टसाधकान् अभिभूयापि आनन्दम् अनुभवति। परन्तु तमेव आनन्दं परमं मन्यमानस्य कदापि निधिप्राप्तिर्न भवति। अतः योगी सविकल्पकानन्दास्वादनेन विमोहितः न स्यात्, तमानन्दं परित्यज्य निर्विकल्पकसमाधिलाभाय निरन्तरं यतेत।

उच्यते च गौडपादकारिकायां –

**"लये सम्बोधयेत् चित्तं विक्षिप्तं शमयेत् पुनः।**

**सकषायं विजानीयात् शमप्राप्तं न चालयेत्॥**

**नास्वादयेत रसं तत्र निःसङ्गः प्रज्ञया भवेत॥" इति।**

तथाहि यदा चित्तवृत्तेः निद्रारूपः लयो भवति तदा तन्निवृत्त्यर्थं जाड्यादिकं परित्यज्य चित्तं सम्बोधयेत् मुमुक्षुः। यदा च चित्तं विक्षेपयुक्तं भवति तदा विषयवैराग्यादिना चित्तं शमयेत्, चित्तं च पुनः अन्तर्मुखीनं कुर्यात्। यदा चित्तं रागादिकषायसहितं भवेत्, तदा विचार्य त्याज्या रागादयः इति जानीयाद् योगी। यतो हि रागादयो हि बाह्यविषयप्रापिकाः, अखण्डवस्तुप्रापणे न ते सहायका भवन्ति। यावन्न रागादिकलुषितं चित्तं रागादिवासनाक्षयसहितं न भवेत् तावत् तच्चित्तं न स्वस्थानात् चालयेत्। वासनाक्षयानन्तरं चित्तं स्वयमेव अखण्डवस्तुविषयकं भवति। यदा च चित्तं सविकल्पकानन्दास्वादे रतो भवति तदा तत्र वैराग्यमापादनीयम्। योगी तत्र रसं नास्वादयेत् वैषयिकसुखदुःखादिभिः रहितः सन् प्रज्ञया युक्तो भवेत्। एवंविधो योगी एव स्थितप्रज्ञ इत्युच्यते। उच्यते च भगवता श्रीमद्भगवद्गीतासु स्थितप्रज्ञस्य लक्षणम् –

**"प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।**

**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥" इति।**

## २५.३) अङ्गभूतानां धारणा-ध्यान-समाधीनां भेदः

विषयान्तरात् प्रतिनिवर्त्य अद्वितीयवस्तुनि चित्तस्य स्थापनमेव धारणा। धारणायां सत्यां ध्यानं सम्भवति। धारणापटुतायाः अभावेन ब्रह्मविषयिणी विच्छिद्य विच्छिद्य चित्तवृत्तिः यदा भवति तद् ध्यानम् इत्युच्यते। ध्याने च तैलधारावत् निरन्तरं सजातीयचित्तवृत्तिर्न भवति। तदेव ध्यानं यदा परां काष्ठाम् उपैति तदा ब्रह्मविषयिणी अव्यवहिता चित्तवृत्तिः भवति, सा अवस्था हि सविकल्पकः समाधिः। सविकल्पकसमाधौ विच्छिद्य विच्छिद्य चित्तवृत्तिः न भवति। ध्यान-धारणा-समाधयः पातञ्जलयोगसूत्रे संयमपदेन उक्ताः। तथाहि सूत्रितं – त्रयमेकत्र संयमः इति। संयमजये सति समाधिजनितायाः प्रज्ञायाः विकासो भवति। उक्तं च योगसूत्रे – तज्जयात् प्रज्ञालोकः इति।



## पाठगतप्रश्नाः – २

३५. निर्विकल्पकसमाधेः विघ्नाः के?



३६. लयो नाम कः?

३७. विक्षेपस्य स्वरूपं किम्?

३८. कः कषायः?

३९. रसास्वादो नाम कः?

४०. ध्यान-समाध्योः को भेदः?



## पाठसारः

अस्मिन् पाठे निर्विकल्पकसमाधेः अङ्गानि अन्तरायाश्च आलोचितानि। निर्विकल्पकसमाधिर्हि ज्ञातृज्ञानादीनां विकल्पानां लये सति अद्वितीयवस्तुनि ब्रह्मणि तदाकाराकारितायाः चित्तवृत्तेः निरन्तरम् एकीभावेन अवस्थानम्। तस्य च निर्विकल्पकसमाधेः अष्टौ अङ्गानि सन्ति। तानि हि – यमः नियमः आसनं प्राणायामः प्रत्याहारः ध्यानं धारणा समाधिश्चेति। एतेषु यमास्तावत् अहिंसा सत्यम् अस्तेयं ब्रह्मचर्यम् अपरिग्रहश्चेति। नियमाश्च शौचं सन्तोषः तपः स्वाध्यायः ईश्वरप्रणिधानं च। आसनं पद्मासनादिकं बहुक्षणं निष्कम्पतया उपवेशनसहायकम्। प्राणायामाश्च रेचकपूरककुम्भकरूपाः प्राणनिग्रहोपायाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्यावर्तनं हि प्रत्याहारः। विषयान्तरेभ्यः प्रतिनिवृत्तस्य चित्तस्य ब्रह्मणि स्थापनमेव धारणा। ध्यानं च ब्रह्मविषयिणी विच्छिद्य विच्छिद्य अन्तःकरणवृत्तिसन्ततिः। सविकल्पकसमाधिरेवात्र अङ्गभूतेन समाधिपदेन परामृष्टः।

निर्विकल्पसमाधेः अन्तरायाश्च चत्वारः – लयः विक्षेपः कषायः रसास्वादश्चेति। अखण्डवस्तुनः अलाभात् चित्तवृत्तेः जाड्यमेव लयः। चित्तवृत्तिः ब्रह्मालम्बने असमर्था सती यदा विषयान्तरमवलम्बते सः विक्षेपः। रागादिवासनया अनादिकालात् विद्यमानया चित्तवृत्तेः स्तब्धीभावः अखण्डवस्त्वनवलम्बनं च कषायः। सविकल्पकसमाधौ एव आनन्दास्वादनं हि रसास्वादः। निर्विकल्पकसमाधौ प्रतिष्ठालाभार्थं योगी एतेभ्यः अन्तरायेभ्यः आत्मानं रक्षेत्। एवम् अन्तरायचतुष्टयेन विरहितं चित्तं निर्वातदीपवत् अचलं सत् ब्रह्मरूपेण अवतिष्ठते तदा निर्विकल्पकः समाधिः भवति। निर्विकल्पकसमाधौ सत्याम् अज्ञाननाशात् जीवो जीवन्मुक्तो भवति। प्रारब्धकर्मणः क्षयानन्तरं शरीरपातात् च स विदेहमुक्तो भवति।



## पाठान्तप्रश्नाः

१. को रेचकः प्राणायामः?

२. कः पूरकः प्राणायामः?

३. कः कुम्भकः?

४. लये सति योगिनः किं कर्तव्यम्?



५. कषाये सति योगिनः किं कर्तव्यम्?

६. धारणा-ध्यान-समाधीनाम् एकत्र किमभिधानम्?

७. संयमजये सति किं भवति?

८. स्थितप्रज्ञस्य लक्षणं किम्?

९. रागः कतिविधः, के च ते?

१०. योगिनः तपसि प्रतिष्ठायां कीदृशः फललाभो भवति?



## पाठगतप्रश्नानामुत्तराणि

### उत्तराणि १

१. यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः अष्टाङ्गानि।

२. अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहाः यमाः।

३. अहिंसा नाम सर्वथा सर्वदा च भूतानाम् अपीडनं, तेषां प्राणवियोगानुकूलायाः चेष्टाया अभावश्च।

४. मा हिंस्यात् सर्वा भूतानि इति।

५. अग्निदः गरदः शस्त्रपाणिः धनापहारकः क्षेत्रहरः दारहरश्चेति षड् आततायिनो भवन्ति।

६. अहिंसाप्रतिष्ठायां सत्यां तत्सन्निहितानां भूतानां वैरत्यागो भवति। सूत्रितं च – अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग इति।

७. सत्यं नाम यथार्थभाषणम्।

८. सत्यमेव जयते नानृतम् इति।

९. योगिनः सत्ये प्रतिष्ठा भवति चेत् स क्रियाफलदाता भवति। तस्याशीर्वादेन धर्मादयः स्वर्गादयश्च लभ्यन्ते। सूत्रं च पातञ्जलम् – सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् इति।

१०. स्तेयं नाम शास्त्रविधिमुत्सृज्य द्रव्याणाम् परतः स्वीकरणम् परद्रव्यहरणाभिलाषो वा। तस्य अभावः अस्तेयम्।

११. अस्तेयप्रतिष्ठायां संकल्पमात्रेण योगिनः सर्वविधरत्नप्राप्तिः भवति।

१२. अष्टाङ्गमैथुनवर्जनमेव ब्रह्मचर्यम्। ब्रह्मचर्यं नाम गुप्तेन्द्रियस्य उपस्थस्य संयमः।

१३. स्मरणं, कीर्तनं, केलिः, प्रेक्षणं, गूह्यभाषणं, सङ्कल्पः, अध्यवसायः, क्रियानिर्वृतिः इति अष्टाङ्गमैथुनम्।

१४. वीर्यलाभो भवति।

१५. समाधेः अनुष्ठानार्थं यानि द्रव्याणि अपेक्षितानि तदतिरिक्तानां द्रव्याणां असंग्रह एव अपरिग्रहः।

१६. अतीतानागतवर्तमानजन्मनां ज्ञानं भवति।

१७. शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः।



१८. शौचं द्विविधं बाह्यम् आभ्यन्तरञ्च।

१९. मृज्जलादिद्वारा बाह्यशरीरमलदूरीकरणं पवित्रभोज्यग्रहणञ्च बाह्यं शौचम्।

२०. मदमानासूयादीनाम् अन्तःकरणमलानाम् अपसारणम् आभ्यन्तरं शौचम्।

२१. शौचप्रतिष्ठायां योगिनः स्वशरीरे जुगुप्सा परशरीरस्पर्शे अनिच्छा च सञ्जायते।

२२. यदृच्छालाभसन्तुष्टिः अलाभे च अविषादः सन्तोषः।

२३. सन्तोषात् निरतिशयानन्दलाभो भवति।

२४. तपो नाम कामानाम् अनुपभोगः।

२५. स्वाध्यायो नाम प्रणवजपः उपनिषद्ग्रन्थावृत्तिश्च।

२६. मानसैः उपचारैः ईश्वरस्य अर्चनमेव ईश्वरप्रणिधानम्।

२७. आसनानि हि करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीनि।

२८. आसनसिद्धौ सत्यां योगी शीतोष्णादिद्वन्द्वैः अभिभूतो न भवति।

२९. रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः।

३०. प्राणायामप्रतिष्ठायां ज्ञानावरकाणां क्लेशकर्माधर्मादीनां क्षयो भवति। सूत्रितं च पतञ्जलिना – ततः क्षीयते प्रकाशावरणम् इति।

३१. इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्यावर्तनमेव प्रत्याहारः।

३२. अद्वितीयवस्तुनि ब्रह्मणि अन्तरिन्द्रियधारणं धारणा।

३३. अद्वितीयब्रह्मवस्तुनि विच्छिद्य विच्छिद्य अन्तरिन्द्रियप्रवाहः ध्यानम्।

३४. सविकल्पकसमाधिरेव अत्र अङ्गभूतः समाधिः।

**उत्तराणि – २**

३५. लय-विक्षेप-कषाय-रसास्वादा हि निर्विकल्पकसमाधेः विघ्नाः।

३६. लयः तावत् अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेः निद्रा इति।

३७. अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेः अन्यालम्बनं विक्षेपः।

३८. लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः।

३९. रसास्वादो हि अखण्डवस्त्वनवलम्बनेन अपि चित्तवृत्तेः सविकल्पकानन्दास्वादनं, समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा।

४०. ध्याने विच्छिद्य विच्छिद्य चित्तवृत्तिः भवति, समाधौ तु निरवच्छिन्ना चित्तवृत्तिः भवति।

॥ इति पञ्चविंशः पाठः ॥



# २६

# मुक्तिः

## प्रस्तावना

स्वस्वरूपाज्ञानस्य नाशे सति ब्रह्मस्वरूपसाक्षात्कारात् मुक्तिः भवति। श्रूयते च – तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति। सा मुक्तिः द्विविधा जीवन्मुक्तिः विदेहमुक्तिश्च। अद्वैतवेदान्तदर्शने जीवन्मुक्तिविदेहमुक्त्योः विस्तरश आलोचनम् उपलभ्यते। कर्म त्रिविधं – प्रारब्धं, क्रियमाणं सञ्चितञ्चेति। ब्रह्मज्ञाने सति क्रियमाण-सञ्चितकर्मणोः नाशो भवति, परन्तु देहारम्भकस्य प्रारब्धकर्मणः नाशाभावात् देहस्य नाशो न भवति। मुक्तस्य ब्रह्मज्ञानिन एषा अवस्था हि जीवन्मुक्तिः। प्रारब्धकर्मनाशे सति देहनाशात् विदेहमुक्तिः भवति। प्रस्तुतपाठे अनयोः मुक्त्योः स्वरूपं साधनं प्रयोजनं च आलोचयिष्यन्ते। बहुभिर्द्वैतदार्शनिकैः जीवन्मुक्तिः न स्वीकृता। अतो पाठेऽस्मिन् जीवन्मुक्तिसिद्ध्यर्थं युक्तय उपस्थापयिष्यन्ते। जीवन्मुक्तस्य लोकव्यवहारः, कर्मभिः तस्य अस्पृष्टता इत्यादयो विषया अत्र आलोचिता भविष्यन्ति। उभयविधमुक्तिसिद्धौ प्रमाणानि अपि यथाप्रयोजनम् उपस्थापयिष्यन्ते।



## उद्देश्यानि

पाठमिमं पठित्वा अधःस्था विषयाः ज्ञास्यन्ते –

- जीवन्मुक्तेः स्वरूपम्
- विदेहमुक्तेः स्वरूपम्
- जीवन्मुक्तेः आवश्यकता अस्ति न वेति
- जीवन्मुक्तस्य साधनानि
- जीवन्मुक्तस्य लोकव्यवहाराः
- जीवन्मुक्तस्य कथमज्ञाननाशः
- विदेहमुक्तस्य का स्थितिः स्यात्
- विदेहमुक्तौ प्रमाणानि
- विदेहमुक्तेः आवश्यकता

## २६.१) भूमिका

अत्रादौ अद्वैतवेदान्तरीत्या जीवन्मुक्तिः आलोच्यते। अथ केयं जीवन्मुक्तिः, जीवन्मुक्तेः किं प्रमाणम्, कथं वा जीवन्मुक्तेः सिद्धिः,किं वैतस्य प्रयोजनम् इत्यादिप्रश्नाः सुतरां समुदिताः स्युः।



अत्रोच्यते यत् जीवतः पुरुषस्य कर्तृत्व-भोक्तृत्व-सुखदुःखादिलक्षणः चित्तधर्मः क्लेशरूपत्वात् बन्धो भवति। ब्रह्मज्ञाने सति एतेषां बन्धानां नाशो भवति। यदा च प्रारब्धकर्मणः भोगेन क्षयाभावात् जीवस्य शरीरम् अनुवर्तते परन्तु ब्रह्मज्ञानोदयात् कर्तृत्वादयो बन्धा दूरीभूता भवन्ति, तदा जीवन्नपि मुक्तः स जीवन्मुक्त इत्युच्यते।

वेदान्तसारे जीवन्मुक्तिप्रतिपादनकाले उच्यते यत् "जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चित-कर्म-संशय-विपर्ययादीनाम् अपि बाधितत्वात् अखिलबन्धरहितः ब्रह्मनिष्ठः" इति। जीवस्य स्वरूपं हि ब्रह्म। जीवस्य स्वरूपभूतस्य अखण्डब्रह्मणः ज्ञानं यदा भवति तदा स्वरूपाज्ञानं मूलाज्ञानं वा नश्यति, स्वस्वरूपं च साक्षात्कृतं भवति। अज्ञाननाशात् तत्कार्याणामपि सञ्चितकर्म-संशय-विपर्ययादीनां नाशो भवति, जीवश्च अखिलबन्धरहितः सन् ब्रह्मणि प्रतिष्ठां लभते।

## २६.२) जीवन्मुक्तेः प्रमाणम्

श्रुतिरेव प्रमाणं जीवन्मुक्तिसिद्धौ। आम्नातं च छान्दोग्योपनिषदि – तस्य तावदेव चिरं, यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति। श्रीमद्भगवद्गीतासु द्वितीयाध्याये स्थितप्रज्ञस्य विषये विस्तरश उच्यते भगवता। तानि सर्वाण्येव वचांसि जीवन्मुक्तौ प्रमाणम्। उक्तं च –

**"एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति"॥ इति॥**

आचार्यः वसिष्ठः उक्तवान्- "यथास्थितमिदं यस्य व्यवहारवतोऽपि च। अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते"॥ इति॥ विद्यारण्यस्वामिना जीवन्मुक्तावस्थाविषये उक्तं -

**"द्वैतावस्था सुस्थिता चेदद्वैते धीः स्थिरा भवेत्।**
**स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते॥ इति॥**



## पाठगतप्रश्नाः

१. जीवन्मुक्तः कः?
२. मुक्तिः कतिविधा?
३. जीवन्मुक्तिः सर्वैः सम्प्रदायैः अङ्गीक्रियते वा?
४. जीवन्मुक्तेः प्रमाणं किम्?
५. वेदान्तसारस्य कः लेखकः?
६. धीः इत्यस्य कोऽर्थः?
७. जीवन्मुक्तलक्षणं किम्?



८. पुनः संसारबन्धो भवति वा?

## २६.३) जीवन्मुक्तिस्वरूपविचारः

श्रुतिस्मृतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानि वर्तन्ते। तानि च कठवल्ल्यादिषु पठ्यन्ते - विमुक्तश्च विमुच्यते इति। सर्वैषणाविनिर्मुक्तः सन् सर्वभूतस्थं परमात्मानं ध्यायन् जीवितदशायाम् अस्मिन्नेव लोके अविद्या-काम-कर्मादिप्रत्यक्षबन्धात् मुक्तो भूत्वा देहे विद्यमानोऽपि जीवो मुक्तो भवति। न तस्य पुनः देहान्तरप्राप्तिः सम्भवति। तथा च बृहदारण्यके आम्नायते -

**"यदा सर्वे प्रमुच्यते कामा येऽस्य हृदि स्थिताः।**

**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"॥ इति॥**

जीवस्य हृदि स्थिताः सर्वे कामाः पुत्रलोकवित्तैषणालक्षणा मुच्यन्ते तदा स जीवः कामवियोगात् जीवन्नेव अमृतो भवति। शरीरे विद्यमान एव ब्रह्मभावं मोक्षं प्राप्नोति। देहत्यागात् अनन्तरं न तस्य लोकान्तरप्राप्तिः भवति, अतो विदुषः प्राणा न उत्क्रामन्ति। यस्मिन् लोके ब्रह्मज्ञानं भवति, तत्रैव तस्य मोक्षो भवति। श्रूयते च – अत्र ब्रह्म समश्नुते इति।

श्रुत्यन्तरेऽपि-

"सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव" इति। जीवन्मुक्तस्य देहेन्द्रियादिषु अभिमानाभावाद् यद्यपि चक्षुषा पश्यति तथापि वस्तुतो न पश्यति। तथैव शृण्वन्नपि न शृणोति, मन्वानोऽपि न मनुते। सेन्द्रियोऽपि स निरिन्द्रिय एव।

स्मृतिषु जीवन्मुक्तः स्थितप्रज्ञ-गुणातीतादिनामभिः तत्र तत्र व्यवह्रियते। वसिष्ठरामसंवादे जीवन्मुक्ति-विदेहमुक्तिविषये आलोचना दृश्यते। तथाह्युच्यते वसिष्ठेन –

**"नृणां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम्।**

**सा जीवन्मुक्ततोदेति विदेहोन्मुक्ततेव या"॥ इति॥**

लौकिकवैदिककर्मणां त्यागपूर्वकं केवलं ज्ञाननिष्ठाः आत्मविचारपरायणपुरुषाः जीवन्मुक्तावस्थां प्राप्नुवन्ति। एषा जीवन्मुक्तावस्था विदेहमुक्तावस्थायाः हेतुः। जीवन्मुक्तिविदेहमुक्त्योः अवस्थयोः मुक्तदृष्ट्या कोऽपि भेदः नास्ति। किन्तु जीवन्मुक्तस्य सन्ति इन्द्रियादीनि इति लौकिकी दृष्टिः। तत्त्वदृष्ट्या तु इन्द्रियादिकं न तस्य सम्भवति। विदेहमुक्तौ तु देहनाशात् तदधिष्ठितानाम् इन्द्रियाणामपि असम्भवतापतति। आचार्यः वशिष्ठः उक्तवान् यत् देहेन्द्रियैः व्यवहारः क्रियते चेद् अपि जीवन्मुक्तस्य केवलं तत् लोकतः न तत्त्वतः। एतत् नामरूपात्मकं जगत् तस्य कृते नष्टम्। परन्तु केवलं प्रारब्धकर्मवशात् देहनाशपर्यन्तं जीवनं धारयति। अपि च एतत् नामरूपात्मकं जगत् केवलं चित्स्वरूपेण प्रतिभाति। प्रतीयमानं गिरिनदीसमुद्रादिकं सर्वं मिथ्यावत् प्रतिभाति जीवन्मुक्तस्य। यतो हि जीवन्मुक्तस्य पुरुषस्य अज्ञानवृत्तीनाम् अभावात् बाह्यं जगत् सुषुप्तिवत् प्रतीयते। अत्र प्रश्नः समुदेति यत् जीवन्मुक्तसुषुप्त्योः कः भेदः इति। अत्रोच्यते सुषुप्तौ तु अज्ञानवृत्तीनां तात्कालिकः अभावः भवति। परन्तु



जीवन्मुक्तस्य अज्ञानवृत्तयः पूर्णतया नश्यन्ति। अतः जीवमुक्तः न सौषुप्तकः पुरुषः। तथाहि वसिष्ठेन उच्यते-

**"यथास्थितमिदं यस्य व्यवहारवतोऽपि च।**

**अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते"॥ इति॥**

सुखदुःखैः यस्य मनः विषादपूर्णम् न भवति, मुखे च विषादस्य चिह्नं न दृश्यते, यथाप्राप्ते स्थितिः यस्य दृश्यते स एव जीवन्मुक्तः इति उच्यते। तथाहि शास्त्रम्-

**"नोदेति नास्तमायाति सुखदुःखैर्मुखप्रभा।**

**यथाप्राप्ते स्थितिर्यस्य स जीवन्मुक्त उच्यते"॥ इति॥**

शास्त्रैः उच्यते यत् शुकदेवः वामदेवः जनकः इत्यादयः महापुरुषाः जीवन्मुक्ताः आसन्। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति श्रुत्यनुसारेण आचार्योपदेशात् अविद्याबन्धनात् मुक्तः तत्त्वदर्शी व्यक्तिः यदा ब्रह्मस्वरूपं जानाति तदा एव शरीरत्यागं न करोति। देहारम्भकस्य प्रारब्धस्य उपभोगेन एव विदेहमुक्तिः भवति। यद्यपि अज्ञानस्य नाशः जातः ब्रह्मसाक्षात्कारेण तथापि प्रारब्धस्य कार्यवशात् किञ्चित् कालपर्यन्तं शरीरं तिष्ठति। अत एव जीवन्मुक्तः इति उच्यते। तथैव श्रुत्या आम्नायते यत् नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि इति। अतः भोगं विहाय कोटिकल्पकैः न कर्म क्षीयते। एषा स्मृतिः जीवन्मुक्तावस्थायां प्रमाणम्। अतः जीवन्मुक्तेः अङ्गीकारः न क्रियते चेत् एतासां श्रुतीनाम् अनुपपत्तिः भवेत्।

आचार्यः सदानन्दयोगीन्द्रः उक्तवान् यत् ज्ञानेन पुण्यात्मनः अज्ञानस्य बोधो भवति। परन्तु प्रारब्धकर्मवशात् फलभोगसमाप्तिः न भवति। अतः शरीरस्य धारणं भवति। स एव जीवन्मुक्तः इति उच्यते। अत्र अज्ञानं ब्रह्मविषयकम् भवति। अतः सदानन्दयोगीन्द्रः स्वस्वरूपभूत-अखण्डब्रह्मणः ज्ञानम् एव अज्ञानस्य विनाशकः इति उक्तवान्। अधुना प्रश्नो भवति ज्ञानं कथं स्वविरोधिनः अज्ञानस्य नाशको भवति। आलोकः यथा अन्धकारस्य विनाशकः ब्रह्मज्ञानमपि तथैव अज्ञानस्य विनाशकम्। अज्ञानम् अनादिकालात् विद्यमानम् अस्ति चेद् अपि ब्रह्मज्ञानस्य उदयेन नष्टं भवति। किञ्च युगयुगान्तसञ्चितं अनादिकालसञ्चितं तमः प्रदीपप्रज्ज्वलेन अपसारितं भवति, प्रत्यूषे पुनः दीपस्य अपसारणेन तमोराशिः गुहां पूरयति। तथैव अखण्डब्रह्माकारचित्तवृत्तौ प्रतिबिम्बितचिदाभासः अज्ञानं विनाशयति। सदानन्देन अध्यारोपापवादपुरस्सरं तत्त्वंपदार्थौ शोधयित्वा तत्त्वमसीति वाक्येन अखण्डार्थे अवबोधिते अधिकारिणः अहं नित्य-शुद्ध-बुद्ध-मुक्त-सत्य-स्वभाव-परमानन्दानन्ताद्वयं ब्रह्म अस्मीति अखण्डाकाराकारिता चित्तवृत्तिः उदेति। सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नम् अज्ञातं परं ब्रह्म विषयीकृत्य तद्गत अज्ञानम् एव बाधते। किञ्च, अज्ञानस्य नाशे सति अज्ञानकार्यत्वात् स्वयम् अपि नश्यति। तदा पटकारणतन्तुदाहे पटदाहवत् कार्यम् अपि नश्यति। अखण्डाकारचित्तवृत्तिः एव अज्ञानं नाशयति। अज्ञानस्य नाशे सति ज्ञानं तु स्वयं प्रकाशते। तदा तु दग्धबीजं यथा पुनः अङ्कुरजनने समर्थं न भवति तथैव ज्ञानाग्निना भस्मीकृतं कर्मजातं पुनः पुरुषं न बध्नाति। ज्ञानम् अज्ञानस्य सर्वाणि कार्याणि नाशयति चेत् अपि प्रारब्धस्य नाशं कर्तुं न शक्नोति।



अत्र जेयं कर्म त्रिविधम्। प्रारब्धकर्म, सञ्चितकर्म, क्रियमाणकर्म चेति। यत् कर्म इह जन्मनि फलं प्रदातुम् आरब्धवत् तत् प्रारब्धकर्म इति। जीवस्य प्रयाणकाले सञ्चितकर्मणां केनचित् जन्मशरीरादिभोगाय उद्बुद्धं भूत्वा शरीरं निर्मीयते, तत् कर्म प्रारब्धकर्म। प्रारब्धातिरिक्तं कर्म सञ्चितकर्म। यत् भविष्यत्काले फलं प्रदास्यति जन्मजन्मान्तरसञ्चितं तत् कर्मफलं सञ्चितकर्म इति उच्यते। ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते इति स्मृतिः सर्वसञ्चितक्रियमाणकर्माणि ब्रह्मज्ञानेन नश्यन्ति इति आख्याति। परन्तु प्रारब्धकर्माणि न नश्यन्ति। अस्मिन् जन्मनि क्रियमाणाणि यानि कर्माणि फलप्रदानं न कुर्वन्ति, भाविकाले फलप्रदानाय सञ्चितानि तिष्ठन्ति तानि क्रियमाणकर्माणि इति उच्यते। अतः प्रारब्धस्य तु भोगेन एव क्षयः। यावत्कालपर्यन्तं च प्रारब्धस्य भोगो भवति तावत्कालपर्यन्तं शरीरधारणं तु अवश्यम् आपतति।

ननु अज्ञानस्य मूलोच्छेदे किं ज्ञानेन भवति न वेति। यदि स्यात् ज्ञानेन अज्ञाननाशः तर्हि अज्ञानकार्यस्य प्रारब्धस्य अपि नाशः ज्ञानेन स्यात्, यथा तन्तुनाशे तत्कार्यस्य पटस्यापि नाशः भवति। यदि ज्ञानेन न अज्ञाननाशस्तर्हि ब्रह्मज्ञानस्य व्यर्थतापत्तिः स्यात्। अत्र उच्यते अद्वैतवेदान्तिभिः यत् ज्ञानम् अज्ञानस्य नाशकारणं परन्तु यथा मूलोच्छेदेन वृक्षस्य अपि उच्छेदः भवति तथा अत्र ज्ञानेन अज्ञानस्य नाशे सति तत्क्षणात् एव शरीरस्य नाशो न भवति। प्रारब्धरूपस्य प्रतिबन्धकस्य कारणात् सामग्र्यां सत्यामपि न कार्यम् उत्पद्यते। यतो हि प्रारब्धस्य यावन्न भोगेन क्षयः तावत् शरीरं तिष्ठति।

अत्र पुनः प्रश्नः जायते यत् प्रारब्धस्य ज्ञानाविरोधे किं कारणम् इति। सर्वकर्मनाशकत्वेऽपि ज्ञानस्य प्रारब्धनाशकत्वं कुतो नेति चेदुच्यते वेदान्ताचार्यैः यत् दृष्टानुरोधेन एव एतत् स्वीकर्तव्यम्। अत्र परमार्थतः जगत् नास्ति एव। परन्तु लोके दर्शनात् एव शास्त्रेण उच्यते। अपि च नैयायिकाः अपि दर्शनवशात् एव परमाणुं स्वीकुर्वन्ति। एवं जीवन्मुक्ता अपि दृष्टाः लोके। अतो ज्ञानेन न हि प्रारब्धस्य क्षय इति उपपद्यते, अन्यथा शरीरे विद्यमानस्य कदाचिदपि विद्योदयः न स्यात्। परन्तु शुकवामदेवादयः मुक्तपुरुषत्वेन प्रसिद्धाः, शास्त्रेष्वपि उल्लिखिताः।

यदि ब्रह्मविद्या मूलाविद्यां सम्पूर्णतया दहति तर्हि अविद्यायाः दाहकारणात् कथं विदुषो देहादिप्रतिभासः भवेदिति चेदुच्यते दृश्यते हि लोके यत् विद्युत् गच्छति चेद् अपि किञ्चित्क्षणपर्यन्तं व्यजनं तु चलति एव। अपि च रज्जौ सर्पः बाधितः चेत् अपि भयकम्पनादि ततक्षणात् न गच्छति। तथैव निवृत्तः भवति चेत् अपि न तत्क्षणात् एव चक्रस्य भ्रमक्रिया न निवृत्ता भवति। प्रकृते अपि जीवन्मुक्तदशायाम् अज्ञानं नश्यति चेत् अपि अज्ञानसंस्काराः न नश्यन्ति। अयम् अविद्यासंस्कारः एव जीवस्य परममुक्तौ बाधकः भवति।



## पाठगतप्रश्नाः

९. कर्म कतिविधं वर्तते?

१०. क्रियमाणकर्म किम्?

११. किं सञ्चितकर्म?

१२. किं प्रारब्धकर्म?



१३. ज्ञानेन साकं कस्य कर्मणः विरोधः नास्ति?

१४. प्रारब्धकर्मणः कथं क्षयः भवति?

१५. क्रियमाणकर्मणः क्षयं कथं भवति?

१६. सत्ता कतिविधा?

१७. जगतः पारमार्थिकसत्ता अस्ति वा?

१८. जीवन्मुक्तिः विदेहमुक्तेः हेतुः अस्ति वा?

## २६.४) जीवन्मुक्तस्य आचरणम्

जीवन्मुक्तस्य स्वरूपम् उक्त्वा इदानीं तस्य आचरणविषये उच्यते। तथाहि ऐन्द्रजालिकः स्वक्रीडाम् इन्द्रजालम् इति ज्ञात्वा सत्यरूपेण यथा न गृह्णाति तथा जीवन्मुक्तः जगत्प्रपञ्चं मिथ्या इति ज्ञात्वा सत्यरूपेण न पश्यति। अतः एव जीवन्मुक्तः पुनः मांसशोणितादीन् न पारमार्थिकतया गृह्णाति। अपि च जीवन्मुक्तस्य बुभुक्षा शोकः मोहः एते धर्माः तत्त्वतः न भवन्ति। यद्यपि व्यवहारतः जनाः पश्यन्ति जीवन्मुक्ताः पुरुषाः अज्ञानबद्धाः पुरुषाः इव व्यवहरन्ति तथापि यातुकारस्य इन्द्रजालवत् तत् मिथ्या एव। तथाहि श्रुतिः यत् सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव इति। अपि च उददेशसाहस्रीग्रन्थे उच्यते यत्-

**"सुषुप्तवत् जाग्रति यो न पश्यति पश्यन्नपि चाद्वयत्त्वतः।**

**कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्यो इतीह निश्चयः"॥ इति।**

यः पुरुषः सुषुप्तवत् पश्यति जाग्रत्कालम्। किञ्च जीवन्मुक्तस्य अद्वैतस्य निश्चयः जातः। अतः यद्यपि द्वैतं पश्यति तथापि अद्वैतेन द्वैतस्य बाधवशात् न तु द्वैतं तत्त्वतः पश्यति। अपरदृष्ट्या यद्यपि स कार्यं कुर्वन् अस्ति परन्तु जीवन्मुक्तः निष्क्रियः एव। जीवन्मुक्तः एव आत्मवित् भवति, न अन्यः इति एव निश्चयः।

जीवन्मुक्तस्य संसारदशायाम् अनुष्ठीयमानानां पुर्वाहारविहारादीनां यथा अनुवृत्तिः भवति तथैव ब्रह्मज्ञानात् पुर्वं विद्यमानानां शुभवासनानाम् अपि अनुवृत्तिः भवति। किञ्च शुभाशुभयोः उपरि औदासीन्यं भवति। यद्यपि जीवन्मुक्तपुरुषः साधारणजनः इव आचरणं करोति तथापि तस्य कुत्रापि अभिमानं न तिष्ठति। अतः तत्त्वज्ञानात् परं प्रपञ्चस्य वस्तूनाम् उपरि तस्य औदासीन्यं भवति। दर्पणे यथा मुखप्रतिविम्बस्य मानापमानैः न किञ्चित् परिवर्तनं भवति, जीवन्मुक्तस्य अपि जगन्मिथ्यात्वज्ञानात् हर्षाविषादादि न भवति। यतो हि जीवन्मुक्तस्य तदानीं बोधः जायते यत् प्रतीयमानं जगत् तु मिथ्या प्रातिभासिकम्। न केवलं जगत् अपि तु शास्त्रम् अपि तस्य निकटे मिथ्यावत् प्रतिभाति। यथा प्रदीपः मार्गस्य अन्धकारं नाशयित्वा गृहपर्यन्तं नयति पथिकं ततः तस्य कार्यं नश्यति तथैव शास्त्रम् अपि अज्ञानिनं मार्गं प्रदर्श्य आत्मज्ञानं प्रति नयति, ततः शास्त्रस्य उपादेयत्वं नश्यति। अत्र प्रश्नः सम्भवति यत् स्वप्ने अपि जनाः प्रातिभासिकं वस्तु पश्यति। अतः स्वप्नस्थजीवन्मुक्तयोः कः भेदः इति। अत्र समाधानं तु स्वप्ने यद्यपि प्रातिभासिकं वस्तु विद्यते तथापि स्वप्ने स्वप्नस्थस्य ज्ञानं न भवति एतत्

प्रातिभासिकं वस्तु इति। परन्तु जीवन्मुक्तः जानाति एतत् जगति विद्यमानं वस्तु प्रातिभासिकं मिथ्या इति।

जीवन्मुक्तः यदि प्रपञ्चं मिथ्यावत् जानाति तर्हि जीवन्मुक्तस्य पापपुण्ययोरपि मिथ्यादृष्टिः स्यात्। तथात्वे जीवन्मुक्तस्य स्वेच्छाचारप्रसङ्गः समापतेत्। जीवन्मुक्तश्च यदि स्वेच्छाचारी स्यात् तर्हि साधारणमानवेभ्यो न तस्य भेदः स्यात्। अतः जीवन्मुक्तेः लोकयात्रोच्छेदकरत्वं स्यात्। अतः एव जीवन्मुक्तिवर्णनसमये आचार्यः सदानन्दयोगीन्द्रः उक्तवान् यत् जीवन्मुक्तस्य शुभवासनानाम् अपि अनुवृत्तिः भवति। किञ्च लोकदृष्ट्या तु यथेच्छाचरित्वं जीवन्मुक्तस्य भवितुं शक्नोति। जीवन्मुक्तः स्वस्य भोजनम् अपरस्मै ददाति, योगप्रभावात् आर्ताय आरोग्यं ददाति। जीवन्मुक्तः लोकसंग्रहार्थं मुक्तेः परमपि कर्म करोति इति गीतासु निगदितम्। जीवन्मुक्तः ज्ञानं प्राप्य न स्वेच्छाचारी स्यात्, यतो हि अशुभादिवासना साधनकाले एव लुप्ता भवति। अतः शुभवासनानाम् एव अनुवृत्तिः स्यात्। अतः एव वेदान्तगुरुः सुरेश्वराचार्यः उक्तवान् यत्-

**"बुद्धाद्वैतसतत्त्वस्य यथेच्छाचरणं यदि।**

**शूनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे"॥ इति॥**

आचार्यः उक्तवान् यदि यः मुमुक्षुः अद्वैततत्त्वस्य साक्षात्कारं कृत्वा यथेच्छाचारी भवति तर्हि साधारणजनतः को भेदः तस्य। यदि उभयोः अशुचिभक्षणे एव मतिः स्यात् तर्हि शूनतत्त्वदृशयोः को भेदः।

आचार्यः विद्यारण्यः तत्त्वदर्शिनां कृते कथम् आचरणं कर्तव्यं तत् उपदिष्टवान्। तद्यथा-

**"विड्वराहादितुल्यत्वं मा काङ्क्षीस्तत्तत्त्वविद्भवान्।**

**सर्वधीदोषसंत्यागाल्लोकैः पूज्यस्व देववत्"॥ इति॥**

अस्यार्थो हि सर्वोत्कृष्टहेतुज्ञानवान् त्वं कामादित्यागाशक्तत्वेन सर्वाधमविड्वाहादिसाम्यं मा काङ्क्षीः मा कुरु। किन्तु कामादिलक्षणसकलमनोदोषनाशेन सर्वजनैः देववत् पूज्यो भवेत्।

## २६.५) विदेहमुक्तिः

जीवन्मुक्तेः अनन्तरं विदेहमुक्तेः स्वरूपम् उच्यते। जीवन्मुक्तस्य एव विदेहमुक्तिः भवति। जीवन्मुक्तस्य प्रारब्धकर्मणः उपभोगेन क्षयात् देहनाशे सति विदेहमुक्तिः भवति। सञ्चितादिकर्मणां तु पूर्वमेव नाशः जातः। अतः इतोऽपि किमपि कर्म न अवशिष्यते जीवन्मुक्तस्य फलभोगाय। अतः देहनाशाद् विदेहमुक्तिः भवति। एषा एव मुक्तिः परममुक्तिः इत्युच्यते, स्वस्वरूपेण ब्रह्मणा साकम् एकीभावः भवति। तथा च शास्त्रं-

**"जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते।**

**विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव"॥ इति॥**



यथा वायुः कदाचित् चलनं त्यक्त्वा निश्चलरूपेण अवतिष्ठते तथा मुक्तः आत्मा उपाधिकृतं संसारं त्यक्त्वा स्वस्वरूपेण अवतिष्ठते। तदा आत्मनः कुत्रापि गतिः न भवति। तथाहि श्रुतिः- "इहैव प्रविलीयन्ते कामाः" इति "अत्र ब्रह्म समश्नुते" इति च।

अपि च विदेहमुक्तस्य स्थितिः शास्त्रैः प्रतिपाद्यते तद्यथा-

**"विदेहमुक्तो नोदेति नास्तमेति न शाम्यति।**

**न सन्नासन्न दूरस्थो न चाहं न च नेतरः"॥ इति॥**

विदेहमुक्तस्य पुनः आविर्भावः न भवति। अपि च विदेहमुक्तस्य अस्तोऽपि न भवति। विदेहमुक्तः न सत्स्वरूपविशिष्टः न असत्स्वरूपविशिष्टः भवति। अपि च तस्य न कोऽपि व्यवहारः भवति। न अयं समष्टिरूपः न अयं व्यष्टिरूपः।

जीवन्मुक्तस्य आत्मसाक्षात्कारः यद्यपि जातः तथापि तस्य प्रबलप्रारब्धकर्मवशात् तस्य अन्तिमा मुक्तिः न भवति। अतः विदेहमुक्तेः आवश्यकता तस्य वर्तते।

कर्म एव जीवस्य लोकान्तरगमनस्य कारणं भवति। अतः कर्मणः नाशात् विदेहमुक्तस्य कुत्रापि गमनं न भवति। अत्र लीनतां प्राप्नोति। किञ्च, सर्वेषां कर्मणां नाशात् तस्य पुनः जन्म न भवति। तथाहि श्रुतिः-

**"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।**

**अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते"॥ इति॥**

अत्र ब्रह्मज्ञस्य या विदेहमुक्तिः वर्णिता सा मुक्तिः तु औपचारिकी अस्ति। यथा सांख्याः वदन्ति यत् पुरुषस्य बन्धः नास्ति, मुक्तिः अपि नास्ति। वस्तुतः यदि बन्धः स्यात् तर्हि कदापि तस्य मुक्तिः न स्यात्। तथैव अद्वैतवेदान्तिभिः अपि बन्धस्य सत्यता न अङ्गीक्रियते। अतः परमार्थभूता मुक्तिः अपि नास्ति। अतः मुक्तिः तु औपचारिकी एव। यदि मोक्षः जायेत तर्हि मोक्षस्य अपि नाशः स्यात्। कारणं हि जगति यानि वस्तुनि उत्पद्यन्ते तानि वस्तूनि नश्यन्ति च। अतः मोक्षस्यापि अनित्यता आगता। अतः मोक्षः नास्ति। बन्धकारणम् अपि नास्ति। अतः मोक्षबन्धौ तु सापेक्षौ एव। तथाहि गौडपादाचार्यः उक्तवान् माण्डुक्यकारिकायां यत् -

**"न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः।**

**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता"॥ इति॥**

अतः निरोधः नास्ति। जीवस्य उत्पत्तिः अपि नास्ति। च जीवः बद्धो वर्तते। अतः बन्धकारणम् अपि नास्ति। अपि च मुमुक्षुः अपि नास्ति। मोक्षः अपि नास्ति। एषा एव परमार्थता इति। अतः परमार्थतः अखण्डं सच्चिदानन्दं ब्रह्म एव सत्यम्। अन्यत् सर्वं मिथ्या।

अत्र पुनः प्रश्नः भवति यदि जीवः चिरमुक्तः भवति तर्हि तस्य जीवस्य मोक्षः क्रियासाध्यः नास्ति। अतः मोक्षस्य कथं पुरुषार्थता स्यात्। लोके प्रार्थ्यते यत् पुरुषैः स पुरुषार्थः। अपि च अप्राप्तस्य प्राप्तिः एव पुरुषार्थः। ततः एव पुरुषस्य प्रवृत्तिः भवति। अतः पुरुषप्रवृत्त्यभावात् मोक्षस्यापि पुरुषार्थता न



अङ्गीकृता स्यात्। अत्र समाधानं कथयति यत् न केवलम् अप्राप्तस्य वस्तुनः प्राप्तिः एव पुरुषार्थः। अपि तु, प्राप्तस्यापि प्राप्तिः पुरुषार्थः इति स्वीक्रियते। तद्यथा मम उपनेत्रम् मया अज्ञानवशात् कुत्रापि स्थापितं विस्मृतञ्च। तदा कश्चन उक्तवान् यत् तव उपनेत्रम् अत्रैव अस्ति। तेन च उपनेत्रं प्राप्तं भवति। अत्र मम उपनेत्रम् आसीत् एव। परन्तु मया अज्ञानवशात् विस्मृतम्। अज्ञानस्य नाशे सति पुनः प्राप्तम्। एतत् तु प्राप्तस्य प्राप्तिः। अतः जीवः मुक्तः एव। परन्तु अज्ञानवशात् नैव ज्ञातं तस्य स्वरूपम्। यदा आत्मज्ञानम् अभवत् तदा तु अज्ञानस्य नाशः जातः। अतः जीवः स्वस्वरूपमपि ज्ञातवान्।

अपि च भगवान् श्रीकृष्णः गीतायाम् उक्तवान् यत् -

**"प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान्।**

**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते"॥ इति॥**

कामाः त्रिविधाः भवन्ति। बाह्याः आन्तरा वासनामात्ररूपाः। उपार्जिताः मोदकादयः बाह्याः, आशामोदकादयः आन्तराः, पथिगततृणादिवत् आपाततः प्रतीता वासनारूपाश्च। एतेषां त्रिविधकामानां क्षये सति धीः समाहिताः भवति। तदा एव सर्वे कामाः परित्यक्ता भवन्ति। तेन च जीवन्मुक्तिः भवति। ततः प्रारब्धक्षये सति विदेहमुक्तिः भवति।

किञ्च दुःखं रागादिनिमित्तजन्या रजोगुणविकाररूपा सन्तापात्मिका प्रतिकूला चित्तवृत्तिः। तादृशे दुःखे प्राप्ते सति अहं पापी धिङ् मां दुरात्मानम् इति अनुतापात्मिका तमोगुणविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिः उद्वेगः। सुखं तु राजत्व-पुत्रलाभादिजन्या सात्त्विकी प्रीतिरूपा अनुकूला चित्तवृत्तिः। तस्मिन् सुखे सति आगामिनः तादृशस्य सुखस्य कारणं पुण्यम् अनुष्ठाय तादृशसुखापेक्षारूपा तामसी वृत्तिः स्पृहा। अत्र च सुखदुःखयोः पूर्वकर्मप्रापितत्वात् व्युत्थितचित्तस्य वृत्तिसम्भवात् च तदुभयं समुत्पद्यते। अतः उद्वेगस्पृहे तु न विवेकिनः सम्भवतः। तथा रागभयक्रोधाश्च न अस्य विद्यन्ते। एवं लक्षणलक्षितस्य स्थितधीजनस्य एव प्रारब्धनाशे सति विदेहमुक्तिः भवति। तथाहि भगवता श्रीकृष्णेन प्रोक्तं यत्-

**"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**

**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते"॥ इति॥**

जीवन्मुक्तः यदा तस्य सर्वाणि अङ्गानि विषयेभ्यः आत्मनि प्रतिष्ठापयन्ति तदा एव जीवन्मुक्तस्य प्रज्ञा प्रतिष्ठिता भवति। यथा कूर्मः स्वयम् एव तस्य अङ्गानि स्वदेहे गृह्णाति तथैव स्थितप्रज्ञः अपि तस्य इन्द्रियानि वशीकुर्वन्ति। समाधितः उत्थितस्य पुरुषस्य इन्द्रियाणि तस्य स्ववशे तिष्ठन्ति। यतो हि समाधौ अज्ञानवृत्तिनां तु नाशः भवति। अतः यद्यपि इन्द्रियाणि लोकदृष्ट्या कार्यं कुर्वन्ति तथापि तत्त्वतः तु नैव कार्यं कुर्वन्ति। तथाहि आह गीतायां भगवता श्रीकृष्णेन यत् -

**"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**

**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठता"॥ इति॥**



अपि च यदा इन्द्रियैः विषयात् रागमोहादीनां वासानानां नाशो भवति तदा एव पुरुषः मुक्तः भवति। तत् समाध्यभ्यासबलात् एव भवति। समाधिना एव चित्तस्य प्रसन्नता जायते। तादृशस्य समाहितचित्तस्य जीवन्मुक्तस्य काले प्रारब्धक्षयात् विदेहमुक्तिः भवति।

अत्र प्रश्नः भवति यत् मृत्योः परम् अपि इन्द्रियाणि न कार्यं कुर्वन्ति। इन्द्रियादीनाम् उपरमः दृश्यते। मृतस्य अपि लोकव्यवहारादिकं न दृश्यते। अतः मृत्युविदेमुक्त्योः किं पार्थक्यम् अस्ति। अत्र एतत् ज्ञेयं यत् मृत्यौ सत्याम् इन्द्रियाणि सूक्ष्मशरीरावयवतया उत्क्रान्तानि भवन्ति, नूतनदेहं प्रति गच्छन्ति। परन्तु अज्ञानस्य नाशो न भवति मरणशीलस्य। अतः अज्ञानकारणात् उत्क्रामतो जीवस्य शरीरधारणं भवति। परन्तु जीवन्मुक्तेः अनन्तरं यस्य विदेहमुक्तिः भवति ,तस्य तु पुनः जन्ममराणादिकं न भवति। यतो हि विदेहमुक्तस्य अज्ञानस्य अशेषतः विनाशो भवति। अतः अज्ञानजन्यानि यानि कार्याणि भवन्ति तानि तु न सम्भवन्ति विदेहमुक्तस्य।



## पाठगतप्रश्नाः

१९. विदेहमुक्तेः किं लक्षणम्?

२०. कस्य विदेहमुक्तिः भवति?

२१. मृत्युविदेहमुक्त्योः पार्थक्यम् किम्?

२२. सर्वेषां विदेहमुक्तिः भवति वा?

२३. विदेहमुक्तेः परं पुनः जन्म भवति वा?

२४. विदेहमुक्तेः अनन्तरं प्रारब्धकर्मणः किं भवति।

२५. जीवन्मुक्तस्य यदि अज्ञानं न तिष्ठति तर्हि विदेहमुक्त्या किं नश्यते?

२६. चार्वाकाः किं विदेहमुक्तिं स्वीकुर्वन्ति ?

२७. विदेहमुक्तस्य प्रमाणं किम्?

२८. विदेहमुक्तस्य पुण्यफलं तिष्ठति वा?



## पाठसारः

वेदान्तोक्तसाधनचतुष्टयसम्पन्नः मुमुक्षुः प्रमाता पुरुषः जीवन्मुक्त्यवस्थां गच्छन्ति। जीवतः पुरुषस्य कर्तृत्व-भोक्तृत्व-सुखदुःखादिलक्षणः अखिलः यः चित्तधर्मः सः क्लेशरूपत्वात् बन्धो भवति। तस्य निवारणं जीवन्मुक्तिः। जीवन् सन् मुक्तः जीवन्मुक्तः इति। वेदान्तसाराख्ये प्रकरणग्रन्थे जीवन्मुक्तेः लक्षणं विस्तरेण आलोचितम्। 'यदा सर्वे प्रमुच्यन्ते' 'सचक्षुः अचक्षुरिव सकर्ण अकर्ण इव'



इत्यादिश्रुतिवाक्यानि जीवन्मुक्तस्य पुरुषस्य स्वरूपं प्रस्तुवन्ति। 'सुषुप्तवज्जाग्रति यो न पश्यति' इत्यादिश्रुतिवाक्यैः जीवन्मुक्तस्य स्वभावः उक्तः। जीवन्मुक्त एव पुरुषः प्रारब्धनाशात् परं विदेहमुक्तिं लभते। प्रारब्धकर्मणां क्षये सति जीवन्मुक्तस्य पुरुषस्य न किमपि कर्म तिष्ठति फलभोगाय। ततश्च तस्य विदेहमुक्तिः भवति। एषा एव मुक्तिः परममुक्तिः। विदेहमुक्तौ जीवः ब्रह्मस्वरूप एव भवति। अस्याः विदेहमुक्तेः स्थितिः शास्त्रैःप्रतिपाद्यते तद्यथा-

**विदेहमुक्तो नोदेति नास्तमेति न शाम्यति।**

**न सन्नासन्न दूरस्थो न चाहं न च नेतरः"॥ इति॥**



## पाठान्तप्रश्नाः

१. जीवन्मुक्तलक्षणस्य व्याख्यानं कुरु?

२. विदेहमुक्तलक्षणं व्याख्यानं कुरु?

३. जीवन्मुक्तस्य आचरणविषये लिख्यताम्?

४. जीवन्मुक्तिविदेहमुक्त्योः पार्थक्यम् किम्?

५. त्रिविधकर्मणः विवरणं लिखतु?

६. जीवन्मुक्तेः प्रयोजनं किम् आलोच्यताम्?



## पाठगतप्रश्नानाम् उत्तराणि-

१. अखिलबन्धरहितः आत्मा एव जीवन्मुक्तः इति नाम्ना कथ्यते।

२. अद्वैतवेदान्तमते मुक्तिः द्विविधा। जीवन्मुक्तिः विदेहमुक्तिश्चेति।

३. न जीवन्मुक्तिः सर्वैः सम्प्रदायैः अङ्गीक्रियते।

४. रामकृष्णादयः पुरुषाः जीवन्मुक्ताः आसन्। अपि च शास्त्रप्रमाणम् अस्ति।

५. वेदान्तसारस्य लेखकः सदानन्दयोगीन्द्रः।

६. धीपदेन अत्र बुद्धेः ग्रहणं भवति।

७. वेदान्तसारे उच्यते यत् जीवन्मुक्तः नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तद् अज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चित-कर्म-संशय-विपर्ययादीनाम् अपि बाधितत्वात् अखिलबन्धरहितः ब्रह्मनिष्ठः इति।

८. जीवन्मुक्तस्य पुनः संसारबन्धः न भवति।

९. कर्म त्रिविधं वर्तते। सञ्चितप्रारब्धक्रियमाणभेदात्।

१०. अस्मिन् जन्मनि क्रियमाणानि कर्माणि हि क्रियमाणकर्मपदवाच्यानि।



११. फलदानाय अनुन्मुखानि यानि कर्माणि अनादिकालतः अर्जितानि सञ्चितानि च तिष्ठन्ति तत् सञ्चितकर्म।

१२. सञ्चितकर्मसु किञ्चिद् एकं कर्म शरीरं प्रारभते। शरीरारम्भकं तत् कर्म एव प्रारब्धं कर्म।

१३. ज्ञानेन साकं प्रारब्धकर्मणः विरोधः नास्ति।

१४. प्रारब्धकर्मणः उपभोगात् क्षयो भवति।

१५. ज्ञानेन एव क्रियमाणकर्मणः क्षयो भवति।

१६. सत्ता त्रिविधा। व्यवहारिकी, प्रातिभासिकी, पारमार्थिकी चेति।

१७. जगतः पारमार्थिकी सत्ता नास्ति।

१८. जीवन्मुक्तिः एव विदेहमुक्तेः हेतुः।

१९. प्रारब्धकर्मणां क्षये सति जीवन्मुक्तस्य पुरुषस्य न किमपि कर्म तिष्ठति फलभोगाय। ततश्च तस्य विदेहमुक्तिः भवति।

२०. जीवन्मुक्तस्य एव विदेहमुक्तिः भवति। अतः विदेहमुक्तेः कारणं जीवन्मुक्तिः इत्यपि वक्तुं शक्यते।

२१. मृत्यौ सत्याम् इन्द्रियाणि सूक्ष्मशरीरावयवतया उत्क्रान्तानि भवन्ति, नूतनदेहं प्रति गच्छन्ति। परन्तु अज्ञानस्य नाशो न भवति मरणशीलस्य। अतः अज्ञानकारणात् उत्क्रामतो जीवस्य शरीरधारणं भवति। परन्तु जीवन्मुक्तेः अनन्तरं यस्य विदेहमुक्तिः भवति ,तस्य तु पुनः जन्ममरणादिकं न भवति। यतो हि विदेहमुक्तस्य अज्ञानस्य अशेषतः विनाशो भवति।

२२. सर्वेषां विदेहमुक्तिः न भवति। यस्य अशेषतया अज्ञानस्य नाशो भवति तस्यैव विदेहमुक्तिः भवति।

२३. विदेहमुक्तेः अनन्तरं पुनः जन्म न भवति।

२४. आम् प्रारब्धकर्मणो नाशे विदेहमुक्तिः भवति। यतो हि उपभोगेन क्षयः भवति प्रारब्धस्य।

२५. यद्यपि जीवन्मुक्तस्य अज्ञानं न तिष्ठति तथापि तस्य प्रारब्धकर्म तु तिष्ठति। यदा प्रारब्धस्य नाशो भवति तदा विदेहमुक्तिः भवति।

२६. आम् चार्वाकाः विदेहमुक्तिं स्वीकुर्वन्ति। परन्तु तेषां विदेहमुक्तिः इत्युक्ते केवलं शरीरनाशः इति।

२७. विदेहमुक्तेः प्रमाणं तु यदा संहरते चायं कूर्मोऽङ्गानीव इत्यादिभिः स्मृतिभिः अवगम्यते।

२८. विदेहमुक्तस्य अशेषतः अज्ञाननाशात् तस्य पुण्यम् अपि न तिष्ठति।

## ॥ इति षड्विंशः पाठः ॥



# २७

# विवेकानन्दवेदान्तचिन्तनम्

## प्रस्तावना

भारतवर्षं हि आध्यात्मिकतायाः भूमिः। तत्र काले काले बहूनां धर्मसम्प्रदायानां दर्शनसम्प्रदायानां च उत्पत्तिः अभूत्। भारतीयदर्शनेषु प्रमुखं स्थानम् अलङ्करोति वेदान्तदर्शनम्। तस्य च दर्शनस्य बहवः सम्प्रदायाः, बहूनि च व्याख्यानानि। वेदान्तदर्शनं वस्तुतः साक्षात् उपनिषदः आश्रित्य स्वीयं दर्शनसिद्धान्तं प्रस्तौति। यद्यपि सर्वे एव वेदान्तसम्प्रदायाः उपनिषदः प्रमाणत्वेन स्वीकुर्वन्ति, तथापि उपनिषद्व्याख्यानेषु तेषाम् अस्ति सूक्षाः भेदाः। तस्मात् सिद्धान्तेषु अपि बहुषु स्थलेषु अस्ति तेषां स्वाभाविकः भेदः। वेदान्तदर्शनेषु एवं परस्परः मतभेदः प्रसिद्ध एव। परन्तु एवं मतभेदे सति अपि सर्वाणि वेदान्तदर्शनानि एकम् एव परमेश्वरं निर्दिशन्ति, सर्वैः दर्शनमार्गैः एकः एव परमेश्वरः विविधरूपेण आप्यते इति श्रीरामकृष्णजीवनम् अवलोक्य विवेकानन्देन विज्ञातम्। श्रीरामकृष्णः हि तादृशः अध्यात्मसाधकः यस्य जीवने द्वैतं विशिष्टाद्वैतम् अद्वैतं च तत्त्वं परस्परम् अविरुद्धतया अनयासेन विराजते। एवं जीवनेन उपदेशेन च प्रभावितः सन् विवेकानन्दः शास्त्राणि आश्रित्य (प्राधान्येन उपनिषदः भगवद्गीतां च आश्रित्य) श्रीरामकृष्णस्य समन्वयभावं प्रचारितवान्। श्रीरामकृष्णेन प्रभावितस्य तस्य एतादृशं वेदान्तव्याख्यानं यथा अध्यात्ममार्गगामिनां बहूनां बहु संशयं निराकृत्य निःसंशयं तान् अध्यात्ममार्गे प्रचोदयति, तथैव प्रायोगिकजीवने अपि उपयोगाय भवति। तस्मात् आधुनिके विज्ञानयुगे वेदान्तस्य अभिनवरूपेण एतादृशं व्याख्यानं सर्वैः दर्शनजिज्ञासुभिः अवश्यम् अध्येयम्। विवेकानन्दवेदान्तस्य एतादृशं माहात्म्यं यत् तत् व्यवहारिकस्य आध्यात्मिकस्य च जीवनस्य प्राचीरं निराकृत्य व्यवहारजीवने एव आध्यात्मिकतायाः प्रयोगः कथं स्यात् इति स्पष्टतया न्यरूपयत्।



## उद्देश्यानि

इमं पाठं पठित्वा भवद्भिः -

- स्वामिनः विवेकानन्दस्य विषये सामान्यतः ज्ञायते।
- विवेकानन्दस्य दर्शनविषये विस्तरेण ज्ञायते।
- विवेकानन्ददर्शने श्रीरामकृष्णस्य प्रभावः ज्ञायते।
- विवेकानन्दस्य सेवाभावः ज्ञायते।
- योगचतुष्टयस्य विवेकानन्दकृतः समन्वयः ज्ञायते।



- अन्यदर्शनेभ्यः विवेकनन्ददर्शनस्य वैलक्षण्यं ज्ञायते।
- अपरोक्षानूभूतिः किमर्थम् अध्यात्मप्रपञ्चे प्रमाणमिति ज्ञायते।
- विवेकानन्दप्रदर्शितं योगचतुष्टयं ज्ञायते।
- आधुनिककाले विवेकानन्दस्य वेदान्तदर्शनं किमर्थम् आवश्यकम् इति ज्ञायते।

## २७.१) कः विवेकानन्दः

स्वामिनः विवेकानन्दस्य परिचितिः आधुनिके भारतवर्षे प्रायः सर्वेषामेव अस्ति। १८६३-ईशवीयाब्दे जन्वरिमासस्य १२-दिनाङ्के लब्धजन्मा स पूर्वाश्रमे नरेन्द्रनाथ-दत्तः इति नाम्ना परिचितः आसीत्। तस्य आध्यात्मिकगुरुः आसीत् श्रीरामकृष्णः। गुरोः सकाशात् सन्न्यासदीक्षां प्राप्य परिव्राजकजीवनं निर्वहन् भारतवर्षस्य विविधस्थानेषु अटन् धर्मप्रचारं कृत्वा १८९३-ईशवीयाब्दे चिकागो इति नगर्याम् अनुष्ठिते विश्वधर्मसम्मेलने भागं गृहीत्वा तत्र सनातनधर्मस्य महत्त्वम् उद्घोष्य स जगति प्रसिद्धिं प्राप्तवान्। ततः स सनातनधर्मस्य विशेषतः वेदान्तस्य प्रचारं कृत्वा समग्रायाः मानवजातेः उन्नतिं विधातुं चेष्टितवान्। तस्य मुखे वेदान्तस्य वाणी सजीवतां प्राप्य जनमनसि नूतनं रूपं धृतवती। तस्मात् तत्प्रचारितं वेदान्तं विद्वांसः नव्यवेदान्तः (Neo-Vedānta) इत्यभिधानेन सम्बोधयन्ति।

## २७.२) किं नाम विवेकानन्दवेदान्तदर्शनम्?

भारतीयशास्त्रपरम्परायाम् आबहोः कालाद् बहूनां दार्शनिकतत्त्वानां तथा दार्शनिकानां समुत्पत्तिः अभूत्। तेषु षड् आस्तिकदर्शनानि न्याय-वैशेषिक-सांख्य-योग-पूर्वोत्तरमीमांसाख्यानि प्रसिद्धानि। एतेषु पुनः उत्तरमीमांसायाम् एव द्वैत-विशिष्टद्वैत-अद्वैत-शुद्धाद्वैत-द्वैताद्वैत-अचिन्त्यभेदाभेद-शैवविशिष्टाद्वैतादिदर्शनानि परस्परसूक्ष्मभेदं निर्वहन्ति राजन्तेतराम्। कालक्रमेण समागतानां तत्त्वविदां मतानि अपि तादृशदार्शनिकतत्त्वेषु अन्तर्भवन्ति। जीवः, ब्रह्म, जगत्, माया इत्यादिविषयान् आश्रित्य एव उत्तरमीमांसादर्शनं प्रवृत्तम्। विवेकानन्दवेदान्तदर्शनम् अपि तान् तदतिरिक्तविषयान् च आलोचयत् उत्तरमीमांसादर्शने एव पदं करोति इति वक्तुं शक्यते। विवेकानन्दवेदान्तदर्शनम् इदानीं सनातनधर्मेण एकीभूतम् एव जातम्। विवेकानन्देन साक्षाद् वेदान्तवाक्यानि एव आश्रित्य समाजजीवने अस्माकं व्यवहारे च तानि कथं प्रयोक्तव्यानि, येन अस्माकम् आत्मिकी वैषयिकी च समुन्नतिः स्यात् इति भूयो भूयो दर्शितम्। परन्तु इदम् अस्माभिः स्मर्तव्यं यत् स्वामी विवेकानन्दः अभिनवं कञ्चिद्धर्मं दर्शनं वा प्रतिष्ठापयितुं न चेष्टयामास। भारतवर्षस्य आध्यात्मिकम् ऐतिह्यम् तेन उत्तराधिकाररूपेण प्राप्तम्। संकटापन्नं तद् ऐतिह्यं शुद्धं प्राणवत् समृद्धं कालोपयोगि च विधाय स विश्वेषु विस्तारयामास येन तत् समेषां मानवानां बोधगम्यं सत् स्वीयजीवने परिपालनाय उपयोगि स्यात्। अतः विवेकानन्ददर्शनं नाम वेदान्तस्य कालोपयोगितया प्रायोगिकं व्याख्यानम्।





## पाठगतप्रश्नाः -१

१. विवेकानन्दस्य बाल्यकाले किं नाम आसीत्?

२. विवेकानन्दस्य आध्यात्मिकगुरुः कः आसीत्?

३. विवेकानन्देन प्रचारितस्य दर्शनस्य नाम किमर्थं वेदान्तदर्शनम् इति?

४. विवेकानन्दस्य जन्मदिवसः कः?

५. कस्मिन् ईशवीयाब्दे विवेकानन्दः चिकागोनगरे विश्वधर्मसम्मेलने योगदानं कृतवान्?

६. विवेकानन्देन प्रचारितस्य वेदान्तस्य किम् अभिधानम्?

## २७.३) विवेकानन्ददर्शने श्रीरामकृष्णस्य प्रभावः

प्रथमतः इदं ज्ञातव्यं यत् विवेकानन्दस्य वेदान्तचिन्तने तस्य गुरोः श्रीरामकृष्णस्य महान् प्रभावः आसीत्। श्रीरामकृष्णदेवस्य प्रधानशिष्यः विवेकानन्दः गुरोः वार्तावह एव आसीत्। भाविपथप्रदर्शकरूपेण एव श्रीरामकृष्णदेवः तं निर्मितवान्। श्रीरामकृष्णस्य देहत्यागाद् अनन्तरम् अपि विवेकानन्दः तस्मात् मार्गनिदेशं लभते स्म इति पाश्चात्त्ये अवस्थितिकाले बहुधा तेन उक्तम्। यद्यपि श्रीरामकृष्णविषये स स्वल्पमेव कथयति स्म तथापि तस्य समग्रं जीवनं श्रीरामकृष्णजीवन-वचन-प्रचाराय एव विनिवेदितम् आसीत्। तथाहि तेनोक्तं- "यत्सर्वं भावम् अहं कथयामि, तत्सर्वम् एव तस्य (रामकृष्णदेवस्य) चिन्ताराशेः प्रतिध्वनिकल्पम्। अनुत्तमान् विहाय एतेषाम् एकोऽपि मदीयो नास्ति। ...सत्यभूतं कल्याणकरं च यत्सर्वं मया उच्चरितं, सर्वमेव तस्य वचनस्य प्रतिध्वनिमात्रम्। " (*स्वामिविवेकानन्दस्य 'वाणी ओ रचना'*) एतस्माद् अवधारणीयं यत् श्रीरामकृष्णदेवस्य जीवनं तथा तस्य उपदेशामृतं यथा जना अवगन्तुं ग्रहीतुं च शक्नुयुः तथा जनानां मनोभूमिनिर्माणाय एव विवेकानन्देन प्रयतितम्। न हि कस्यचित् सम्प्रदायस्य प्रतिष्ठापकरूपेण, अपि तु नवभारतवर्षस्य आध्यात्मिकमार्ग-प्रदर्शकरूपेण, नवयुगस्य अवताररूपेण च रामकृष्णदेवं दृष्टवान् विवेकानन्दः। मद्रपुरीस्थशिष्येभ्यः प्रेषिते पत्रे एकदा विवेकानन्देन लिखितम्- "अयं जनः (रामकृष्णदेवः) तस्य एकपञ्चाशद्वर्षव्यापिजीवने पञ्चसहस्रवर्षाणां जातीयम् आध्यात्मिकं जीवनं यापितवान्, एवम्प्रकारेण भाविशिक्षाप्रदादर्शरूपेण स आत्मानं सज्जीकृतवान्" इति। अतः विवेकानन्दस्य दर्शनं श्रीरामकृष्णदर्शनसायुज्येन द्रष्टव्यम्।

## २७.४) वेदान्ताधारेण दर्शनप्रचारस्य कारणम्

द्वितीयतः, यद्यपि श्रीरामकृष्णभावप्रचार एव विवेकानन्दस्य उद्देश्यम् आसीत् तथापि वेदान्तदर्शनम् आश्रित्य विवेकानन्दः स्वीयदर्शनं प्रचारितवान् इत्यत्र कारणं हि तन्मते- श्रीरामकृष्णवचनस्य तात्पर्यं विश्वजनीनम्, तस्मात् तत्प्रकाशनाय विश्वजनीनो एको माध्यमः अपेक्षितः। वेदान्ते एव केवलं विश्वजनीनं सत्यं निहितमस्ति, यद् धर्मीयविश्वासनिगडनिबद्धं नास्ति, यच्च सहस्रवर्षेभ्यः सनातनधर्मस्य अन्तर्निहिततत्त्वरूपेण विराजते। अपि च, स्वामिविवेकानन्देन अवलोकितं



यत्- श्रीरामकृष्णदेवो न केवलं वैदान्तिकसत्यसमूहानां परीक्षणं प्रामाण्यं च व्यवस्थापयामास, अपि तु वेदान्तस्य सारभागं धर्मीयाप्रयोजनीयांशेभ्यः पृथक् कृत्वा स्वीयजीवनमाध्यमेन तस्य व्यावहारिकं प्रयोगं च संसाध्य वेदान्ततत्त्वम् आधुनिककालोपयोगित्वेन संस्थापितवान्। तस्मात् विवेकानन्दः 'कर्मजीवने वेदान्तः' इति तत्त्वं यत् प्रचारितवान् तस्य उपजीव्यमासीत् श्रीरामकृष्णदेवस्य जीवनमेव। अतो विवेकानन्ददर्शनस्य मूलभूतं तत्त्वं तावत् श्रीरामकृष्णजीवनमेव। एवं श्रीरामकृष्णदेवः स्वकीयजीवने वेदान्ततत्त्वानां प्रयोगं चकार, विवेकानन्दस्तु वेदान्तमाध्यमेन श्रीरामकृष्णजीवनं व्याख्यातवान् इति परस्परपरिपूरकप्रक्रिया एव श्रीरामकृष्ण-विवेकानन्ददार्शनिकभावनाया भित्तिभूता।

## २७.५) सर्वस्तरीयमानवानाम् आध्यात्मिकी अभ्युन्नतिः तदीयदर्शनस्य लक्ष्यम्

तृतीयतः मानवानाम् आध्यात्मिकी अभ्युन्नतिः तदीयदर्शनस्य लक्ष्यम् आसीत्। परिव्राजकसन्न्यासिरूपेण भारतभ्रमणकाले जनानां दारिद्र्यं शिक्षाहीनतां च वीक्ष्य स्वामिविवेकानन्दस्य मनः दुःखनिपीडितं सञ्जातम्। तेनावगतं यत् - भारतस्यावनतेः मूलं कारणं- सम्पदुत्पादकानां साधारणदरिद्रजनानां शोषणं, तान् प्रति हेयदृष्टिः, तथा नारीणाम् अवहेलनम्। तेन एतदपि प्रत्यक्षीकृतं यत् दारिद्र्ये सत्यपि सर्वत्र जनानां जीवनेषु धर्मो जीवच्छक्तिरूपः, आध्यात्मिकता एव जातेः प्राणकेन्द्रभूता, आध्यात्मिकजीवने शक्तिसञ्चारेण एव अस्याः जातेः पुनरभ्युन्नतिः नवजीवनलाभः च स्याताम्। स्वामिविवेकानन्दस्य प्रत्ययः आसीत् यत् - 'वेदान्त'नाम्ना परिचिते भारतवर्षस्य प्राचीनाध्यात्मिकदर्शने एतादृशानि बलसम्पन्नानि आध्यात्मिकतत्त्वानि निहितानि सन्ति येषां व्यावहारिकजीवने प्रयोगेण सम्पूर्णा जातिरुज्जीविता स्यात्। अपि च, पाश्चात्यदेशान् गत्वा विवेकानन्देनावलोकितं यत्- तत्रस्था लौकिकव्यवहारपटवोऽपि निःसङ्गता-उद्वेग-निरर्थकतादि-अस्तित्वसम्पर्कित-मनस्तात्त्विकसमस्याभिः, हिंसा-नीतिहीनतादिसामाजिकसङ्कटैश्च आक्रान्ताः। एतेषां सङ्कटानां समाधानं वेदान्तस्य शक्तिगर्भतत्त्वसमूहैः कर्तुं शक्यते इति विवेकानन्दस्य दृढविश्वास आसीत्। तस्मात् स्वामिविवेकानन्दः श्रीरामकृष्णजीवनमाध्यमेन तदीयवचनमाध्यमेन च प्रकाशितस्य वेदान्तस्य शक्तिप्रदतत्त्वसमूहान् जनसाधारणेभ्यः प्रचारितवान् येन सर्वस्तरीयाणां समेषाम् आध्यात्मिकी उन्नतिः स्यात्।

## २७.६) समन्वयः

अद्वैतवेदान्तदर्शनमते ज्ञानादेव तु कैवल्यम्। नान्यः पन्था विद्यते। ईश्वराराधनेन, ईश्वरपूजनेन, योगमार्गेण द्वैतमार्गेण वा कैवल्यं न लभ्यते। द्वैतवेदान्तदर्शनमते भक्तिरेव भगवत्साक्षात्कारकारणम्। श्रीरामकृष्णमतं हि 'यावन्ति मतानि तावन्तः पन्थानः' इति। अर्थात् भगवत्प्राप्तये यद्यपि बहूनि मतानि मार्गाणि च सन्ति, गन्तव्यस्थलं तु समेषां दर्शनानां साधनमार्गाणां वा समानमेव- ईश्वरतत्त्वसाक्षात्कारः। समेषामेव धर्मसम्प्रदायानां बौद्ध-जैन-महम्मदीय-खृष्टीयधर्माणाम् अपि अन्तिमं तावत् लक्ष्यं मोक्ष एव। स च दुःखनिवृत्तिरूपः, आनन्दावाप्तिरूपः, पुनः पुनः जन्ममरणसंसारचक्रनिवृत्तिरूपः वा। स एक ईश्वरः आत्मानं बहुधा प्रकाशयति। तथाहि प्रसिद्धं श्रुतिवाक्यं- 'एकं सद् विप्रा बहुधा वदन्ति' इति। अत एक एव



पन्था इति नास्ति। स्वीयाधिकारित्वानुगुण्येन यो यं मार्गम् आश्रित्य ईश्वरं प्राप्तुम् इच्छति स तेन एव मार्गेण ईश्वरं लब्धुं शक्नोति। श्रीरामकृष्णः स्वयं महम्मदीय-खृष्टीयादिधर्मसम्मतान् नियमान् स्वीयजीवने पालयन् एव एतादृशं निर्णयं प्रददौ। शिवमहिम्नस्तोस्त्रे अपि उच्यते-

**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्।**

**नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥ इति।**

किञ्च, इदं युक्तिसम्मतम् अपि। सर्वेषु धर्मेषु इदम एव उच्यते यत् - स्वमनःकालुष्यम् अपसार्य ईश्वराराधनेन शुभकर्मणा वा उत्कर्षमवाप्य जीवः कथं तस्य जीवत्वं हित्वा ईश्वरत्वम् आप्नुयात् इति। न हि कश्चित् धर्मः कुकर्मणा ईश्वरावाप्तिम् उपदिशति। अपि च, कृत्स्नैः धर्ममार्गैः यदि ईश्वरतत्त्वं न उपदिश्येत तर्हि तत्तद्धर्मप्रवर्तकानाम् अनुभवो अपि मिथ्यात्वेन पर्यवस्येत। नैतत् युक्तियुक्तम् अन्यथा एकतरपक्षपातः स्यात्। अतो धर्मसमन्वयो नितरां युक्तियुतः, अनुभवगोचरः, शास्त्रसम्मतश्च।

अयं धर्मसमन्वयः दर्शनतत्त्वसमन्वयनाम्ना अपि वक्तुं युक्तः। तथाहि अद्वैत-विशिष्टाद्वैत-द्वैतमतानां समन्वयः श्रीरामकृष्णदर्शने लभ्यते। श्रीरामकृष्णदेवः ब्रह्मणो निराकार-निर्गुणाव्यक्तादिरूपं स्वीकुर्वन् अपि तस्य साकारानन्तगुणमयादिरूपं स्वीकरोति, स स्वयम् एव एतदुपलभते स्म। तथाहि तन्मते- 'ईश्वरः साकारो, निराकारः, साकारनिराकाराभ्यां भिन्नोऽपि, स एवमित्थमिति वक्तुं न केनचिच्छक्यते' (श्रीश्रीरामकृष्णकथामृत) इति। ईश्वरस्य आनन्त्यं परिमितबुद्धयो मानवाः चिन्तयितुं न शक्नुवन्ति। मनुष्याणां कृते चिन्तनमिदमसम्भवमिति बोधयता पिपीलिकाया उदाहरणम् एकं तेन प्रदत्तम्- 'ईश्वरं वयं ज्ञातवन्त इति मानवाः चिन्तयन्ति। एका पिपीलिका शर्करानिर्मितं पर्वतम् एकं प्राप। कणमात्रं भुक्त्वा तस्या उदरपूर्तिर्जाता। अपरं च कणं मुखेन आदाय गृहं गच्छन्ती सा चिन्तितवती- इतः परम् आगम्य समग्रं पर्वतमेव स्वीकरिष्यामि इति' इति। इत्थं साधकाः ईश्वरस्य एकम् एकं रूपं साक्षात्कृत्य तदेव तस्य एकमात्रं स्वरूपम् इति चिन्तयन्तो विवदन्ते। वस्तुतस्तु ईश्वरस्य अनन्तानि रूपाणि, साधकभेदेन स भिन्नभिन्नरूपेण आत्मानं प्रकाशयति।

दर्शनतत्त्वदिशा वेदान्ते द्विप्रकारकं ब्रह्मणो रूपमुपलभ्यते - सोपाधिकं ब्रह्म, निरुपाधिकं ब्रह्म च। एते एव सगुणं ब्रह्म, निर्गुणं ब्रह्म चेति अभिधीयेते। यस्मात् एकस्य एव ब्रह्मणो रूपद्वयं, तस्मात् ते न भिन्ने। आचार्येण शङ्करेण तद्विषये उच्यते - 'द्विरूपं हि ब्रह्म अवगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम्। ... एवमेकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञत्वेन च वेदान्तेषूपदिश्यते' (ब्रह्मसूत्रम्, शाङ्करभाष्यम्, १-१-११) इति। सगुणं सोपाधिकं ब्रह्म उपास्यम्, निर्गुणं ब्रह्म ज्ञानमात्रस्वरूपम्, प्रत्यगात्मत्वेन अनुभवमात्रगम्यम्। एतयोः भेदो नाममात्रः, वस्तुतः तयोः नास्ति भेदः। तथाहि शाङ्करवचनम् - 'एको ह्ययमात्मा नाममात्रभेदेन बहुधाभिधीयते' इति। ईश्वरस्य साकारत्वं निराकारत्वं चावगमयितुं श्रीरामकृष्णदेवेन मनोज्ञम् एकम् उदाहरणं प्रदत्तम्- 'अरे, ईश्वरः साकारोऽपि, निराकारोऽपि, ताभ्याम् अपि बहुधा भिन्नः, तस्य उत्कर्षः केन ज्ञातुं शक्यते? साकारः कथम्? यथा जलं, हिमकरकं च। जलमेव घनीभवत् हिमं भवति, हिमस्य अन्तः बहिश्च जलमेव। जलम् अन्तरेण हिमं नाम नास्ति किञ्चित् अन्यत्। परन्तु दृश्यताम् - जलस्य निर्दिष्ट आकारो नास्ति, किन्तु हिमखण्डस्य आकारः



अस्ति। एवम् एव भक्तिरूपेण शैत्येन अखण्डसच्चिदानन्दसागरजलं घनीभूतं सद् भिन्नं भिन्नम् आकारं धत्ते' (श्रीश्रीरामकृष्ण लीलाप्रसङ्ग, प्रथम भाग, गुरुभाव- पूर्वार्ध ) इति।

अपि च, "तस्य आन्त्यं न सङ्गच्छते। स निराकारः, पुनश्च साकारः। भक्तानां कृते स साकारः, प्रपञ्चं स्वप्नवत् मन्यमानानां कृते स निराकारः। यथा सच्चिदानन्दसमुद्रमिव, पारं नास्ति, भक्तिशैत्येन मध्ये मध्ये जलं तुहिनं सञ्जातम्, तुहिनरूपेण घनीभूतं भवति। अर्थात् भक्तानुग्रहाय स व्यक्ततया, कदाचित् साकाररूपं धत्ते। ज्ञानसूर्ये उदिते सति तुहिनं तरलीभवति, तदा ईश्वरस्य साकाररूपं नावगम्यते। तदा रूपमपि न दृश्यते। स कीदृश इति वाचा प्रकाशयितुं न शक्यते। को वा वदेत्? यो वदिष्यति स एव तदा न भवति। तस्य 'अहं' नावलोक्यते" (श्रीश्रीरामकृष्णकथामृत) इति।

स्वामिविवेकानन्देन सामाजिकसमस्यायाः समाधानं विहायापि वेदान्तविषये प्रधानं कार्यद्वयं संसाधितं - वेदान्तस्य आधुनिकीकरणम्, ऐक्यसाधनं च। तस्मात् मध्ये मध्ये नूतनव्याख्यानरीतिः अपि तैः प्रदत्ता। वेदान्तस्य सारभूतं तत्त्वं युगप्रयोजनेन आधुनिकभाषया आधुनिकभाष्येण समं च तेन प्रकाशितम्, येन मानवानां जीवनसमस्यासमाधानाय तत् उपयोगि स्यात्। अपि च, वेदान्ततत्त्वानाम् आभ्यन्तरीणम् ऐक्यसाधनम् अपि तस्य महत्कार्येषु अन्यतमम्। वेदान्ते प्रधानतः द्वैत-विशिष्टाद्वैत-अचिन्त्यभेदाभेदाभिधेयानि तत्त्वानि सन्ति। तत्तत्सम्प्रदायस्था आचार्या तेषाम् एव मतं यथार्थम् अन्यत् सर्वं मिथ्या इति ब्रुवन्ति। एतेन परस्परविरोधिमतप्रकाशकत्वेन वेदान्तस्य प्रामाण्यं, सर्वजनग्राहित्वं च न स्याताम्। समञ्च, एतदपि सत्यं यद् यस्माद् आध्यात्मिकविकाशस्य स्तरभेदः प्रतिव्यक्ति विद्यते तस्माद् यदि किञ्चिद्दर्शनं सर्वेषाम् आध्यात्मिकं प्रयोजनं परिपूरयितुं समर्थं स्यात् तर्हि तत् सर्वजनग्राह्यं स्यात्, नान्यथा। भारतवर्षस्य पुनर्जागरणाय, हिन्दुधर्मस्य ऐक्यसाधनाय च वेदान्तस्य संहतिसाधनं नितराम् अपेक्षितम् आसीत्। श्रीरामकृष्णस्य जीवनम् अनुभवं च दृष्ट्वा विवेकानन्दो वेदान्तसम्प्रदायानाम् उपदलीयमतानां च संहतिसाधनस्य पन्थानम् आविश्चकार। श्रीरामकृष्णदेवो निम्नस्तरीयक्रियाबहुलमूर्तिपूजार्चनादिभ्यः उच्चैस्तरीयाद्वैतसाधनं कृत्वा सर्वप्रकारकम् आध्यात्मिकं तत्त्वम् उपलब्धवान्। एतस्माद् उपलब्धिजातप्रज्ञाबलात् स इममेव सिद्धान्तं चकार यद् द्वैत-विशिष्टाद्वैतादिमतानि आध्यात्मिकोपलब्धेः भिन्नभिन्नस्तराणां द्योतकानि, प्रतिसम्प्रदायं परमसत्तासम्बन्धि यन्मतं विद्यते तद् आध्यात्मिकोपलब्धेः तत्तत्स्तरेषु सत्यभूतमेव। श्रीरामकृष्णदेवसदृश एव कश्चन यः सर्वाणि मतानि, सर्वं च पन्थानम् अतिक्रान्तः स एव एतद् वक्तुं शक्नोति। एतस्मिन् विषये एकम् उदाहरणं तेन भूयशः प्रदीयते स्म – भिन्ना जनाः भिन्ने भिन्ने समये बहुरूपिणं कृकलासम् एकं दृष्ट्वा तस्य वर्णविषये विवदन्ते स्म। केनचित् तस्य वर्णो रक्तः, केनचित् हरितः, केनचित् पीतो वा उच्यते स्म। तस्य यथार्थभूतो वर्णः क इत्यस्मिन् विषये विवदमाना स्वकीयं मतमेव यथार्थभूतं मन्यन्ते स्म। तदा कश्चन जनो यः तस्य वृक्षस्य अधस्तात् वसति स्म, स उवाच यद् अयं कृकलासः कालभेदेन स्वीयं वर्णं परिवर्तयति, कदाचित् तस्य कश्चित् अपि वर्णो न तिष्ठति इति। एवं श्रीरामकृष्णो वेदान्तस्य कञ्चन मतवादविशेषं, हिन्दुधर्मस्य सम्प्रदायविशेषं वा पक्षपातदृष्ट्या न पश्यति स्म, सर्वेषां मतानाम् उपरि एव तस्य श्रद्धा आसीत्।



श्रीरामकृष्णप्रज्ञां भित्तीकृत्य स्वामिविवेकानन्देन शङ्कर-रामानुज-मध्वादिमतानां समन्वयसाधनाय प्रयतितम्। परन्तु एतेषु अद्वैततत्त्वमेव सर्वोच्चैस्तरीयोपब्धित्वेन पश्यन् स तदेव अभ्यर्हितत्वेन प्रचारितवान्। तथाहि तेनोच्यते- "विधातुरिच्छया तादृशमेकं जनमहं प्रत्यक्षीकृतवान् य एकस्मिन् पक्षे प्रबलद्वैतवादी, अपरपक्षे एकनिष्ठः अद्वैतवादी, अन्यस्मिन् पक्षे परमो भक्तः, पुनश्च परमो ज्ञानी। अस्माद् एव लब्धशिक्षः अहम् अन्ध इव भाष्यकाराणाम् अनुसरणम् अकृत्वा स्वतन्त्रतया उत्कृष्टरूपेण उपनिषत्तत्त्वम्, अन्यानि च शास्त्राणि बोद्धुं शक्तवान्। ..." इति। "अस्माभिः ज्ञातव्यं यद् एकमेव सत्यं लक्षधा प्रकाशम् इयात्, प्रत्येकं भावः तत्तन्निर्दिष्टसीमाभ्यन्तरे यथार्थभूत एव। अस्माभिः शिक्षणीयं यत्- कश्चिद् विषयो भिन्नाभ्यो दिग्भ्यः शतधा द्रष्टुं शक्यः, तथापि विषयस्तु समान एव तिष्ठति" इति।

यद्यपि ऋग्वेदीया ऋषय एव समन्वयतत्त्वं निरुचुः, तथापि आधुनिककाले श्रीरामकृष्णदेवेन एव प्रत्यक्षानुभूतिद्वारा अस्य सत्यता प्रमाणिता। न केवलं वेदान्तसम्प्रदायानां समन्वयः, भिन्नभिन्नधर्माणाम् अपि समन्वयः अत्र लभ्यते। तथाहि उच्यते स्वामिविवेकानन्दपादैः - "बुद्धः किम् उपदिष्टवान् यत् बहु सत्यम्, अहङ्कारः मिथ्या, यत्र कठोरहिन्दवः स्वीकुर्वन्ति यत् एकम् एव सत्यं, बहु च मिथ्या मन्यन्ते? इति स्वामिविवेकानन्दः पृष्टः। स्वामिना उक्तम् - आम्, किञ्च, श्रीरामकृष्णपरमहंसेन सह अहं पुनः एतत् संयोजयामि यत् एकं बहु च वस्तुतः एकमेव सत्यतत्त्वम्, यद्धि एकेन एव मनसा भिन्नकाले भिन्नचित्तभूमौ च गृह्यते" इति। "Did Buddha teach that the many was real and the ego unreal, while orthodox Hinduism regards the One as the real, and the many as unreal?" the Swami was asked. 'Yes', answered the Swami. "And what Ramakrishna Paramahamsa and I have added to this is, that the Many and the One are the same Reality, perceived by the same mind at different times and in different attitudes."- The Complete Works of Swami Vivekananda, Vol. ८. page २६१. Sayings and Utterances अस्यार्थो हि - अद्वैतं द्वैतं च तत्त्वम् एकमेव सत्यं परमतत्त्वं यद्धि मनसो भिन्नस्तरेषु भिन्नसमयेषु च उपलभ्यते।



## पाठगतप्रश्नाः-२

७. विवेकानन्ददर्शने कस्य सर्वाधिकतया प्रभावः आसीत्?

८. शिवमहिम्नस्तोत्रे समन्वयपरकः श्लोकांशः कः?

९. विवेकानन्दप्रचारितस्य दर्शनस्य लक्ष्यं किम् आसीत्?

१०. श्रीरामकृष्णमते ईश्वरस्वरूपं किम्?

११. दर्शनतत्त्वदिशा वेदान्ते द्विप्रकारकं ब्रह्मणो रूपमुपलभ्यते - के ते?

१२. एक एव ईश्वरः आत्मानं बहुधा प्रकाशयति- इत्यत्र श्रुतिप्रमाणं किम्?



## २७.७) अपरोक्षानुभूतिः - आध्यात्मिकसत्यसमूहस्य प्रमाणम्, परमपुरुषार्थश्च

वर्तमानकाले श्रीरामकृष्णस्य अन्यतममवदानं तावत् - मनुजनूनां मनःसु अतीन्दियसत्यं प्रति श्रद्धायाः पुनरुद्धारस्तथा ईश्वरलाभ एव जीवनस्य परमलक्ष्यम् इति तत्त्वस्य पुनःप्रतिष्ठापनम्। युवको नरेन्द्रनाथः अज्ञेयवादसमाच्छन्नचित्तः बहुभ्यः आचार्येभ्यः ईश्वरं ते दृष्टवन्तः न वा इति पृष्ट्वा अपि सदुत्तरं न प्राप्तवान्। अन्ते श्रीरामकृष्णं यदा पप्रच्छ - 'महोदय, भवता ईश्वरः प्रत्यक्षीकृतः वा?' इति, तदा अविचलितचित्तः स उक्तवान्- 'आम्, दृष्टम्। यथा त्वां पश्यामि, ईश्वरम् अपि तथैव सुस्पष्टं पश्यामि' इति। श्रीरामकृष्णस्य एतादृशं निःसन्दिग्धं दृढं वचनं निशम्य न केवलं नरेन्द्रनाथस्य, आधुनिककाले जगति सहस्रशः मनुष्याणाम् ईश्वरोपरि विश्वासः सञ्जातः। श्रीरामकृष्णपरमहंसेन अपरोक्षानुभूतिलाभः एव मनुष्यजीवनस्य उद्देश्यत्वेन प्रतिष्ठापितः। न केवलं तदेव, तेनोक्तं- अनुभूतिः एव ईश्वरात्माद्याध्यात्मिकप्रपञ्चस्य, इन्द्रियातीतसत्यसमूहानां च प्रमाणभूता। स्वामिविवेकानन्देन भारते पाश्चात्त्यदेशेषु च गुरोः अपरोक्षानुभूतिलाभरूपादर्शः प्रचारितः। श्रीरामकृष्णागमनात् प्राक् जनाः विश्वासपुरःसरम् आचारानुष्ठानादिकं नैतिकोपदेशान् च धर्मत्वेन मन्यन्ते स्म। विवेकानन्दस्तु धर्मं चरमतत्त्वस्य उपलब्धित्वेन निर्घोषयामास- “धर्मो हि जीवने उपलब्धिविषयः, न केवलं श्रवणस्य, श्रुत्वा वा स्वीकारस्य विषयः” इति। धर्मीयदर्शनविषये प्रत्यक्षानुभूतिरेव निकषभूता। आधुनिककाले अनेके एव इदं वेदान्तदर्शनस्य स्वतःसिद्धं तत्त्वमिति चिन्तयन्ति। वस्तुतः वेदान्तदर्शनस्य परम्परागता आचार्या आगमं तथा श्रुतिमेव चरमप्रमाणत्वेन अङ्गीकुर्वन्ति, न तु अपरोक्षानुभूतिम्। परन्तु शङ्करस्य अद्वैतदर्शने अपरोक्षानुभवः प्रमाणत्वेन स्वीक्रियते एव। तथाहि जीवन्मुक्तिप्रतिष्ठापनकाले तेनोक्तं यद् यदि जीवन्मुक्तिर्न स्वीक्रियते तर्हि सर्वाणि मोक्षशास्त्राणि अविद्वत्पुरुषेण लिखितानीति तेषां प्रामाण्यं न स्यात्। अतः शास्त्राणि अनुभवविद्भिरेव लिखितानीति स्वीकार्यम्। तेन अपरोक्षानुभवस्य प्रामाण्यम् अद्वैतदर्शने स्वीक्रियते इति निश्चप्रचम्। इदमत्र ज्ञेयं यत् आध्यात्मिकप्रपञ्चे अपरोक्षानुभूतिरेव लक्ष्यभूता प्रमाणभूता च, तथापि शास्त्रोक्तश्रद्धा-विश्वास-निःस्वार्थपरतादिगुणाः रीतयश्च अवश्यं पालनीयाः, न तु हेयाः। अनुभूतिरपि शास्त्रविरुद्धा न स्यात्, अपि च यथार्थानुभूतिः शास्त्रसम्मत एव भवेत्। तेन च सर्वेषाम् परमतत्त्वानुभवसम्पन्नानां साधकानां महापुरुषाणां च अनुभूतिः प्रमाणभूता सती शास्त्रेण अविरुद्धा भवति।

## २७.८) योगचतुष्टयम् -

कर्मयोगः ज्ञानयोगः भक्तियोगः राजयोगः चेति योगचतुष्टम् भारतीयदर्शने नितरां प्रसिद्धम्। स्वामिविवेकानन्देन अपि योगचतुष्टयविषये स्वमतं विशदीकृतम्। तस्य चतुर्णां योगानां समन्वयः अतीव प्रसिद्धः। तन्मते एकैकः योगः मोक्षाय अलम्। सर्वेषां योगानां परमलक्ष्यं तु मोक्षः एव। अतः मोक्षलाभाय यदि योगचतुष्टयम् अपि स्वीक्रियते तर्हि नास्ति दोषः। किञ्च, व्यावहारिकजीवने योगचतुष्कस्य समन्वयः एव तस्य इष्टः आसीत् इति मन्यते। अत्र योगशब्दस्य अर्थः मोक्षलाभाय निर्दिष्टः साधनमार्गः, यः मार्गः परमात्मना सह जीवात्मानं संयुनक्ति।

## २७.८.१) कर्मयोगः

गीतासु कर्मयोगः अत्यन्तं प्रसिद्धः। कर्मयोगः नाम निष्कामभावनया कर्तृत्वबुद्धिं परित्यज्य फलकामनाराहित्येन साधकेन कर्तव्यं कर्म सम्पादनम्। सामान्यतः सर्वे मानवाः इदं कार्यं क्रियते चेत् मम इदं फलं भविष्यति इति फलकामनया कार्यं कुर्वन्ति, प्रत्येकं कर्मणाम् अस्ति कश्चित् अभिप्रायः। यथा कश्चित् स्वर्गं गन्तुं यज्ञं करोति, अथवा कश्चित् अर्थलाभाय कार्यं करोति। कार्यं यः करोति अस्ति तस्य कर्तृत्वबुद्धिः - अहं करोमि इति। एवं कर्तृत्वबुद्धिपूर्वकं यत् यत् कर्म क्रियते सर्वस्य अपि कर्मणः फलम् अवश्यं भवति। तच्च कर्मफलं कर्त्रा भोक्तव्यम्। कर्मफलभोगाय पुनः पुनः शरीरधारणं कर्तव्यम्। कर्मफलं शुभं भवति चेत् कर्ता सुखं प्राप्नोति, कर्मफलं दुष्टं चेत् कर्ता दुःखम् अवाप्नोति। संसारस्थितः जनः कर्मफलम् अतिक्रान्तुं न समर्थः। परन्तु इदं कर्म कर्तृत्वबुद्धिपूर्वकं न क्रियते चेत् अर्थात् निष्कामतया क्रियते चेत् फलं न जनयति। तस्मात् निष्कामकर्मणा न जनः बध्यते, अपि तु निष्कामकर्मणा मानवानां आत्मज्ञानं भवति।

उच्यते च भगवता वासुदेवेन श्रीमद्भगवद्गीतायां -

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**

**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥ (श्रीमद्भगवद्गीता -३. )**

अतः आसक्तिरहिततया कर्तव्यं कर्म सम्पादितव्यम्। प्रेमपूर्वकं कर्म कर्तव्यम्। कर्मणः कृते एव कर्म कर्तव्यम्। लघुबालकान् प्रति किञ्चित् दीयते चेत् यथा प्रतिदानरूपेण किमपि न याच्यते, तद्वत् कर्म क्रियते चेत् तस्य प्रतिदानरूपेण न किञ्चित् मनसा अपि याचनीयम्। कर्म यदा आध्यात्मिकोन्नत्यै सहायकं भवति तदा एव स योगपदवीम् अधिरोहति। अयमेव कर्मयोगः। अस्माभिः कर्म विहाय एकं क्षणम् अपि स्थातुं न शक्यते। यस्मात् कर्म कर्तव्यम् एव तस्मात् यदि निष्कामतया कर्म अस्माभिः कर्तुं शक्यते तर्हि तत् मोक्षाय कल्पते। अतः कर्मयोगः सर्वैः मुमुक्षिभिः नितराम् अनुष्ठेयः।

## २७.८.२) ज्ञानयोगः

ज्ञानयोगः नाम वस्तुतः वेदान्तदर्शनम्। अयं विचारस्य मार्गः। मानवानां यथार्थं स्वरूपम् आच्छाद्य विराजते माया। मायामयम् इदं जगत्। जगति सर्वे एव मायया समाच्छन्नाः सन्तः संसारचक्रे पुनः पुनः आवर्तन्ते। मायायाः तत् आवरणं ज्ञानेन भस्मीकृत्य स्वस्य नित्यशुद्धबुद्धमुक्तस्वरूपस्य ज्ञानेन आत्मस्वरूपे प्रतिष्ठापयति यः साधनमार्गः स एव वस्तुतः ज्ञानयोगः। माया हि अज्ञानम्। अज्ञानेन भ्रान्ताः जीवाः आत्मनः स्वरूपं न जानन्ति। किं नाम आत्मनः स्वरूपम् इति चेत् -

**न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः।**

**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥ (श्रीमद्भगवद्गीता-२.२०)**

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥**



**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते।** (भगवद्गीता २.२३-२४)

शरीरं जायते, आत्मा तु न जायते, न च म्रियते, स हि नित्यः त्रिषु कालेषु अविकृतरूपेण विद्यमानः तिष्ठति। आत्मनः स्वरूपं वक्तुं न शक्यते, चिन्तयितुं न शक्यते, सः अविकार्यः, अचलः सन् अपि स सर्वगतः।

एकः एव आत्मा नामरूपोपाधिवशात् बहुत्वेन प्रतीयते। आत्मज्ञाने सति सर्वे उपाधयः सम्पूर्णतः नश्यन्ति, तेन च बहुत्वेन प्रतीयमानं सर्वम् आत्मनः अभिन्नत्वेन प्रतीयते। तदा मुक्तः पुरुषः सर्वेषु वस्तुषु आत्मानम् एव पश्यति। नास्ति तस्य शोकः मोहः वा। तथाहि आम्नायते -

**यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।**

**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ इति,**

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।**

**तत्र को मोहः कः शोक एकत्वम् अनुपश्यतः॥ इति च। (ईशोपनिषत् ६,७)**

इत्थं विचारपूर्वकज्ञानेन अज्ञाननाशे सति आत्मस्वरूपं ज्ञातं भवति, तदा मुक्तः जनः सर्वत्र आत्मानम् एव पश्यन् मोमुद्यते।

## २७.८.३) भक्तियोगः

चतुर्षु योगेषु अन्यतमः भक्तियोगः। भक्तिः नाम ईश्वरप्रेम। भगवति प्ररमा प्रीतिः एव भक्तिः। भक्तिः स्वयं साध्यरूपा साधनरूपा च। साधनमार्गेषु भक्तियोगस्य माहात्म्यं हि यत् परमलक्ष्यभूतस्य ईश्वरस्य प्राप्तये अयं सर्वापेक्षया सरलः स्वाभाविकः च मार्गः। परन्तु निम्नस्तरीया भक्तिः सङ्कीर्णतायाः बीजम्। इष्टनिष्ठा भक्तेः लक्षणं परन्तु इष्टनिष्ठाम् एव भक्तिं मन्यमानाः विवदन्ते सामान्याः जनाः। भक्तिर्हि द्विविधा - शुद्धा भक्तिः, गौणी भक्तिः च इति। गौणी भक्तिः वस्तुतः सामान्यतया इष्टनिष्ठा, मया उपास्यमानः ईश्वरः एव श्रेष्ठः, अन्येषां तु तदपेक्षया अवरः इति भावः गौण्यां भक्त्यां तिष्ठति। इयं हि अपक्वा भक्तिः। पक्वायां तु भक्त्यां घृणाबुद्धिः सम्पूर्णतः नाशम् एति। तदा तु केवलं सर्वभूतेषु प्रेमानुभवः एव भवति। सा एव वस्तुतः शुद्धा भक्तिः।

भक्तिविषये शाण्डिलसूत्रं हि "सा परानुरक्तिरीश्वरे" इति। अविच्छिन्नतैलधारावत् ध्येयस्य ईश्वरस्य निरन्तरं स्मरणेन हि बन्धनं नश्यति। स्मरणं दृढं भवति चेत् प्रत्यक्षानुभूतिः भवति, सा एव मुक्तेः कारणम्। भगवद्गीतायाम् उच्यते - भगवति मनः बुद्धिं च आवेश्य अनन्ययोगेन निरन्तरं भगवतः स्मरणं हि भक्तिः। भक्तः हि भगवतः अत्यन्तं प्रियः। किञ्च, भगवान् भक्तं तथा एव चालयति येन भक्तः भगवन्तं लभेत। तथाहि उच्यते श्रीमद्भगवद्गीतायाम् -

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**

**ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति।**

कठोपनिषदि अपि आम्नायते यत् भगवान् आत्मनः प्रियाय भक्ताय स्वस्वरूपं दर्शयति इति -



**नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन।**

**यमेवैष वृणुते तेन लभ्यस्तस्तैष आत्मा विवृणुते तनूं स्वाम्॥ इति।**

एवं भक्तियोगेन भगवदनुग्रहेण भगवन्तं साक्षात्कृत्य परमानन्दरूपं मोक्षम् आप्नोति इति भक्तियोगः अपि मोक्षसाधकः इत्यत्र नास्ति संशयः।

## २७.८.४) राजयोगः

राजयोगः प्राधान्येन साधनानि उपदिशति। पातञ्जलयोगसूत्राणि अत्र मुख्यानि। प्रत्येकं योगमार्गाणाम् इव राजयोगस्य अपि लक्ष्यं परमपुरुषार्थलाभः मोक्षः, स च मोक्षः समाधौ लभ्यते। मनःसंयमः एव वस्तुतः राजयोगस्य उद्देश्यम्। पुनः पुनः अभ्यासेन मनः संयतं भवति, संयतेन एकाग्रेण च मनसा परमतत्त्वसाक्षात्काररूपः समाधिः अधिगतः भवति। तस्मात् अस्य योगस्य नामान्तरम् अभ्यासयोगः इति। किञ्च, समाधिलाभाय अस्य योगस्य अष्टौ अङ्गानि उपदिष्टानि तस्मात् अष्टाङ्गयोग इत्यपि अस्य योगस्य नाम। तानि अष्टौ अङ्गानि हि - यमः, नियमः, आसनम्, प्राणायामः, प्रत्याहारः, धारणा, ध्यानं, समाधिः च। यमः नाम अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाः। शौच-सन्तोष-तपः-स्वाध्याय-ईश्वरप्रणिधानानि नियमाः। यैः करचरणादिसंस्थानविशेषलक्षणैः पद्मस्वस्तिकादिभिः स्थिरतया दीर्घक्षणं सुखेन उपवेष्टुं शक्यते तानि आसनानि। रेचक-पूरक-कुम्भक-लक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणपुरःसरं चित्तस्वरूपग्रहणं प्रत्याहारः। एकस्मिन् विषये चित्तस्य धारणं हि धारणा। ध्यानं नाम परमात्मनि मनसः तैलधारावत् अविच्छिन्नतया प्रवाहः अर्थात् एकाग्रता। एकाग्रेण मनसा चित्तवृत्तिनिरोधद्वारा आत्मस्वरूपस्थितिः समाधिः। एतानि अङ्गानि यथाक्रमम् अनुष्ठेयानि।

राजयोगः हि अन्तर्विज्ञानम्। अस्माकम् अन्तःस्थितं ज्ञानं कथं प्रकाशतां गमिष्यति इति वैज्ञानिकीं प्रक्रियां प्रदर्शयति अयं योगः। अन्तःकरणस्य संयम एव वस्तुतः राजयोगः। मनः संयतं भवति चेत् आत्मज्ञानं स्वतः प्रकाशते। मनः तदैव संयतं भवति यदा प्राणस्य निग्रहः कर्तुं शक्यते। प्राणस्य निग्रहाय प्राणायामः नियमानुसारेण कर्तव्यः। प्राणायामेन चित्तं देहश्च पवित्रं निर्मलं च भवति। प्राणायामस्य त्रीणि अङ्गानि सन्ति - पूरकः, कुम्भकः, रेचकश्च। पूरको नाम श्वासग्रहणं, कुम्भको नाम श्वासरोधः, रेचको हि श्वासत्यागः। मनुष्याणां मेरुदण्डे मस्तिष्कात् आरभ्य अधोभागपर्यन्तं द्वे नाड्यौ विस्तृते स्तः - ईडा पिङ्गला चेति। एते शक्तिप्रवाहे देहे सर्वत्र शक्तिसञ्चारं कुरुतः। शक्तिः अस्माकं शरीरस्थेषु चक्रेषु सञ्चिता तिष्ठति। अस्माकं शरीरे सप्त चक्राणि सन्ति - मूलाधारः, स्वाधिष्ठानम्, मणिपुरम्, अनाहतः, विशुद्धः, आज्ञा, सहस्रारः इति। सहस्रारः मस्तके, आज्ञा भ्रूद्वयमध्ये, विशुद्धः कण्ठे, अनाहत हृदये, मणिपूरं नाभिदेशे, स्वाधिष्ठानम् उदरस्य निम्नदेशे, मूलाधारः मेरुदण्डस्य निम्नदेशे विराजन्ते। एतानि चक्राणि सुप्तपद्मरूपेण कल्पन्त्ये योगिभिः। मेरुदण्डस्य निम्नदेशे प्रजननशक्तेराधारभूतं मूलाधारचक्रं विद्यते। तत्र कश्चित् क्षुद्रः निद्रितः सर्पः कुण्डलीकृतः तिष्ठति इति योगिनः कल्पन्ते। इयमेव कुण्डलिनीशक्तिः इत्युच्यते। अस्य निद्रितसर्पस्य जागरणमेव कुण्डलिनीशक्तेः जागरणम् इत्युच्यते। आदौ



प्राणायामेन कुण्डलिनीशक्तेः जागरणं कर्तव्यम्, ततः एकैकं चक्रं विभेद्य कुण्डलिनीशक्तिः सुषुम्णामार्गेण मस्तिष्कं प्रेरणीया। यदा सुषुम्णामार्गेण शक्तिः सहस्रारचक्रस्पर्शं करिष्यति तदा आत्मज्ञानं भविष्यति।

## २७.९) शिवज्ञानेन जीवसेवा

सेवाभावः विवेकानन्ददर्शनस्य अन्यतमः प्रधानः विषयः। सेवाभावः इत्यत्र न सामान्यतया सेवाभावः किन्तु शिवज्ञानेन जीवसेवाभावः। शिवज्ञानेन जीवसेवा इत्यस्य अर्थः जीवेषु शिवत्वम् आरोप्य जीवः साक्षात् शिवः इति निःसंशयं निश्चित्य तस्य सेवनम्। जीवः साक्षात् ईश्वरः, नास्ति जीवेश्वरयोः लेशमात्रम् अपि भेदः इति शास्त्रपाठात् अस्माभिः ज्ञायते। परन्तु न सामान्येन जनेन तादृशः आध्यात्मिकः अनुभवः सम्भवति। विरलानां केषाञ्चित् मुक्तपुरुषाणां तादृशः अनुभवः स्यात्। विवेकानन्दस्तु अयं सेवाभावः साधनमार्गत्वेन संसूचितः। विवेकानन्दमते व्यावहारिकजीवनात् आध्यात्मिकं जीवनं नास्ति पृथक्। व्यवहारजीवनम् एव अध्यात्ममयं करणीयम्, आध्यात्मिकभावनाः च व्यवहारजीवने प्रयोक्तव्याः। तेन एव आत्मोन्नतिः आशु भवति। तन्मते शास्त्रोक्तरीत्या ईश्वरः हि अनिर्देश्यः। परन्तु अनिर्देश्यस्य ईश्वरस्य अधिष्ठानं तु जीवाः एव। अतः जीवस्य यदि पूजा क्रियते तर्हि एव अनिर्देशस्य ईश्वरस्य पूजा भवति। ईश्वरः हि जीवरूपेण आत्मानं प्रकाशयति। अतः मन्दिरेषु ईश्वरस्य पूजापेक्षया साक्षात् अभुक्तस्य नररूपिणः नारायणस्य भोजनौषदादिभिः पूजा करणीया। तेन एव वस्तुतः ईश्वरस्य पूजा भवति। तथाहि उच्यते तेन स्वकीये पद्ये -

**क्वेशम् अन्वेषति त्यक्त्वा बहुरूपैः पुरःस्थितम्।**
**जीवे प्रेम हि यस्यास्ति स ईश्वरं हि सेवते॥ इति।**

अस्यार्थः - हे मित्र! द्ररिद्रादिनानारूपैः समीपे स्थितम् ईश्वरं परित्यज्य कुत्र ईश्वरम् अन्विषति। जीवे प्रेम यस्य अस्ति स एव ईश्वरं सेवते इति।

विवेकानन्दस्य अयं सेवाभावः यथा कस्यचित् साधकस्य आध्यात्मिकजीवनस्य उन्नत्यै कल्पते तथैव व्यवहारजीवने अपि उन्नत्यै कल्पते। न हि अभुक्ताय भोजनं विना किञ्चित् रोचते। अभुक्ते उदरे धर्मः न भवति इति श्रीरामकृष्णस्य उक्तिः। तस्मात् आदौ दरिद्राणां कृते भोजनम् औषधं वासस्थानं शिक्षा च देयम्, ततः परं धर्मदानम्। तेन एव वस्तुतः धर्मदानं सार्थकं भवति, नान्यथा। एवं विवेकानन्दस्य सेवाभावः वस्तुतः तदीयदर्शनस्य वैशिष्ट्येषु अन्यतमः। इत्थं सेवाभावनया यदि यथार्थतया कार्यं कर्तुं शक्यते तर्हि चित्तशुद्धिः शीघ्रं भवति, निर्मले चित्ते च आत्मतत्त्वम् अचिरं प्रकाशते। इत्थं विचिन्त्य एव स स्वप्रतिष्ठितस्य सन्न्यासिसङ्घस्य आदर्शरूपेण "आत्मनो मोक्षार्थं जगद्धिताय च" वचनं निरूपयामास। न केवलं स्वार्थान्धः जनः इव आत्मनः मोक्षाय यतनीयम्, अपि तु जगतः हितसाधनं करणीयम्। किञ्च, जगतः हितसाधनेन एव आत्मनः मोक्षः सम्पादनीयः इति आसीत् तस्य भावना।



## पाठगतप्रश्नाः-३

१३. विवेकानन्दमते आध्यात्मिकप्रपञ्चे प्रमाणभूतं किम्?

१४. विवेकानन्देन वर्णिताः चत्वारः योगाः के?

१५. योगशब्दस्य कः तावत् अर्थः?

१६. विवेकानन्दमते भक्तिः नाम का?

१७. विवेकानन्दमते भक्तिः कतिधा?

१८. विवेकानन्दमते योगिनां मते मानवशरीरे कति चक्राणि सन्ति, कानि च तानि?

१९. विवेकानन्दमते प्राणायामे कति प्रक्रियाः सन्ति?

२०. यमः नाम कः?

२१. नियमः नाम कः?



## पाठसारः-

विवेकानन्दः स्वयं यद्यपि सन्न्यासी आसीत् तथापि तस्य उपदेशः सर्वस्तरीयाणां सर्वसम्प्रदायानां मानवानां कृते आसीत्। गुरोः श्रीरामकृष्णात् लब्धशिक्षः स धर्मसमन्वयभावम् आविश्वं प्रचारयामास। तदीयदर्शने श्रीरामकृष्णस्य महान् प्रभावः दरीदृश्यते। विवेकानन्दस्य दर्शने वेदान्तस्य व्यावहारिकः प्रयोगः सम्यक्तया उलभ्यते। विवेकानन्दस्य मतम् आसीद् यत् शास्त्राणि न केवलं पठितव्यानि अपि तु शास्त्रोपदेशः स्वजीवने पालनीयः। जीवनसंग्रामे शास्त्रं यदि उपकारकं न भवति तर्हि शास्त्रस्य मूल्यं कुत्र? यद्यपि शास्त्रं प्रतिमुहूर्तम् अस्मान् उपकरोति, तथापि अस्माभिः तन्न ज्ञायते। स्वामिविवेकानन्देन उच्यते- “वेदान्तस्य महन्ति तत्त्वानि केवलम् अरण्येषु गिरिगुहासु आबद्धानि न तिष्ठेयुः, - विचारालये भजनालये दरिद्रकुटीरे धीवरगृहे छात्रस्य अध्ययनागारे सर्वत्र एतानि तत्त्वानि आलोचितानि भवेयुः, जीवने च प्रयुक्तानि भवेयुः। ...धीवरो यदि स्वम् आत्मत्वेन चिन्तयति तर्हि स उत्तमो धीवरो भविष्यति, विद्यार्थी यदि स्वम् आत्मत्वेन चिन्तयति तर्हि स उत्तमो विद्यार्थी भविष्यति...” इति।

शिवज्ञानेन जीवसेवाया आदर्शोऽपि व्यावहारिकवेदान्तस्य फलीभूतः अंशः। स्वामिविवेकानन्दस्य कर्मदर्शनमपि अपूर्वम्। स्वार्थरहितकर्मणा मनुष्य आध्यात्मिकताया उच्चतमं सोपानम् आरोढुं समर्थ इति अत्र प्रतिपाद्यते। कर्म–ज्ञान–भक्ति–राजयोगानां समन्वयः तस्य इष्ट आसीत्। रामकृष्णमिशन् इत्यस्य प्रतीके अयं समन्वयः तेन सम्यक् प्रदर्शितः। तदीयदर्शनस्य सारभूतं तत्त्वं हि – “आत्मनो मोक्षार्थं, जगद्धिताय च” इति। एवं श्रीरामकृष्णस्य विवेकानन्दस्य च दर्शनं परस्परं परिपूरकम् आसीदिति सूक्ष्मेक्षिकया विचार्यम्।





## पाठान्तप्रश्नाः

१. विवेकानन्दविषये लघुविवरणं दीयताम्।

२. किं नाम विवेकानन्दवेदान्तः?

३. कर्मयोगः नाम किम्?

४. विवेकानन्दस्य दर्शनसमन्वयः कीदृशः?

५. अपरोक्षानुभूतिः किमर्थम् अध्यात्मप्रपञ्चस्य प्रमाणम्?

६. भक्तिः नाम किम्?

७. भक्तियोगविषये लघुटिप्पणीं लिखत।

८. विवेकानन्ददर्शनस्य ज्ञानाय पृष्ठभूमिं विचारयत।

९. विवेकानन्ददर्शनस्य ज्ञानाय श्रीरामकृष्णदर्शनं किमर्थम् आवश्यकमिति विस्तरेण आलोचयत।

१०. विवेकानन्ददर्शनानुसारेण सेवाभावं पर्यालोचयत।

११. लघुटिप्पणीं लिखत – शिवज्ञानेन जीवसेवा।

१२. ज्ञानयोगस्य समासेन परिचयः दीयताम्।

१३. राजयोगपरिचयं लिखत।

१४. अष्टङ्गयोगः नाम किम्? अष्टाङ्गानां परिचयः प्रदीयताम्।

१५. चतुर्णां योगानां समन्वयः विवेकानन्ददर्शनानुसारेण क्रियताम्।

१६. विवेकानन्ददर्शनस्य मूलवैशिष्ट्यानि संक्षेपेण लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

१. नरेन्द्रनाथः।

२. श्रीरामकृष्णः।

३. वेदान्तवाक्यानि आश्रित्य एव दर्शनप्रचारं कृतवान् विवेकानन्दः, तस्मात्।

४. १८६३-ईशवीयाब्दस्य जन्वरिमासस्य १२-दिनाङ्कः।

५. १८९३।

६. नव्यवेदान्तः।

७. श्रीरामकृष्णस्य।

८. रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्। नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

९. सर्वस्तरीयाणां मानवानाम् आध्यात्मिकी अभ्युन्नतिः विवेकानन्ददर्शनस्य लक्ष्यम्।

१०. 'ईश्वरः साकारः, निराकारः, साकारनिराकाराभ्यां भिन्नोऽपि, स एवमित्थमिति वक्तुं न



केनचिच्छक्यते' इति।

११. सोपाधिकं ब्रह्म, निरुपाधिकं ब्रह्म च।

१२. 'एकं सद् विप्रा बहुधा वदन्ति' इति श्रुतिवाक्यम्।

१३. अपरोक्षानुभूतिः।

१४. कर्मयोगः, ज्ञानयोगः, भक्तियोगः, राजयोगः च।

१५. योगशब्दस्य अर्थः हि मोक्षलाभाय निर्दिष्टः साधनमार्गः, यः मार्गः परमात्मना सह जीवात्मानं संयुनक्ति।

१६. भगवति परमा प्रीतिः एव भक्तिः।

१७. भक्तिः द्विधा - शुद्धा गौणी चेति।

१८. सप्त चक्राणि। तानि मूलाधारः, स्वाधिष्ठानम्, मणिपुरम्, अनाहतः, विशुद्धः, आज्ञा, सहस्रारः इति।

१९. तिस्रः। पूरक-कुम्भक-रेचकाः।

२०. यमः नाम अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाः।

२१. शौच-सन्तोष-तपः-स्वाध्याय-ईश्वरप्रणिधानानि नियमाः।

॥इति सप्तविंशः पाठः॥



# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## उच्चमाध्यमिककक्षायाः पाठ्यक्रमः (द्वादशी श्रेणी)

## भारतीयदर्शनम् (३४७)

### औचित्यम्

सर्वेऽपि जन्तव इष्टं लब्धुम् इच्छन्ति। अनिष्टं परिहर्तुम् इच्छन्ति। सुखम् इष्टम् दुःखं हि अनिष्टम्। अत एव सुखस्य उपायः अपि इष्टः। दुःखस्य उपायः अपि अनिष्टः। तत्र सुखं द्विविधम्। नित्यम् अनित्यं च। नित्यं सुखम् आत्मसुखम्। तत् जन्यम् नास्ति। न केनापि कारणेन तत् सुखम् उत्पद्यते। तत् सुखम् तु आत्मस्वभावः एव। अनित्यम् सुखम् जन्यम् अस्ति। तस्य किमपि कारणम् अस्ति। अनित्यसुखस्य कारणं हि धर्मः। धर्मं विना सुखं नैव भवति। धर्मोऽपि जन्यः अस्ति। वेदविहितयागादिः धर्मः। तद्यागादिजन्यः पुण्याख्यः अदृष्टविशेषो वा धर्मः। धर्मः अन्तःकरणे विद्यमानः कश्चित् गुणविशेषः।

दुःखस्य किमपि कारणं तु स्यादेव। सुखं वा दुःखं वा कारणं विना नैव उत्पद्येते। सुखस्य किं कारणम् इति यथायथम् असन्दिग्धं च ज्ञानम् आवश्यकम्। तेन इष्टं यत् सुखं तस्य यत् साधनं तत्र निष्ठया प्रवृत्तिः भवेत्। किञ्च सुखस्य कति भेदाः सन्ति तदपि स्पष्टं जानीयात्। इत्थम् 'इदं मदिष्टसाधनम्' इति ज्ञानम् प्रवृत्तिं प्रति कारणं भवति।

पुरुषः नरो वा नारी वा यद् कामयते इच्छति अर्थयते स एव पुरुषार्थः। पुरुषः सुखमेव अर्थयते। अतः सुखमेव हि पुरुषार्थः सकलप्राणिसाधारणः। सुखस्य प्रकाराः सन्ति। अतः एव पुरुषार्थस्य प्रकाराः सन्ति। नित्यसुखं हि मोक्षः कथ्यते। अनित्यसुखं हि कामः कथ्यते। कामस्य कारणं हि धर्मः कथ्यते। धर्मस्य साधनं हि अर्थः कथ्यते। अर्थो हि धर्मस्य सामग्री धनादिकम्। एवं धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः सुप्रसिद्धा वैदिकसंस्कृतौ। तेषु काममोक्षौ मुख्यौ। कामस्य साक्षात् कारणं धर्मः। धर्मस्य प्रयोजकः अर्थः। कामलाभाय एव धर्मः अर्थः च सेव्यते नान्यथा। अथः धर्मार्थौ गौणौ। मुख्ययोः काममोक्षयोः अपि मोक्षः नित्यः। अतः मोक्षः एव परमः पुरुषार्थः। अर्थः अनित्यः इति प्रत्यक्षेण ज्ञायते। इन्द्रियजन्यं सुखम् क्षणिकम् इति तदपि अनित्यमेव इति अनुभवसिद्धम्। अनित्यसुखस्य कारणं धर्मः अपि अर्थात् अनित्यः एव। न हि कारणसत्त्वे कार्याभावः भवति।

वेदान्ते श्रुतिः तदुनुकूला युक्तिः अनुभवश्च इति एतत् त्रितयम् सदा प्रमाणत्वेन उपन्यस्यते।

यत्कृतकं तदनित्यम् इति नियमः दृष्टानुमानोभयसिद्धः। धर्मः कर्मजन्यः। अतः अनित्यः। कामः धर्मजन्यः। अतः अनित्यः। इत्थं सिद्धम् यत् मोक्षः एव परमः पुरुषार्थः नित्यत्वात्। मोक्षः ब्रह्मज्ञानाद् भवति इति अद्वैतवेदान्तस्य सिद्धान्तः। अतः ब्रह्म किम्। तज्ज्ञानं किम्। तल्लाभस्य प्रमाणं किमिति जिज्ञासा। तन्निवृत्तये अद्वैतवेदान्तमतानुकूलानि प्रकरणानि अत्र सन्ति।

सर्वेऽपि दार्शनिका जीवानां सुखवाञ्छापूर्णार्थं यतन्ते। परन्तु सुखसाधनविषये स्वरूपविषये च तेषु नैके मतभेदाः सन्ति।

दशमकक्षायाः ग्रन्थे समेषामपि दर्शनानाम् सामान्यः परिचयः विद्यते। वेदान्तस्य प्रस्थानानाम् वेदान्तसम्पदायानां च विशेषः परिचयः विद्यते। एवञ्च अद्वैतवेदान्तानुसारम् संक्षेपेण केचिद् विषया उपन्यस्ताः। स विषयः दशम्याम् पठितः स्यात्। तस्य पठनेन द्वादशकक्षायाः पाठः सुबोधः प्रतीयेत। अतः दशमकक्षायाः पाठानां सम्यक् अध्ययनं विधाय द्वादशकक्षायाः पाठा अध्येतव्या। तेन विषयस्यास्य सुष्ठु ज्ञानं भविष्यति।

द्वादशकक्षायाः अस्मिन् पाठ्यक्रमेम सांख्यानां दर्शनस्य विशेषः परिचयः कारितः। यतो हि कपिलस्य सांख्यदर्शनं वेदान्तस्य अति निकटम्। मुख्यः पूर्वपक्षः च। सांख्यानां गुणविचारः पुरुषविचारः सृष्टिविचारः इत्यादिकम् अद्वैतवेदान्ते किञ्चित् परिवर्तनेन गृहीतं दृश्यते। अतः पूर्वपक्षत्वेन मूलत्वेन च सांख्यानाम् अध्ययनम् अत्यन्तम् आवश्यकमिति हेतोः अत्र सांख्यदर्शनस्य विषयाः अत्र उपन्यस्यन्ते।

सकलानि दर्शनानि प्रमाणविषये स्वमतम् अभ्युपगच्छन्ति। वेदान्तिनोऽपि तथैव स्वमते दृढाः सन्ति। अतः अद्वैतवेदान्तमते कानि प्रमाणानि इत्यपि अस्यपाठ्यक्रमस्य वैशिष्ट्यम्।

इत्थम् बहुभिः प्रकारैः पाठ्यक्रमः छात्रहिताय निर्मितः। तेन दार्शनिकतत्त्वानि सुगमानि भविष्यन्ति इति आशास्महे।

## अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतकाव्यव्याकरणकोषः अनधीतदर्शनशास्त्रः।
- न्यायशास्त्रस्य तर्कसंग्रह इति ग्रन्थं दीपिकासहितं जानाति।
- न्यायभाषाम् अर्थात् न्यायशास्त्रस्य शैलीं जानाति।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।
- दर्शनं दिदृक्षुः मुमुक्षुश्च।

## प्रयोजनम् (सामान्यम्)

उच्चमाध्यमिकस्तरे भारतीयदर्शनस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- जीवनस्य चरमलक्ष्यं सुखलाभः। इह परत्र च। तद्विषयकं स्पष्टं ज्ञानं छात्रस्य भवतु इति लक्ष्यम्।
- बहूनि दर्शनानि सुखप्रतिपादनाय प्रवृत्तानि विरुध्यन्ते। तेषु विरोधस्य कानि कारणानि इति ज्ञात्वा छात्रः सूक्ष्मं चिन्तनं कर्तुम् प्रभवेत्।
- जीवने विभिन्नानां दार्शनिकसम्प्रदायानां परस्परकलहस्य कारणं ज्ञात्वा तेषु सौहार्दस्य निर्माणाय प्रयतेत इति सामर्थ्यम् छात्रस्य जायताम्।
- स्वस्य स्वपरिचितानां च जीवनं दर्शनमवलम्ब्य नेतुम् शक्नुयात्।
- भारतीयदर्शनस्य महिमानम् अवगम्य तस्य प्रचारे बद्धादरः सश्रद्धं प्रवर्तताम्।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकतां सर्वजनोपकारितां महिमानं च सगर्वं जगति प्रसारयेत् छात्रः।
- दर्शनस्य सामान्यज्ञानवर्धनं भविष्यति येन दार्शनिकग्रन्थानाम् सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- दर्शनाध्ययनेन छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।
- दार्शनिकचिन्तने रुचिमन्तः भूत्वा शक्ताः संलग्नाश्च भविष्यन्ति।

## प्रयोजनम् (विशिष्टम्)

**दर्शने प्रवेशस्य सामर्थ्यम्**

- दर्शने के विषया अन्तर्भवन्ति इति सामान्यज्ञानं भवेत्।

- आस्तिकनास्तिकदर्शनभेदस्य ज्ञानं भवेत्।
- अद्वैतवेदान्तस्य विशिष्टः परिचयः भवेत्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दास्यन्ति।

**दर्शनाध्ययने सामर्थ्यम्**

- सांख्यानां दर्शनस्य विशिष्टं परिचयं प्राप्नुयात्।
- अद्वैतवेदान्तमतेन अध्यारोपः अपवादः मोक्षः तत्साधनानि इत्यादीनां बहूनां विषयाणां ज्ञानं भवेत्।
- वेदान्तमते स्वीकृतानां प्रमाणानां सविस्तरं ज्ञानं भवेत्।
- अस्य पाठ्यविषयस्य ज्ञानेन तस्मिन् दर्शने विद्यामानानाम् अन्येषाम् आकरग्रन्थानाम् अध्ययने समर्थो भवेत्।

**दर्शनप्रयोगस्य सामर्थ्यम्**

- दर्शनस्य स्पष्टं ज्ञानं प्राप्य स्वस्य जीवने तस्य प्रयोगं कृत्वा कृतकृत्यो भविष्यति।
- यथा वैद्यः जनं दृष्ट्वा तस्य रोगादिकं चिन्तयति। चौरः वित्तकाषादिकं चिन्तयति। वणिक् क्रेतारम् पश्यति। तथा जगतः दार्शनिकरूपेण दर्शने समर्थो भवेत्।
- अन्येषामपि दिग्भ्रान्तानां जनानां जीवने पथप्रदर्शकप्रदीपवत् सहायो भविष्यति।

## पाठ्यसामग्री

**पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति-**

- द्वे मुद्रिते पुस्तके।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि (Project) करणीयम्।
- दर्शनस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम् -** विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम् -** वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।

- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।
- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्।
- प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षाया भारतीयदर्शनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य त्रयो भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## अध्यायः - १ सांख्यदर्शनम् (पाठाः १-४)

**अध्यायस्य औचित्यम्**

महर्षिः कपिलो हि जन्मना सिद्धः। सर्वेषामपि दर्शनानां तद्दर्शनादेव प्रारम्भः। एवञ्च कपिलस्य सांख्यदर्शनं वेदान्तस्य अति निकटम्। मुख्यः पूर्वपक्षः च। सांख्यानां गुणविचारः पुरुषविचारः सृष्टिविचारः इत्यादिकम् अद्वैतवेदान्ते किञ्चित् परिवर्तनेन गृहीतं दृश्यते। अतः पूर्वपक्षत्वेन मूलत्वेन च सांख्यानाम् अध्ययनम् अत्यन्तम् आवश्यकमिति हेतोः अत्र सांख्यदर्शनस्य प्रोक्ताः विषयाः अत्र उपन्यस्याः।

## अध्यायः - २ वेदान्ते प्रमाणानि (पाठाः ५-१०)

**अध्यायस्य औचित्यम्**

निर्भ्रान्तं ज्ञानं ममास्तु को वा न वाञ्छति। परन्तु ज्ञानं कथं भवति, केन माध्यमेन भवति इति स्पष्टता आवश्यकी। तत्र वेदान्तमते भ्रान्तिरहितं ज्ञानं प्रमा केन प्रमाणेन भवति, तत्र वेदान्तिनः कानि प्रमाणानि अङ्गीकुर्वन्ति, तेषां स्वरूपं किम्, प्रक्रिया का, प्रमेयाणि कानि, प्रमाभेदाः के इति नैके विषयाः अस्मिन् प्रकरणे प्रतिपाद्याः। न्यायशैल्याः ज्ञानं विना अस्य विभागस्य अध्ययनं दुष्करम् इति हेतोः तत्र तत्र न्यायशैल्याः अपि विस्तरः प्रदर्शनीयत्वेन आपतति।

## अध्यायः - ३ अद्वैतवेदान्ते अध्यारोपः (पाठाः - ११-१६)

**अध्यायस्य औचित्यम्**

सकलदर्शनानां सामान्यपरिचयः, अद्वैवेदान्तस्य विशेषपरिचयः च माध्यमिकक्षायां कारितः। तथापि अद्वैतवेदान्तदर्शनेन स्वस्य सिद्धान्ताः कथं सिद्धान्तिताः, काभिः युक्तिभिः समर्थिताः, युक्तिप्रदर्शनस्य प्रमाणानि वा कानि इत्यादिसर्वमपि सविस्तरं ज्ञातव्यम् भवति छात्रेण। अतः दर्शनेषु मूर्धन्यस्य दर्शनस्यैव सविस्तरं परिचयो भवतु इति धिया अद्वैतवेदान्तस्य प्रकरणशः विभागं परिकल्प्य द्वादश्याम् उपन्यस्यन्ते। तत्र ब्रह्म माया इति ज्ञानोत्तरं कथम् अध्यासः भवति, कथं ततः सृष्टिः भवति इति विषयः अत्र उपन्यस्तः। अयं विषयः अध्यारोपः इत्युच्यते।

## अध्यायः - ४ अद्वैतवेदान्ते अपवादः (पाठाः - १७-२७)

**अध्यायस्य औचित्यम्**

पूर्वभागे अध्यारोपः ज्ञातः। अध्यारोपस्य अपवादः कथं कर्तव्यः इति विषयः अत्र प्रमुखो भवति। अत्र अस्थात्रयं पञ्चकोशाः महावाक्यविचारः समाधिः तत्साधनमितीमे विषयाः अत्र प्रतिपाद्याः सन्ति। वेदान्तस्य जगति प्रचारस्य प्रमुखं कार्यं येन कृतं यद्वशाद् भारतीयज्ञानस्य गौरवं जगति वर्तते तस्य स्वामिनो विवेकानन्दस्य मतं किमिति विषये एकः अन्ते योजितः अस्ति।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

उच्चतरमाध्यमिककक्षायाः भारतीयदर्शनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति -

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | अध्यायः- १ | **सांख्यदर्शनम्-** | ३६ | १२ |
| | पाठः - १ | प्रकृतिपुरुषपरिचयः- सांख्यपदस्यार्थः, सांख्याचार्याः, तद्ग्रन्थाः, सांख्यतत्त्वानां सामान्यपरिचयः, पुरुषः, बन्धः, मोक्षः | | |
| | पाठः - २ | प्रकृतिपुरुषपरिचयः- प्रकृतिः। प्रधानतत्त्वम्। गुणत्रयविचारः। पुरुषबहुत्वविचारः। साम्यावस्था। प्रकृतेः प्रवृत्तिः। | | |
| | पाठः - ३ | सृष्टिविचारः- सृष्टितत्त्वम्। सृष्टपदार्थाः। सृष्टिकारणम्। सृष्टिप्रयोजनम्। | | |
| | पाठः - ४ | सत्कार्यवादः- साधकयुक्तयः। शून्यकार्यवादः। असत्कार्यवादः। विवर्तवादः। विरोधिवादखण्डनम्। | | |
| २ | अध्यायः- २ | **वेदान्ते प्रमाणानि-** | ६० | ३० |
| | पाठः - ५ | प्रमाणानि- षट्प्रमाणानि। भूमिका, दर्शन, ज्ञानादि, प्रमा | | |
| | पाठः - ६ | प्रमाणानि- प्रत्यक्षप्रमाणम्। लक्षणम्। परिष्कारः। प्रत्यक्षत्वप्रयोजकविचारः। | | |
| | पाठः - ७ | प्रमाणानि- प्रत्यक्षप्रमाणभेदाः। लक्षणानि। | | |
| | पाठः - ८ | प्रमाणानि- अनुमानम् - लक्षणम्। न्यायः। सद्धेतुः। मिथ्यात्वम्। उपमानम् च। | | |
| | पाठः - ९ | प्रमाणानि- आगमः। वृत्तिः। वाक्यर्थबोधे हेतवः। | | |

| | | | | |
|---|---|---|---|---|
| | पाठः - १० | प्रमाणानि- अर्थापत्तिः, अनुपलब्धिः, प्रामाण्यम्। | | |
| **३** | **अध्यायः-३** | **अद्वैतवेदान्ते अध्यारोपः-** | **५४** | **२२** |
| | पाठः - ११ | ब्रह्मलक्षणम्- ब्रह्मपदस्यार्थः। ब्रह्मणः स्वरूपलक्षणम्, तटस्थलक्षणम्। निर्गुणब्रह्म। सगुणब्रह्म। | | |
| | पाठः - १२ | मायालक्षणम्- मायापदस्यार्थः। मायाः लक्षणम्, अनादित्वम्, त्रिगुणात्मकत्वम्। मायासत्त्वे प्रमाणानि। मायाया एकत्वबहुत्वविचारः। | | |
| | पाठः - १३ | अध्यासः- अध्यासप्रयोजनम्। पदव्यत्पत्तिः। स्वरूपम्, निमित्तम्, फलम्। अध्याससत्त्वे प्रमाणम्। | | |
| | पाठः - १४ | अध्यासः ख्यातिः विवर्तः परिणामः च- अध्यासकारणानि। अध्यासस्वरूपम्। सत्तात्रयम्। विवर्तपरिणामयोः स्वरूपम्। | | |
| | पाठः - १५ | सृष्टिविचारः- सृष्टिश्रुतीनाम् प्रयोजनम् । अध्यारोपापवादन्यायः। कार्यकारणयोरनन्यत्वम्। | | |
| | पाठः - १६ | सृष्टिप्रलयविचारः- अविद्या। तस्याः शक्तिद्वयम्। पञ्चीकरणम्। प्रलयविचारः। | | |
| **४** | **अध्यायः- ४** | **अद्वैतवेदान्ते अपवादः-** | **९०** | **३६** |
| | पाठः - १७ | अवस्थात्रयविवेकः-जाग्रत्स्वप्नसुषुप्तयः। विश्ववैश्वानरादिकम्। | | |
| | पाठः - १८ | पञ्चकोशविवेकः- अध्यारोपापवादौ। अन्नमयादिपञ्चकोशः। तेभ्यः भिन्न आत्मा। ब्रह्मणः उपाधिवशाद् भेदः। | | |
| | पाठः - १९ | महावाक्यविचारः- चतुर्णाम् महावाक्यानां तात्पर्यम्। | | |
| | पाठः - २० | महावाक्यविचारः- पदान्वयविचारः। लक्षणादीनाम् उपयोगः। पदार्थसंशोधनम्। | | |
| | पाठः - २१ | साधनविचारः-१ अनुबन्धः कर्म, निष्कामकर्म। | | |
| | पाठः - २२ | साधनविचारः-२ निष्कामकर्म, उपासना | | |
| | पाठः - २३ | साधनविचारः-३ साधनचतुष्टयम् श्रवणादि । | | |
| | पाठः - २४ | समाधिस्वरूपम्। निदिध्यासनम्। समाधिभेदाः। चित्तवृत्तिः। | | |
| | पाठः - २५ | समाधेरङ्गानि। अन्तरायाः। | | |
| | पाठः - २६ | जीवन्मुक्तिः, विदेहमुक्तिः- अहम् ब्रह्मास्मि। अखण्डाकाराकारिता चित्तवृत्तिः। कर्मत्रैविध्यम्। लक्षणम्। | | |
| | पाठः - २७ | विवेकानन्दवेदान्तचिन्तनम् - विवेकानन्दमतेन वेदान्तस्य व्यावहारिकता। योगसमन्वयः। आधुनिकता। प्रासङ्गिकता। | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - भारतीयदर्शनम् (३४७) (Bharatiya Darshan) स्तरः- उच्चतरमाध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. सांख्यदर्शनम् | १२ | ३६ |
| २. वेदान्ते प्रमाणानि | ३० | ६० |
| ३. अद्वैतवेदान्ते अध्यारोपः | २२ | ५४ |
| ४.अद्वैतवेदान्ते अपवादः | ३६ | ९० |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No. अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ | Code No. गूढसंख्या | ५५/SS/A/S |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|

स्तबकः **A**

## Bharatiya Darshan

## भारतीयदर्शनम्

## (३४७)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ____________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ____________________

२) ____________________

## सामान्या निर्देशाः

१. अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।

२. निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।

३. वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।

४. समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।

५. उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।

६. स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।

७. समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# भारतीयदर्शनम् (Bharatiya Darshan)

## (३४७)

**परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs)** **पूर्णाङ्काः (Full Marks) - १००**

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे ११, [B] भागे ११, [C] भागे ११, [D] ६ इति आहत्य ३९ प्रश्नाः सन्ति।

२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।

३. समे प्रश्ना अनिवार्याः।

[A] दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) प्रधानादीनाम् अप्रत्यक्षत्वं कुतः।

(क) अतिदूरात् (ख) सौक्ष्म्यात् (ग) व्यवधानात् (घ) समानाभिहारात्

२) षोडशको गणः कस्मादुत्पद्यते।

(क) प्रकृतेः (ख) महत्तत्त्वात् (ग) अहङ्कारात् (घ) पुरुषात्

३) प्रातिभासिकसत्तायाः लक्षणं किम्।

(क) कालत्रयाबाध्यत्वम् (ख) ब्रह्मज्ञानबाध्यत्वम्

(ग) अज्ञानबाध्यत्वम् (घ) ब्रह्मज्ञानेतरज्ञानबाध्यत्वम्

४) अध्यासशब्दे अस्-धातुः किंगणीयः।

(क) भ्वादिगणीयः (ख) अदादिगणीयः (ग) दिवादिगणीयः (घ) जुहोत्यादिगणीयः

५) ब्रह्म सर्वत्र केन सम्बन्धेन वर्तते।

(क) संयोगेन (ख) समवायेन (ग) स्वरूपेण (घ) तादात्म्येन

६) शुक्तिरजतभ्रमस्थले रजतं विज्ञानस्वरूपम् इति केषां मतम्।

(क) आत्मख्यातिवादिनाम् (ख) अख्यातिवादिनाम्

(ग) अन्यथाख्यातिवादिनाम् (घ) असत्ख्यातिवादिनाम्

७) अयं न ब्रह्मशब्दस्य पर्यायः।

(क) संविद् (ख) आत्मा (ग) माया (घ) ज्ञानम्

८) वेदान्तसारस्य रचयिता कः।

(क) विद्यारण्यः (ख) सदानन्दयोगीन्द्रः (ग) शंकराचार्यः (घ) गौडपादाचार्यः

९) भविष्यति इति प्रतीतिविषयः अभावः कः।

(क) प्रागभावः (ख) प्रध्वंसाभावः (ग) अत्यन्ताभावः (घ) विशिष्टाभावः

१०) पर्वतो वह्निमान् धूमात् इत्यनुमाने साध्यं किम्।

(क) पर्वतः (ख) वह्निः (ग) वह्नित्वम् (घ) धूमः

[B] दशानां यथानिर्देशम् उत्तराणि लिखत। २ x १०=२०

१) पुरुषबहुत्वप्रतिपादिका सांख्यकारिका का। पुरुषबहुत्वप्रतिपादकं सांख्यसूत्रं किम्। १+१=२

२) को नाम विवर्तः, कश्च तस्य दृष्टान्तः। १+१=२

३) कः सम्बन्धाध्यासः। किञ्च तदुदाहरणम्। १+१=२

४) अन्यथाख्यातिवादिनः के। अन्यथाख्यातेः अपरं नाम किम्। १+१=२

५) किं तावत् शुक्तिरजतस्य परिणाम्युपादानम्। किञ्च विवर्तोपादानम्। १+१=२

६) ऋग्वेदस्य यजुर्वेदस्य च महावाक्यं द्वयं लिखत। १+१=२

७) श्रवणस्य लिङ्गानि कति। कानि च तानि। १+१=२

८) छान्दोग्ये माण्डुक्ये च विद्यमाने महावाक्ये लिखत। १+१=२

९) वेदान्तमते कति प्रामाणानि। कानि च तानि। १+१=२

१०) का अतिव्याप्तिः। लक्षणस्य असम्भवदोषः कः। १+१=२

[C] दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

१) अध्यासलक्षणं निरूपयत। अथवा ख्यातिवादं तद्भेदान् च वर्णयत।

२) अध्यासपदार्थं निरूपयत। अथवा अध्यासभेदान् आलोचयत।

३) रजतभ्रमकाले कुतः देशान्तरीयस्य रजतस्य न भानम्। अथवा अप्पयदीक्षितकृतं परिणामविवर्तयोः लक्षणं विवृणुत।

४) अहम् ब्रह्मास्मि इत्यत्र अहंपदस्य अर्थम् आलोचयत। अथवा अर्थवादं फलं च निरूपयत।

५) प्रज्ञानं ब्रह्म इत्यत्र प्रज्ञानशब्दस्य अर्थं प्रतिपादयत। अथवा गुरुमहिमानं वर्णयत।

६) महावाक्यं नाम किम्। कानि च महावाक्यानि। तानि च कुत्र वर्तन्ते। अथवा अजहल्लक्षणां सोदाहरणं वर्णयत।

७) अपवादम् कुरुत। अथवा अध्यारोपं संक्षेपेण प्रतिपादयत।

८) दर्शनभेदान् प्रकटयत। अथवा मोक्षस्य परमत्वं प्रतिपादयत।

९) सविकल्पकं प्रत्यक्षं विवृणुत। अथवा सन्निकर्षान् संक्षेपेण आलोचयत।

१०) न्यायसम्मतम् अनुमितिक्रमं लिखत। अथवा समासेन उपमानम् आलोचयत।

[D] पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) पुरुषसद्भावे यानि कारणानि सांख्यकारिकायां निगदितानि तेषां सक्षेपेण परिचयः प्रदीयताम्। अथवा पुरुषबहुत्वसाधकाः हेतवः विस्तरेण विचार्यन्ताम्।

२) तत्त्वमसि इति महावाक्यस्य तत्त्वंपदयोः लक्ष्यार्थं वाच्यार्थं च प्रतिपादयत। अथवा अयमात्मा ब्रह्म इति महावाक्यं पञ्चदशीकाराणां मतेन विवृणुत।

३) षड्विधानि लिङ्गानि आलोचयत। अथवा ब्रह्मणः स्वरूपं वर्णयत।

४) दर्शनशब्दस्य व्युत्पत्तिभेदेन अर्थभेदान् उपस्थापयत। अथवा पुरुषार्थं सयुक्ति विशयदयत।

५) शब्दप्रमाणलक्षणम् उपपादयत। अथवा जहल्लक्षणास्वरूपं प्रतिपादयत।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

[A] दशानां युक्तः विकल्पः। १ x १०=१०

१-ख), २-ग), ३-घ), ४-ग), ५-घ), ६-क), ७-ग), ८-ख), ९-क), १०-ख)

[B] दशानां यथानिर्देशम् उत्तराणि। २ x १०=२०

१) पुरुषबहुत्वप्रतिपादिका सांख्यकारिका - जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥ पुरुषबहुत्वप्रतिपादकं सांख्यसूत्रं - जन्मादिव्यवस्थातः पुरुषबहुत्वम्। १+१=२

२) पूर्वरूपापरित्यागेन असत्यनानाकारेण प्रतिभासः विवर्तः। यथा - शुक्तिकायां रजतस्य, रज्ज्वां वा सर्पस्य प्रतीतिः।१+१=२

३) एकस्मिन् धर्मिणि सम्बन्धमात्रस्य आरोपो हि सम्बन्धाध्यासः। उदाहरणम् - यथा आत्मनि सम्बन्धहीनस्य शरीरस्य सम्बन्धम् अध्यस्य भवति प्रयोगः मम शरीरम् इति। १+१=२

४) अन्यथाख्यातिवादिनः भाट्टाः नैयायिकाश्च। अन्यथाख्यातेः अपरं नाम विपरीतख्यातिः इति। १+१=२

५) शुक्तिविषयकम् अज्ञानं हि शुक्तिरजतस्य परिणाम्युपादानकारणम्। शुक्त्यवच्छिन्नचैतन्यं च विवर्तोपादानकारणम्। १+१=२

६) ऋग्वेदस्य महावाक्यम् - प्रज्ञानं ब्रह्म। यजुर्वेदस्य महावाक्यम् - अहं ब्रह्मास्मि इति। १+१=२

७) श्रवणस्य षड् लिङ्गानि सन्ति। तानि च उपक्रमोपसंहारौ अभ्यासः अपूर्वता फलम् अर्थवादः उपपत्तिश्चेति।१+१=२

८) छान्दोग्ये महावाक्यम् - तत्त्वमसि इति। माण्डुक्ये महावाक्यम् - अयमात्मा ब्रह्म इति। १+१=२

९) वेदान्तमते षट् प्रामाणानि। तानि च प्रत्यक्षम् अनुमानम् उपमानम् शब्दः अर्थापत्तिः अनुपलब्धिश्च। १+१=२

१०) यावल्लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् अतिव्याप्तेः लक्षणम्। लक्ष्यमात्रावृत्तित्वम् असम्भवस्य लक्षणम्।१+१=२

[C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

१) बिन्दुः- १३.३ / १४.५ द्रष्टव्यः
२) बिन्दुः- १३.२ / १३.४ द्रष्टव्यः
३) बिन्दुः- १४.१ / १४.६ द्रष्टव्यः
४) बिन्दुः- १९.५ / १९.२ द्रष्टव्यः
५) बिन्दुः- १९.३ / १९.४ द्रष्टव्यः
६) बिन्दुः- १९.१ /२०.५ द्रष्टव्यः
७) बिन्दुः- १५.३ / १५.३ द्रष्टव्यः
८) बिन्दुः- ५.२ / ५.४ द्रष्टव्यः
९) बिन्दुः- ७.२ / ७.२.२ द्रष्टव्यः
१०) बिन्दुः- ८.१ / ८.५ द्रष्टव्यः

[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) बिन्दुः- १.११ / २.१ द्रष्टव्यः
२) बिन्दुः- २०.५ / २०.६ द्रष्टव्यः
३) बिन्दुः- १९.२ / १९.३ द्रष्टव्यः
४) बिन्दुः- ५.१ / ५.४ द्रष्टव्यः
५) बिन्दुः- ९.१ / ९.२ द्रष्टव्यः